# THE
# MAHĀBHĀRATA

**(Southern Recension)**

For the first time critically edited by


VIDYASAGARA VIDYAVACHASPATI

**P. P. S. SASTRI, B. A. (OXON), M.A.,**

*Professor of Sanskrit and Comparative Philology*
*Presidency College, Madras, and Editor*
*Descriptive Catalogues of Sanskrit*
*and Telugu Mss. in the Tanjore*
*Palace Library.*


---

## Vol. XIV—S'ĀNTI PARVAN. PART—II

---


PUBLISHED BY

V. RAMASWAMY SASTRULU & SONS

292, ESPLANADE, MADRAS.


---

॥ श्रीरस्तु ॥

# ॥ श्रीमन्महाभारतम् ॥

तत्र

# शान्तिपर्वणि

## द्वितीयो भागः

मद्रपुरराजकीयकलाशालासंस्कृताचार्यैः
बि. ए. (आक्सन्), एम्. ए. (मद्रास्)
इत्यादिबिरुदाङ्कितैः
विद्यासागर विद्यावाचस्पति. पि. पि. सुब्रह्मण्यशास्त्रिभिः
दाक्षिणात्यशाखानुसारेण सविमर्शं संशोधितः

आम्नायवचनं सत्यम् इत्ययं लोकसङ्ग्रहः ।
आम्नायेभ्यः पुनर्वेदाः प्रसृतास्सर्वतोमुखाः ॥
ते चेत् सर्वे प्रमाणं वै नाप्रमाणं तु विद्यते ।
प्रमाणं चेत् प्रमाणेन विरुध्येच्छास्त्रता कुतः ॥

शान्ति-२४५-९-१०



चेन्नपुर्यां
वाविळ्ळ रामस्वामिशास्त्रुलु अण्ड् सन्स्
इत्येतैः सम्मुद्र्य प्रकाशितम्

# INTRODUCTION.

## I

The S'ānti Parvan is issued in three volumes. The first volume deals with chapters 1—120, comprising the whole of Rājadharma proper; the second volume deals with chapters 121-148 comprising the whole of Āpaddharma proper and chapters 149–260 of the Mokṣadharma. The third volume deals with chapters 261–339, completing the Mokṣadharma which is the last sub-parvan of the S'ānti Parvan.

In the preparation of this volume for the Press, the following manuscripts fully representative of the Southern Recension, were utilised.

अ—represents the Principal Text printed. The Manuscript belongs to Brahma Sri Krishna Sastrigal, Palace Pauranikar, Trivandrum. Its description is as follows:—Substance—palm-leaf; Size—18 × 2⅜ inches; Leaves—

410; Lines—10-12 to a page; Script-Grantha; S'ānti Parvan Complete.

क—is used for additional readings, etc. The Manuscript belongs to His Highness the Maharaja of Travancore and was made available to us through the kindness of Sir C. P. Ramaswami Aiyer, K. C. I. E. Its description is as follows:—Substance—palm-leaf; Size—$28\frac{1}{2} \times 1\frac{7}{8}$ inches; Leaves:—439; Lines 9-10 to a Page; Script- Tamil—Grantha; S'ānti Parvan complete: Date of Transcription—1791 A. D.

ख—is used for additional readings, etc. to the end of p. 870. The Manuscript belongs to Mr. R. S. Rajagopala Ayyar, Advocate, Trichnopoly, whose native village is Nalloor in the Tanjore District. Its description is as follows:— Substance— palm-leaf ; Size—$15\frac{1}{4} \times 2\frac{1}{4}$ inches ; Lines—18-20 to a page ; Leaves (346-438); Script-Grantha. S'ānti Parvan - Rājadharma and Āpaddharma complete.

From p. 871 onwards, a new Manuscript ख is used for additional readings etc. The Manuscript belongs to Mr. Subba Rao (Rayar House) of Vira-vanallur village in the Tinnevelly District. Its description is as follows :—Substance—palm-leaf; Size–16 x 1¾ inches; Lines—9 to a page; Leaves 242; Script-Grantha; Santi Parvan–Moksadharma-breaks off at the end.

घ—is used for additional readings etc. The Manus-cript was procured for us by Mr. K. K. Lakshminarayana Iyer of Kadayam village in the Tinnevelly District from Mr. Natesa Iyer. Its description is as follows :— Substance—palm-leaf; Size—17⅜ x 1¾ inches Leaves—410; Lines—9–10 to a page; Script-Grantha; S'ānti Parvan complete. Date of Transcription—1842 A. D.

II

From the Parvasaṅgraha-Parvan to the Ādi Parvan, it will be observed that the S'ānti Parvan

should consist of 329 chapters and 14725 stanzas according to the Northern Recension and 339 chapters and 14525 stanzas only according to the Southern Recension. Our remarks regarding the scheme of chapters and the total number of stanzas in the S'ānti Parvan according to the Principal Text printed are held over for inclusion in Volume XV which completes the S'ānti Parvan.

All Manuscripts representative of the Southern Recension of the S'ānti Parvan, agree in dividing the S'ānti Parvan into two main sub-parvans, the Rājadharma Parvan and the Mokṣa-dharma Parvan. The former Rājadharma - Parvan includes the Āpaddharma section also according to the colophons in all the Manuscripts. However, we know from the Parvasaṅgraha Parvan of the Ādi Parvan (Southern Recension, Vol. I pp. 50-1) that the S'ānti Parvan consists of six sub-parvans—Abhiṣecanikaparvan (chapter 1-33 and 35-38) Cārvākanigrahaparvan (chapter 34) Gṛhapravibhāgaparvan (chapter 39) Rājadharmaparvan (chapters 40-120) Āpaddharmaparvan (chapters 121-148

and Mokṣadharmaparvan (chapters 149 339). In editing the Principal Text of the Southern Recension, we have therefore divided the S'ānti Parvan into the above six sub-parvans, so as to preserve in tact the scheme of one hundred sub-parvans for the entire Mahābhārata.

---

# III

## SCHEME OF ADHYAYAS.

| No. | Name of Parva. | As stated in the Anukramanikadhyaya to the Northern Recension Manuscripts and Editions. | As actually divided in the Northern Recension Printed Edition; Poona with Bhavadipa 1929—1933. | As actually divided in the Kumbakonam Edition 1906—1910 Mixed version of both Recensions. | As stated in the Anukramanikadhyaya to Southern Recension Manuscripts. | As actually divided in the Southern Recension printed in Madras by the Vavilla Press 1931—1936. |
|---|---|---|---|---|---|---|
| I | Adi | 227 | 234 | 260 | 218 | 218 |
| II | Sabha | 78 | 81 | 103 | 72 | 72 |
| III | Aranya | 269 | 315 | 315 | 269 | 269 |
| IV | Virata | 67 | 72 | 78 | 67 | 67 |
| V | Udyoga | 186 | 196 | 196 | 186 | 186 |
| VI | Bhishma | 117 | 122 | 122 | 118 | 118 |
| VII | Drona | 170 | 202 | 203 | 170 | 170 |

| | | | | | | |
|---|---|---|---|---|---|---|
| VIII | Karna | 69 | 96 | 101 | 69 | 110 |
| IX | Salya | 59 | 65 | 66 | 59 | 59 |
| X | Sauptika | 18 | 18 | 18 | 18 | 18 |
| XI | Stri | 27 | 27 | 27 | 27 | 27 |
| XII | Santi | 329 | 365 | 375 | 339 | 339 |
| XIII | Anusasana | 146 | 168 | 272 | 156 | 156 |
| XIV | Asvamedhika | 103 | 92 | 118 | 133 | 133 |
| XV | Asramavasika | 42 | 39 | 41 | 42 | 42 |
| XVI | Mausala | 8 | 8 | 9 | 8 | 8 |
| XVII | Mahaprasthanika | 3 | 3 | 3 | 3 | 3 |
| XVIII | Svargarohana | 5 | 5 | 5 | 5 | 5 |
| | | 1923 | 2108 | 2312 | 1959 | 2000 |

IV

# CONCORDANCE.

## S'ĀNTI PARVAN. PART—II

| (1931) Poona Edition with Bhavadipa Chapter. | (1907) Kumbakonam Edition Chapter. | Manuscripts of the Southern Recension Chapter. | (1936) Southern Recension Chapter. |
|---|---|---|---|
| 131 | 131 | 133 | 121 |
| 132 | 132 | 134 | 122 |
| 133 | 133 | 135 | 123 |
| 134 | 134 | 136 | 124 |
| 135 | 135 | 137 | 125 |
| 136 | 136 | 138 | 126 |
| 137 | 137 | 139 | 127 |
| 138 | 138 | 140 | 128 |
| 139 | 139 | 141 | 129 |
| 140 | 140 | 142 | 130 |
| 141 | 141 | 143 | 131 |
| 142 | 142 | 144 | 132 |
| 143 | 143 | 145 | 133 |
| 144 | 144 | 146 | 134 |
| 145 | ,, | ,, | ,, |
| 146 | 145 | 147 | ,, |
| 147 | 146 | ,, | ,, |
| 148 | 147 | 148 | ,, |
| 149 | 148 | 149 | ,, |
| 150 | 149 | 150 | 135 |
| 151 | 150 | 151 | ,, |
| 152 | 151 | 152 | ,, |
| 153 | 152 | 153 | 136 |
| 154 | 153 | 154 | 137 |
| 155 | 154 | ,, | ,, |
| 156 | 155 | 155 | ,, |
| 157 | ,, | ,, | ,, |
| 158 | 156 | 156 | 138 |
| 159 | 157 | 157 | 139 |
| 160 | 158 | 158 | 140 |
| 161 | 159 | 159 | 141 |
| 162 | 160 | 160 | 142 |

| Poona Edition with Bhavadipa Chapter. | Kumbakonam Edition Chapter. | Manuscripts of the Southern Recension Chapter. | Southern Recension Chapter. |
|---|---|---|---|
| 163 | 161 | 161 | 143 |
| 164 | 162 | " | " |
| 165 | 163 | 162 | 144 |
| 166 | 164 | 163 | 145 |
| 167 | 165 | 164 | 146 |
| 168 (1-27) | 166 | 165 | 147 |
| " (28-52) | 167 | 166 | 148 |
| 169 | 168 | 167 | " |
| 170 | 169 | 168 | " |
| 171 | 170 | 169 | " |
| 172 | 171 | 170 | " |
| 173 | 172 | 171 | " |
| 352 | 362 | 1 | 149 |
| 353 | 363 | 2 | 150 |
| 354 | 364 | 3 | 151 |
| 355 | 365 | 4 | 152 |
| 356 | 366 | 5 | 153 |
| 357 | 367 | 6 | 154 |
| 358 | 368 | 7 | 155 |
| 359 | 369 | 8 | 156 |
| 360 | 370 | 9 | 157 |
| 361 | 371 | 10 | 158 |
| 362 | 372 | 11 | 159 |
| 363 | 373 | 12 | 160 |
| 364 | 374 | 13 | 161 |
| 365 | 375 | 14 | 162 |
| 174 | 173 | 15 | 163 |
| 175 | 174 | 16 | 164 |
| 176 | 175 | 17 | 165 |
| 177 | 176 (1-54) | 18 | 166 |
| 178 | " (55-68) | " | " |
| 179 | 177 | 19 | 167 |
| 180 | 178 | 20 | 168 |
| 181 | 179 | 21 | 169 |
| 182 | 180 | 22 | 170 |
| 183 | 181 | 23 | 171 |
| 184 | 182 | 24 | 172 |
| 185 | 183 | 25 | 173 |

| Poona Edition with Bhavadipa Chapter. | Kumbakonam Edition Chapter. | Manuscripts of the Southern Recension Chapter. | Southern Recension Chapter. |
|---|---|---|---|
| 186 | 184 | 26 | 174 |
| 187 | 185 | 27 | 175 |
| 188 | 186 | 28 | 176 |
| 189 | 187 | 29 | 177 |
| 190 | 188 | 30 | 178 |
| 191 | 189 | 31 | 179 |
| 192 | 190 | 32 | 180 |
| 193 | 191 | 33 | 181 |
| 194 | 192 | 34 | 182 |
| 195 | 193 | 35 | 183 |
| 196 | 194 | 36 | 184 |
| 197 | 195 | 37 | 185 |
| 198 | 196 | 38 | 186 |
| 199 | 197 | 39 | 187 |
| 200 | 198 | 40 | 188 |
| 201 | 199 | 41 | 189 |
| 202 | 200 | 42 | ,, |
| 203 | 201 | 43 | ,, |
| 204 | 202 | 44 † | ,, |
| 205 | 203 | 45 | ,, |
| 206 | 204 | 46 | ,, |
| Omitted | 205 | Omitted | 190 * |
| 207 | 206 | 47 | 191 |
| 208 | 207 | 48 | 192 |
| 209 | 208 | 49 | 193 |
| Omitted | 209 | Omitted | 194 * |
| Omitted | 210 | 50 | 195 |
| Omitted | 211 | Omitted | 196 * |
| 210 | 212 | 51 ‡ | 197 |
| 211 | 213 | 52 | ,, |
| 212 | 214 | 53 | ,, |
| 213 | 215 | 54 | ,, |
| 214 | 216 | 55 | ,, |

† ख—कोशे एका सङ्ख्या त्रुटिता ४४ स्थाने ४५ इति वर्तते

* एते अध्यायाः कृष्णाचार्यमुद्रितपुस्तके एव वर्तन्ते

‡ अ-क—कोशयोः प्रमादतया ५१ स्थाने ५० इति लिखितम्

| Poona Edition with Bhavadipa Chapter. | Kumbakonam Edition Chapter. | Manuscripts of the Southern Recension Chapter. | Southern Recension Chapter. |
|---|---|---|---|
| 215 | 217 | 56 | ,, |
| 216 | 218 | 57 | ,, |
| 217 | 219 | 58 | ,, |
| 218 | 220 | 59 | 198 |
| Omitted | 221 | Omitted | 199 * |
| 219 | 222 | 60 | 200 |
| Omitted | 223 | Omitted | 201 * |
| Omitted | 224 | Omitted | 202 * |
| 220 | 225 | 61 | 203 |
| 221 | 226 | 62 | 204 |
| Omitted | 227 | Omitted | 205 * |
| Omitted | 228 | Omitted | 206 * |
| 222 | 229 | 63 | 207 |
| 223 | 230 | 64 | 208 |
| 224 | 231 | 65 | 209 |
| 225 | 232 | 66 | 210 |
| 226 | 233 | 67 | 211 |
| 227 | 234 | 68 | 212 |
| 228 | 235 | 69 † | 213 |
| 229 | 236 | 70 | 214 |
| 230 | 237 | 71 | 215 |
| 231 | 238(1-65) | 72 | 216 |
| 232 | ,, (66-112) | 73 | 217 |
| 233 | 239 | 74 | 218 |
| 234 | 240 | 75 | 219 |
| 235 | 241 | 76 | 220 |
| 236 | 242 | 77 | 221 |
| 237 | 243 | 78 | 222 |
| 238 | 244 | 79 | 223 |
| 239 | 245 | 80 | 224 |
| 240 | 246 | 81 | 225 |
| 241 | 247 | 82 | 226 |
| 242 | 248 | 83 | 227 |
| 243 | 249 | 84 | 228 |

* एते अध्यायाः कृष्णाचार्यमुद्रितपुस्तके एव वर्तन्ते

† घ—कोशे ६९ अध्यायानन्तरं ८३ पर्यन्तं त्रुटितम्

| Poona Edition with Bhavadipa Chapter. | Kumbakonam Edition Chapter. | Manuscripts of the Southern Recension Chapter. | Southern Recension Chapter. |
|---|---|---|---|
| 244 | 250 | 85 | 229 |
| 245 | 251 | 86 | 230 |
| 246 | 252 | 87 | 231 |
| 247 | 253 | 88 | 232 |
| 248 | 254 | 89 | 233 |
| 249 | 255 | 90 | 234 |
| 250 | 256 | 91 | 235 |
| 251 | 257 | 92 * | 236 |
| 252 | 258 | 93 † | 237 |
| 253 | 259 | 94 | 238 |
| 254 | 260 | 95 | 239 |
| 255 | 261 | 96 | 240 |
| 256 | 262 | 97 | 241 |
| 257 | 263 | 98 | 242 |
| 258 | 264 | 99 | 243 |
| 259 | 265 | 100 | 244 |
| 260 | 266 | 101 | 245 |
| 261 | 267 | 102 | 246 |
| 262 | 268 | 103 | 247 |
| 263 | 269 | 104 | 248 |
| 264 | 270 | 105 ‡ | 249 |
| 265 | 271 | ″ | 250 |
| 266 | 272 | 106 | 251 |
| 267 | 273 | 107 | 252 |
| 268 | 274 | 108 | 253 |
| 269 | 275 | 109 | 254 |
| 270 | 276 | 110 | 255 |
| 271 | 277 | 111 | 256 |
| 272 | 278 | 112 | 257 |
| 273 | 279 | 113 | 258 |
| 274 | 280 | 114 | 259 |
| 275 | 281. | 115 | 260 |

* ख—कोशे अयमध्यायो नोपलभ्यते

† ख—कोशे ९३-९४-९५ अध्यायाः एकाध्यायतया वर्तन्ते

‡ अयमध्यायः अ-क—कोशयोः अध्यायद्वयात्मकम्;
ख—कोशे अध्यायत्रयात्मकम्

## V

From the Concordance, it will be seen that chapters 190, 194, 196, 199, 201, 202, 205, 206 of the Principal Text edited (Southern Recension) are conspicuous by their absence in the Northern Recension and in all the manuscripts representative of the Southern Recension. These chapters are, however, printed in the Kumbakonam Edition of the Mahābhārata, published by Mr. T.R. Krishnachariar. In his edition, Mr. Krishnacharya points out that these chapters were printed by him from a Manuscript designated ঘ belonging to Pāṇḍuraṅgi Rāmacandrācārya written in Telugu Script on palm-leaf. These chapters are highly significant as Vādirāja, the learned author of the commentary Lakṣālaṅkāra culls *Pratikas* from each of these chapters, proving thus that they are integral chapters of the Southern Recension. We have not yet been able to get at the original manuscript of Rāmacandrācārya. We have examined all the Manuscripts of S'ānti Parvan available at Tanjore and Madras. We have not yet been able to get at any manuscript containing the above chapters. The omission of these chapters in all our manuscripts representative of the Southern Recension and the inclusion of these chapters by Vādirāja, one of the earliest of Mahābhārata.

commentators raise textual problems of far-reaching importance to Mahābhārata Text-tradition. More of this in the next volume-Volume XV, which completes the S'ānti Parvan.

## VI

In regard to almost all the other Parvans of the Mahābhārata, we have been able to choose Manuscripts, thoroughly representative of the Southern Recension and written in as many South Indian scripts as possible, *i.e.*, Grantha, Malayalam and Telugu. In the case of the S'ānti Parvan, however, our attempts to get at reliable manuscripts written in Telugu Script have so far, proved fruitless. All the Manuscripts of the S'ānti Parvan written in the Telugu script and available at the famous manuscript libraries at Madras and Tanjore, as well as those belonging to several private parties, are invariably representative of the Northern Recension from our point of view. We have therefore been forced to edit this Parvan with the aid of representative and reliable manuscripts written in Grantha script alone. The manuscript क of the Trivandrum Palace, though written in Tamil-Grantha, is a fair representative of the Malayalam tradition as it belongs to a recognised family of manuscripts of Malayalam Script.

## VII

Among the critical apparatus available for fixing the Text-tradition of the Mahābhārata according to the Northern or Southern Recensions, commentators and their commentaries on the Mahābhārata are bound to play an important role. The more note-worthy of these are mentioned below.

(1) Vādirāja is the author of Lakṣālaṅkāra which favours the Southern Recension. He may be assigned to the thirteenth century A. D.

(2) Vais'ampāyana is the author of a Ṭikā and is referred to by Vimalabodha and Nārayaṇa, the author of Nigūḍārthabodhini.

(3) Devabodha is the author of Tātparyadipikā, known also as Jñānadipikā. He may be assigned to the middle of the fourteenth century A. D.

(4) Vimalabodha is the author of Durghaṭārthaprakās'ini. He quotes Devabodha.

(5) Sarvajnanārāyaṇa is the author of Bhāratārthaprakās'a. He may be assigned to the fifteenth century A. D.

(6) Arjunamis'ra is the author of Dipikā, known also as Arthadipikā. He quotes Sarvajnanārāyana.

(7) Nilakaṇṭha is the author of Bhāvadipa. He may be assigned to the sixteenth century A. D.

Of the above authors, we have at least some knowledge of their comparative chronology. There are others of whom no definite information regarding their age is so far available. Of these latter mention may be made of the following.

(8) Caturbhujamis'ra is the author of Tātparya-prakās'ini. Burnell mentions a Lakṣmaṇa, known also as Sāṇḍilya Lakṣmaṇa as the author of Prakās'a. Caturbhujamis'ra and Lakṣmaṇa are identical and not different personages.

(9) Ānandapūrṇa is the author of Ratnāvali. He is also known as Vidyāsāgara.

(10) Nandanācārya is the author of Dipikā.

(11) Ratnagarbha is the author of Ākūtacandrikā.

(12) Yegnanārāyaṇa is the author of Vivaraṇam.

(13) Paramānanda Bhaṭṭācārya is the author of Mitabhāṣiṇi.

(14) Srinivasa, the pupil of Pūrṇabodha is the author of Bhāvavivṛti.

(15) Rāmakṛṣṇa is the author of Virodhārtha-bhañjanī.

Of the above commentaries, only one, that of Nilakaṇṭha (No. 7) is available in full in print. All the others are available only in manuscripts scattered over the several libraries in India. In our introduction to Vol XV which completes the S'ānti Parvan, we propose to fix the chronology of all these fifteen commentators and estimate their contribution to the fixing of the Text-tradition of the Mahābhārata.

## VIII

Besides the omission of chapters 190, 194, 196, 199, 201, 202, 205 and 206 of the Principal Text edited (Southern Recension), the Northern Recension omits chapter 195 of the Southern Recension, wherein Bhiṣma narrates to Yudhisṭhira the advice given to Nārada by Srinārāyaṇa, as to what one should do on the approach of death.

The Presidency College,
Madras.
10—8—1936.

P. P. S. SASTRI,
*Editor.*

॥ श्रीरस्तु ॥

# महाभारतस्य शान्तिपर्वणि द्वितीयो भागः

तत्र

## ॥ विषयानुक्रमणिका ॥

---

### आपद्धर्मपर्व

अध्यायः पृष्टम्

## मोक्षधर्मपर्व

॥ श्रीः ॥

# ॥ महाभारतम् ॥

## ॥ १२ ॥ शान्तिपर्वणि ॥ १२ ॥

॥ द्वितीयसम्पुटम् ॥

## ॥ शान्तिपर्वणि - द्वितीयसम्पुटम् ॥

## ॥ एकविंशत्यधिकशततमोऽध्यायः ॥

### (आपद्धर्मपर्व)*

भीष्मेण युधिष्ठिरं प्रति आपदि राज्ञा सर्वस्वत्यागेनाप्यात्मनो रक्षणीयत्वकथनम् ॥

युधिष्ठिरः—

क्षीणस्य दीर्घसूत्रस्य सानुक्रोशस्य बन्धुषु ।
परिशङ्कितमुख्यस्य दुष्टमन्त्रस्य भारत ॥ १

विरक्तराज्यपौरस्य निर्द्रव्यनिचयस्य च ।
[1]असम्भावितमन्त्रस्य भिन्नामात्यस्य सर्वतः ॥ २

परचक्राभियातस्य दुर्बलस्य बलीयसा ।
आपन्नचेतसो ब्रूहि किं कार्यमवशिष्यते ॥ ३

भीष्मः—

बाह्यश्चेद्विजिगीषुस्स्याद् धर्मार्थकुशलश्शुचिः ।

---

* मातृकासु आमोक्षधर्मपर्वारम्भं "राजधर्मपर्व" इत्येव दृश्यते पर्वानुक्रमणिकामनुसृत्य "आपद्धर्मपर्व" इति पृथक्तया निवेशितमस्माभिः ।

1. क-ख-घ—असंविभागमन्त्रस्य

जवेन सन्धिं कुर्वीत पूर्वं पूर्वं विमोक्षयेत् ॥ ४

आत्मनस्सन्निरोधेन सन्धिं तेनापि रोचयेत् ॥ ४॥

अपास्य राजधानीं वा तरेदन्येन वाऽऽपदम् ।
तद्भावभावो द्रव्याणि जीवन् पुनरुपार्जयेत् ॥ ५॥

यास्तु स्युः केवलत्यागाच् छक्यास्तरितुमापदः ।
कस्तत्राधिकमात्मानं सन्त्यजेदर्थधर्मवित् ॥ ६॥

अपराधाज्जुगुप्सेत का सपत्नधने दया ।
न त्वेवात्मा प्रदातव्यश् शक्ये सति कथञ्चन ॥ ७॥

युधिष्ठिरः—

आभ्यन्तरे च कुपिते बाह्ये चोपनिपीडिते ।
क्षीणे कोशे श्रुते मन्त्रे किं कार्यमवशिष्यते ॥ ८॥

भीष्मः—

क्षिप्रं वा सन्धिकामस्स्यात् क्षिप्रं वा तीक्ष्णविक्रमः ।
प्रतापनयनं क्षिप्रम् एतद्वै साम्परायिकम् ॥ ९॥

अनुरक्तेन पुष्टेन हृष्टेन जगतीपतिः ।
अल्पेनापि स्वसैन्येन भूमिं जयति भूमिपः ॥ १०॥

हतो वा दिवमारोहेद्धत्वा वा सुखमावहेत् ।
युद्धे हि सन्त्यजन् प्राणाञ् शक्रस्यैति सलोकताम् ॥ ११॥

सर्वलोकागसं कृत्वा मृदुत्वं गन्तुमेव च ।

आश्वासाद्विनयं कुर्यात् सज्ञद्याद्वाऽप्युपानहौ ॥ १२॥

अपचङ्क्रमिषुः क्षिप्रं सेनां स्वां परिसान्त्वयेत् ।
विलङ्घिता च सत्रेण ततस्स्वयमुपक्रमेत् ॥ १३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये १३॥ श्लोकाः ]

---

## ॥ द्वाविंशत्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ब्राह्मणानामापदि राज्ञा असाधुजनधनापहारेणापि तद्रक्षणस्य करणीयत्वोक्तिः ॥

---

युधिष्ठिरः—

हीने परमके धर्मे सर्वलोकातिलङ्घने ।
सर्वस्मिन् दस्युसाद्भूते पृथिव्यामुपजीवने ॥ १

केन स्विद्ब्राह्मणो जीवेज् जघन्ये काल आगते ।
असन्त्यजन् पुत्रपौत्रान् अनुक्रोशात् पितामह ॥ २

भीष्मः—

विज्ञानबलमास्थाय जीवितव्यं तदा भवेत् ।
सर्वं साध्वर्थमेवेदम् असाध्वर्थं न किञ्चन ॥ ३

असाधुभ्योऽर्थमादाय साधुभ्यस्सम्प्रयच्छति ।
आत्मानं सङ्क्रमं कृत्वा कृत्स्नधर्मकृदेव सः ॥ ४

अरोषेणात्मनो राजन् राष्ट्रे स्थितिमकोपयन् ।
अदत्तमप्याददीत भ्रातुर्वित्तं ममेति वा ॥ ५

विज्ञानलब्धपूतो यो वर्तते निन्दितेष्वपि ।
वृत्तविज्ञानवान् धीरः कस्तं वक्तुमिहार्हति ॥ ६

येषां बहु[1]मता बुद्धिस् तेषामन्या न रोचते ।
तेजसा ते प्रवर्तन्ते बलवन्तो युधिष्ठिर ॥ ७

यदेवमकृतं शास्त्रं जनस्तदनुवर्तते ।
तदेवमभ्यासेवन्ते मेधावी चाऽप्यथोत्तरम् ॥ ८

ऋत्विक्पुरोहिताचार्यास् सत्कृतैरपि सत्कृताः ।
नाब्राह्मणान् याजयीत दोषान् प्राप्नोति याजयन् ॥ ९

एतत् प्रमाणं लोकस्य चक्रिरे तत् सनातनम् ।
तत्प्रमाणोऽवगाहेत तेन तत् साध्वसाधु वा ॥ १०

बहवो ग्रामवास्तव्या दोषान् ब्रूयुः परस्परम् ।
न तेषां वचनाद्राजा सत्कुर्याद्घातयेत वा ॥ ११

न वाच्यः परिवादो वै न श्रोतव्यः कथञ्चन ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥ १२

---

1. ख—कृता घ—तरा

न सतां शीलमेतद्वै परिवादो न पैशुनम् ।
गुणानामेव वक्तारस् सन्तो नित्यं युधिष्ठिर ॥ १३

यथा सुमधुरौ दम्यौ सुदान्तौ साधुवाहिनौ ।
धुरमुद्यम्य वहतस् तथा वर्तेत वै द्विजः ॥ १४

यथा यथाऽस्य बहवस् सहायास्स्युस्तथा चरेत् ।
आचारादेव मन्यन्ते गरीयो धर्मलक्षणम् ॥ १५

अपरे नैवमिच्छन्ति ये शङ्खलिखितप्रियाः ।
अर्थक्षीणोऽथ वा लुब्धस् ते ब्रूयुर्वाक्यमीदृशम् ॥ १६

आर्षमप्यत्र पश्यन्ति [1]विकर्मस्थस्य यातनम् ।
न चार्षात् सदृशं किञ्चित् प्रमाणं दृश्यते क्वचित् ॥ १७

देवा ह्यपि विकर्मस्थं घातयन्ति नराधमम् ।
व्याजेन वित्तं विन्दन् हि धर्मतः परिहीयते ॥ १८

सर्वतस्सत्कृतस्सद्भिर् भूतिप्रभवकारणैः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं व्यवस्यति ॥ १९

यश्चतुर्गुणसम्पन्नं धर्मं वेद स धर्मवित् ।
अहेरिव हि धर्मस्य पदं दुःखं गवेषितुम् ॥ २०

यथा मृगस्य विद्धस्य मृगव्याधः पदं नयेत् ।
कक्षे रुधिरपातेन तथा धर्मपथं नयेत् ॥ २१

---

1. ख-घ—विक्रमस्थस्य यातनाम्

यथा सम्यग्विनीतेन पथा गन्तव्यमप्युत ।
राजर्षीणां वृत्तमेतद् एवं गच्छ युधिष्ठिर ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये २२ श्लोकाः ]

---

## ॥ त्रयोविंशत्यधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरंप्रति राज्ञा यथाकथञ्चित्कोशवृद्धेः कर्तव्यत्वोक्तिः ॥ २ ॥ तथा दस्युभिरापद्यपि सावशेषं परस्वापहरणस्य धर्म्यत्वोक्तिः ॥२॥

---

भीष्मः—

स्वराष्ट्रात् परराष्ट्राच्च कोशं सञ्जनयेन्नृपः ।
कोशाद्धि धर्मः कौन्तेय राज्यमूलं प्रवर्तते ॥ १

तस्मात् सञ्जनयन् कोशं सत्कृत्य परिपालयन् ।
परिपाल्यानुगृह्णीयाद् एष धर्मस्सनातनः ॥ २

स कोशश्शुद्धभावेन नानृशंस्येन जायते ।
मध्यमं पदमास्थाय कोशसङ्ग्रहणं चरेत् ॥ ३

अबलस्य कुतः कोशो ह्यकोशस्य कुतो बलम् ।
अबलस्य कुतो राज्यम् अराज्ये श्रीः कुतो भवेत् ॥ ४

उच्चैर्वृत्तेश्श्रियो हानिर् यथैव मरणं तथा ।
तस्मात् कोशं बलं मित्राण्यथ राजा विवर्धयेत् ॥		५

हीनकोशं हि राजानम् अवमन्यन्ति शत्रवः ।
न चास्याल्पेन तुष्यन्ति कर्मणा[1]प्युत्सहन्ति च ॥		६

श्रियो हि कारणं राजा सत्क्रियां लभते पराम् ।
साऽस्य गूहति पापानि वासः पापमिव स्त्रियाः ॥		७

बुद्धिमस्यानुतप्यन्ते पुरा विप्रकृता नराः ।
सालावृका इवासस्तुर् जिघांसूनेव विन्दति ॥		८

ईदृशस्य कुतो राज्यं सुखं भरतसत्तम ॥		८॥

उद्यच्छेदेव न ग्लायेद् उद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेतेह कस्यचित् ॥		९॥

अप्यरण्यं समाश्रित्य चरेद्दस्युगणैस्सह ।
न त्वेवोद्रिक्तमर्यादैर् दस्युभिस्सहितश्चरेत् ॥		१०॥

दस्यूनां सुलभा सेना रौद्रकर्मसु भारत ।
एकान्ततो ह्यमर्यादात् सर्वे उद्विजते जनः ॥		११॥

दस्यवोऽप्यनुशङ्कन्ते निरनुक्रोशकारिणः ॥		१२

स्थापयेदेव मर्यादां जनचित्तप्रसादिनीम् ।
अल्पा ह्यर्थेषु मर्यादा लोके भवति पूजिता ॥		१३

---

1. क-ख—ऽप्युत्सहन्निव    घ—प्युत्सुका इव

नायं लोकोऽस्ति न पर इति व्यवसितो जनः ।
नालं गन्तुमिहाश्वासं नास्तिक्यभयशङ्कितैः ॥ १४

यथा सद्भिः परं दानम् अहिंसा दस्युभिस्तथा ।
अनुरञ्जन्ति भूतानि समर्यादेषु दस्युषु ॥ १५

अयुध्यमानस्यादानं दारामर्शः कृतघ्नता ।
ब्रह्मवित्तस्य चादानं निश्शेषकरणं तथा ॥ १६

स्त्रिया मोषः पथि स्थानं साधुष्वेव विगर्हितम् ।
सशेष एव भवति दस्युरे[1]तानि वर्जयेत् ॥ १७

अभिसन्दधते ये च [2]विनाशा यास्य भारत ।
सशेषमेवोपलभ्य [3]न कुर्वन्ति विनिश्चयम् ॥ १८

तस्मात् सशेषं कर्तव्यं स्वाधीनमपि दस्युभिः ।
न बलस्थोऽहमस्मीति नृशंसानि समाचरेत् ॥ १९

सशेषकारिणस्तात शेषं पश्यन्ति सर्वशः ।
निश्शेषकारिणो नित्यं निश्शेषकरणाद्भयम् ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये २० श्लोकाः]

---

1. क-ब—तान्विसर्जयेत् 2. अ-क-ब—विना यास्यन्ति
3. ख—कुर्वन्तीति हि निश्चयः

## ॥ चतुर्विंशत्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति कामन्दवचनसंवादरूपेण बलप्रशंसनम् ॥ १ ॥ तथा पापकारिणां तत्परिहारोपायकथनम् ॥ २ ॥

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
अत्र [1]कामन्दवचनं कीर्तयन्ति पुराविदः ॥ १

प्रत्यक्षावेव धर्मार्थौ क्षत्रियस्य विजानतः ॥ १॥

तौ तु न व्यवधातव्यौ परोक्षा धर्मयातना ।
अधर्मो धर्म इत्येतद् यथा वृकपदं तथा ॥ २॥

धर्माधर्मफले जातु न ददर्शेह कश्चन ।
बुभूषेद्बलमेवैतत् सर्वं बलवतो वशे ॥ ३॥

श्रियं बलममात्यांश्च बलवानिह विन्दति ।
यो ह्यनाढ्यस्स पतितस् तदुच्छिष्टं यदल्पकम् ॥ ४॥

बह्वपत्ये बलवति न किञ्चिज्जायते भयात् ।
उभौ सत्याधिकारौ तौ त्रायेते महतो भयात् ॥ ५॥

अति धर्माद्बलं मन्ये बलाद्धर्मः प्रवर्तते ।
बले प्रतिष्ठितो धर्मो धरण्यामिव जङ्गमः ॥ ६॥

1. ख—कौन्तेय

धूमो वायोरिव वशे बलं धर्मोऽनुवर्तते ।
अनीश्वरो बलं धर्मो द्रुमं वल्लीव संश्रिता ॥ ७॥

वश्यो बलवतां धर्मस् सुखं भोगवतामिव ।
नास्त्यसाध्यं बलवतां सर्वं बलवता जितम् ॥ ८॥

दुराचारः क्षीणबलः परिमाणं न गच्छति ।
[1]अथ तस्मादुद्विजते सर्वलोको वृकादिव ॥ ९॥

अपध्वस्तो ह्यवमतो दुःखं जीवति जीवितः ।
जीवितं [2]यदधिक्षिप्तं यथैव मरणं तथा ॥ १०॥

यदेनमाहुः पापेन चारित्रेण विवक्षितम् ।
सुभृशं तप्यते तेन वाक्शल्येन परिक्षतः ॥ ११॥

अत्रैतदाहुराचार्याः पापस्य परिमोक्षणे ।
त्रयीं विद्यां निषेवेत तथोपासीत च द्विजान् ॥ १२॥

प्रसादयेन्मधुरया वाचा चाप्यथ कर्मणा ।
महामनाश्चैव भवेद् विवहेच्च महाकुले ॥ १३॥

इत्यस्मीति वदेदेवं परेषां कीर्तयेद्गुणान् ।
जपेदुदकशीलस्स्यात् पेशलो नातिजल्पकः ॥ १४॥

ब्रह्म क्षत्रं सम्प्रविशेद् बहु कृत्वा सुदुष्कृतम् ।
उच्यमानोऽपि लोकेन बहु तत्तदचिन्तयन् ॥ १५॥

---

1. ख—अर्धचतुष्टयं नास्ति 2. घ—यदविक्षिप्तं

उपप्राप्यैवमाचारं क्षिप्रं बहुमतो भवेत् ।
सुखं च वित्तं भुञ्जीत वृत्तेनैकेन गोपयन् ॥ १६॥

[1]अपि तेभ्यो मृगान् हत्वा नयेच्च सततं वने ॥ १७

ये स्म न प्रतिगृह्णन्ति दस्युभोजनशङ्कया ।
लोके च लभते पूजां परत्र च महत् फलम् ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये १८ श्लोकाः ]

---

## ॥ पञ्चविंशत्यधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति दस्युभावेऽपि शास्त्रमर्यादानुसारिणः पर-लोकप्राप्तौ दृष्टान्ततया कापव्यचरितोपन्यासः ॥

---

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
यथा दस्युस्समर्यादो दस्युत्वात् सिद्धिमाप्तवान् ॥ १

अरण्ये सायं पूर्वाह्णे मृगयूथप्रकोपिता ।
विधिज्ञो मृगयूथानां निपातानां च कोविदः ॥ २

1. ख—अर्धद्वयं नास्ति

सर्वकाननदेशज्ञः पारियात्रचरस्सदा ।
सर्वज्ञस्सर्ववर्णानाम् अमोघेषुर्दृढायुधः ॥ ३

अप्यनेकशतां सेनाम् एक एव जिगाय सः ।
स वृद्धावन्धपितरौ महारण्येऽभ्यपूजयत् ॥ ४

मधुमांसैर्मूलफलैर् अन्नैश्चोच्चावचैरपि ।
सत्कृत्य भोजयामास सम्यक् परिचचार ह ॥ ५

आरण्यकान् प्रव्रजितान् ब्राह्मणान् परिपालयन् ।
अपि तेभ्यो मृगान् हत्वा निनाय सततं वने ॥ ६

[1]येऽस्मान्न प्रतिगृह्णन्ति दस्युभोजनशङ्कया ।
तेषामासाद्य गेहेषु एक एव स गच्छति ॥ ७

तं बहूनि सहस्राणि ग्रामणीत्वेऽभिवव्रिरे ।
[2]निर्मर्यादानि दस्यूनां निरनुक्रोशवर्तिनाम् ॥ ८

दस्यवः—

मुहूर्तदेशकालज्ञः प्राज्ञश्शूरो दृढायुधः ।
ग्रामणीर्भव नो मुख्यस् सर्वेषामेव [3]सर्वतः ॥ ९

यथा यथा वक्ष्यसि नः करिष्यामस्तथा तथा ।
पालयास्मान् यथान्यायं यथा माता यथा पिता ॥ १०

---

1. क-ख—ये स्म न घ—अर्धद्वयं नास्ति
2. घ—निर्मेदानां च दस्यूनां निरनुक्रोशतां गतः । [पाठान्तरम्]
3. ख—सम्मतः

दस्युः—

मा वधिष्ट [1]स्त्रियं भीरुं मा शिशुं मा तपस्विनम् ।
नायुध्यमानो हन्तव्यो न च ग्राह्या बलात् स्त्रियः ॥　११

सर्वथा स्त्री न हन्तव्या सर्वसत्त्वेषु बुध्यत ।
नित्यं गोब्राह्मणे स्वस्ति योद्धव्यं च तदर्थतः ॥　१२

[2]सत्यं च नोपहन्तव्यं [3]सारविघ्नं च मा कृथाः ।
पूज्यन्ते यत्र देवाश्च पितरोऽतिथयश्च ह ॥　१३

सर्वभूतेष्वपि वरो ब्राह्मणो मोक्षमर्हति ।
कार्या चापचितिस्तेषां सर्वस्वेनापि भावयेत् ॥　१४

यस्य त्वेते सम्प्रदुष्टास् तस्य विद्यात् पराभवम् ।
[4]न तस्य त्रिषु लोकेषु त्राता भवति कश्चन ॥　१५

यो ब्राह्मणान् परिभवेद् विनाशं वाऽपि रोचयेत् ।
सूर्योदय इवावश्यं ध्रुवं तस्य पराभवः ॥　१६

इहैव फलमासीनः प्रत्याकाङ्क्षेत सर्वशः ।
ये ये नो न प्रदास्यन्ति तांस्तान् सेनाऽभियास्यति ॥　१७

शिक्षार्थं विहितो दण्डो न वधार्थं विधीयते ।
ये च शिष्टान् प्रबाधन्ते धर्म्यस्तेषां वधस्स्मृतः ॥　१८

---

1. घ—स्वयं　　2. घ—सस्यं च
3. घ—सीर　ख—सिर
4. ख—अर्धत्रयं नास्ति

ये हि राष्ट्रोपरोधेन वृत्तिं कुर्वन्ति केचन ।
तानेवानुम्रियेरंस्ते कुणपं क्रिमयो यथा ॥ १९

ये पुनर्धर्मशास्त्रेण वर्तेरन्निह दस्यवः ।
अपि ते दस्यवो भूत्वा क्षिप्रं सिद्धिमवाप्नुयुः ॥ २०

भीष्मः—

तत् सर्वमनुचक्रुस्ते कापव्यस्यानुशासनम् ।
वृत्तिं च लेभिरे सर्वे पापेभ्यश्चाप्युपारमन् ॥ २१

कापव्यः कर्मणा तेन महतीं सिद्धिमाप्तवान् ।
साधूनामावहन् क्षेमं दस्यून् पापान्निवर्तयन् ॥ २२

इदं कापव्यचरितं यो नित्यमनुकीर्तयेत् ।
नारण्येभ्यस्स भूतेभ्यो भयमृच्छेत् कथञ्चन ॥ २३

न भयं तस्य मर्त्येभ्यो नामर्त्येभ्यः कथञ्चन ।
न सतो नासतो राजन् स ह्यरण्येषु गोपतिः ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये २४ श्लोकाः]

## ॥ षड्विंशत्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति कोशवृद्ध्यर्थमपहार्यानपहार्यधनविवेचनम् ॥

भीष्मः—

अत्र गाथा ब्रह्मगीताः कीर्तयन्ति पुराविदः ।
येन मार्गेण राजानः कोशं सञ्जनयन्त्युत ॥ १

न धनं यज्ञशीलानां हार्यं देवस्वमेव च ।
दस्यूनां निष्क्रियाणां च क्षत्रियो [1]हर्तुमर्हति ॥ २

इमाः प्रजाः क्षत्रियाणां रक्ष्या हन्याश्च भारत ।
धनं हि क्षत्रियस्येह द्वितीयस्य न विद्यते ॥ ३

तदस्य स्याद्बलार्थं वा धनं यज्ञार्थमेव वा ।
अभोज्याश्चौषधीश्छित्त्वा भोज्या एव भवन्त्युत ॥ ४

यो वै न देवान् न पितॄन् न मर्त्यान् हविषाऽर्चति ।
अनर्थिकां तद्धनिताम् आहुर्धर्मविदो जनाः ॥ ५

हरेत्तद्द्रविणं राजन् धार्मिकः पृथिवीपतिः ॥ ५॥

न हि न प्रीणयेल्लोकान् न लोको गर्हते नृपम् ।
असाधुभ्यो निरादाय साधुभ्यो यः प्रयच्छति ॥ ६॥
आत्मानं सङ्क्रमं कृत्वा मन्ये धर्मकृदेव सः ॥ ७

1. घ—हन्तु

औद्भिज्जा जन्तवो यद्वच् छुत्वा वाचो यथातथा ।
अनिष्टतरसम्भवन्ति तथा यज्ञः प्रजायते ॥ ८

यथैव दंशमशकं यथा कीटपिपीलिकम् ।
सैव वृत्तिरयज्ञेषु यथा धर्मो विधीयते ॥ ९

यथा ह्यकस्माद्भवति भूमौ पांसुस्तृणोलपम् ।
तथैवेह भवेद्धर्मस् सूक्ष्मस्सूक्ष्मतरस्स्मृतः ॥ १०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[ अस्मिन्नध्याये १० श्लोकाः ]

---

## ॥ सप्तविंशत्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति अनागतापत्प्रतिविधाने दृष्टान्ततया मत्स्योपाख्यानकथनम् ॥

---

भीष्मः—

अत्रैव चेदमव्यग्रं शृण्वाख्यानमनुत्तमम् ।
दीर्घसूत्रमुपाश्रित्य कार्याकार्यविनिश्चये ॥ १

नाति[1]गाधे जलस्थाने कुशलस्सुहृदस्त्रयः ।
प्रभूतमत्स्ये कौन्तेय बभूवुस्सहचारिणः ॥ २

---

1. ख—खाते

तत्रैकः प्राप्तकालज्ञो दीर्घदर्शी तथाऽपरः ।
दीर्घसूत्रस्तथा चैकस् त्रयाणां जलचारिणाम् ॥ ३

कदाचित्तज्जलस्थानं मत्स्यबन्धास्समन्ततः ।
निस्रावयामासुरथो निम्नेषु विविधैर्मुखैः ॥ ४

प्रक्षीयमाणं तद्दृष्ट्वा जलस्थानं भयागमे ।
अब्रवीद्दीर्घदर्शी तु तावुभौ सुहृदौ तदा ॥ ५

दीर्घदर्शी—

इयमापत् समुत्पन्ना सर्वेषां सलिलौकसाम् ।
शीघ्रमन्यत्र गच्छामः पन्था यावन्न शुष्यति ॥ ६

अनागतमनर्थं हि सुनयैर्यः प्रबोधते ।
न स संशयमाप्नोति तथाऽन्यत्र प्रयामहे ॥ ७

भीष्मः—

दीर्घसूत्रस्तु यस्तत्र सोऽब्रवीत् सम्यगुच्यताम् ।
न तु तावत् त्वरा कार्या इति मे निश्चिता मतिः ॥ ८

अथ सम्प्रतिपत्तिज्ञस् त्वब्रवीद्दीर्घदर्शिनम् ॥ ८॥

प्राप्तकालज्ञः—

प्राप्ते काले न मे किञ्चिन्न्यायतः परिहास्यते ॥ ९

भीष्मः—

एवमुक्तो निराक्रामद् दीर्घदर्शी महामतिः ।
जगाम स्रोतसैकेन गम्भीरं सलिलाशयम् ॥ १०

ततः प्रस्नुततोयं तं समीक्ष्य सलिलाशयम् ।
बबन्धुर्विविधैर्योगैर् मत्स्यान् मत्स्योपजीविनः ॥ ११

विलोड्यमाने तस्मिंस्तु स्नुततोये जलाशये ।
अगच्छद्ग्रहणं तत्र दीर्घसूत्रस्सहापरैः ॥ १२

उद्दानं क्रियमाणं च मत्स्यानां वीक्ष्य रज्जुभिः ।
प्रविश्यान्तरमन्येषाम् अग्रसत् प्रतिपत्तिमान् ॥ १३

ग्रस्तमेव तदुद्दानं गृहीत्वा तत्तथा तु सः ।
सर्वानेव तु तांस्तत्र ते विदुर्ग्रथिता इति ॥ १४

ततः प्रक्षाल्यमानेषु सर्वेषु विमले जले ।
त्यक्त्वा रज्जुं [1]प्रमुक्तोऽसौ शीघ्रं सम्प्रतिपत्तिमान् ॥ १५

दीर्घसूत्रस्तु मन्दात्मा हीनबुद्धिरचेतनः ।
मरणं प्राप्तवान् मूढस् तथैवोपहतेन्द्रियः ॥ १६

एवं प्राप्ततमं कालं यो मोहान्नावबुध्यते ।
स विनश्यति वै क्षिप्रं दीर्घसूत्रो यथा झषः ॥ १७

आदौ न कुरुते श्रेयः कुशलोऽस्मीति यः पुमान् ।
स हि संशयमाप्नोति यथा सम्प्रतिपत्तिमान् ॥ १८

अनागतविधानं तु यो नरः कुरुते क्षमम् ।
श्रेयः प्राप्नोति सोऽत्यन्तं दीर्घदर्शी यथा ह्यसौ ॥ १९

---

1. ख-ध—विमुक्तोऽभूत्

कलाः काष्ठा मुहूर्ताश्च दिनरात्र्यः क्षणा लवाः ।
पक्षा मासाष्षडृतवः कालस्संवत्सराणि च ॥ २०

पृथिवी देश इत्युक्तस् स च कालो न दृश्यते ।
अभिप्रेतार्थसिद्ध्यर्थं दूरतो न्यायतस्तथा ॥ २१

एतौ धर्मार्थशास्त्रेषु मोक्षशास्त्रेषु चर्षिभिः ।
प्रधानाविति निर्दिष्टौ तौ मे चाभिमतौ नृणाम् ॥ २२

परीक्ष्यकारी युक्तस्तु स सम्यगुपपादयेत् ।
देशकालावभिप्रेतौ ताभ्यां फलमवाप्नुयात् ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[ अस्मिन्नध्याये २३ श्लोकाः ]

---

## ॥ अष्टाविंशत्यधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति आपदि शत्रुणाऽपि सन्धिकरणविषये दृष्टान्ततया मार्जारमूषिकचरितकथनम् ॥

---

युधिष्ठिरः—

सर्वत्र बुद्धिः कथिता श्रेष्ठा ते भरतर्षभ ।
अनागता तथोत्पन्ना दीर्घसूत्रा विनाशिनी ॥ १

तदिच्छामि परां बुद्धिं श्रोतुं भरतसत्तम ।
यथा राजन् [1]विमुच्येत शत्रुभिः परिपीडितः ॥ २

धर्मार्थकुशलं प्राज्ञं सर्वशास्त्रविशारदम् ।
पृच्छामि त्वां कुरुश्रेष्ठ तन्मे व्याख्यातुमर्हसि ॥ ३

शत्रुभिर्बहुभिर्ग्रस्तो यथा मुच्येत पार्थिवः ।
एतदिच्छाम्यहं श्रोतुं सर्वमेव यथाविधि ॥ ४

विषमस्थं हि राजानं शत्रवः परिपन्थिनः ।
बहवोऽप्येकमुद्धर्तुं यतन्ते पूर्वतापिताः ॥ ५

सर्वतः प्रार्थ्यमानेन दुर्बलेन महाबलैः ।
एकेनैवासहायेन शक्यं स्थातुं कथं भवेत् ॥ ६

कथं मित्रमरिं चापि विन्देत भरतर्षभ ।
चेष्टितव्यं कथं चात्र शत्रोर्मित्रस्य चान्तरे ॥ ७

अजातलक्षणे [2]राजन्नमित्रे मित्रतां गते ।
कथं नु पुरुषः कुर्यात् किं वा कृत्वा सुखी भवेत् ॥ ८

विग्रहं केन वा कुर्यात् सन्धिं वा केन योजयेत् ।
कथं वा शत्रुमध्यस्थो वर्तेत बलवानपि ॥ ९

एतद्वै सर्वकृत्यानां परं कृत्यं नराधिप ।
नैतस्य कश्चिद्वक्ताऽस्ति श्रोता वाऽपि सुदुर्लभः ॥ १०

---

1. ख-घ—ङ मुच्येत 2. ख—राजानमित्रे

ऋते पितामहाद्भीष्मात् सत्यसन्धाज्जितेन्द्रियात् ।
तदन्वीक्ष्य महाबाहो सर्वमेतद्ब्रवीहि नः ॥ ११

भीष्मः—

त्वद्युक्तोऽयमनुप्रश्नो युधिष्ठिर गुणोदयः ।
शृणु मे पुत्र कात्स्न्येन गुह्यमापत्सु भारत ॥ १२

अमित्रो मित्रतां याति मित्रं चापि प्रदुष्यति ।
सामर्थ्ययोगात् कार्याणाम् अनित्या हि सदा गतिः ॥ १३

तस्माद्विश्वसितव्यं च विग्रहं च [1]समादिशेत् ॥ १३॥

देशं कालं च विज्ञाय कार्याकार्यविनिर्णये ।
सन्धातव्यं बुधैर्नित्यं व्यवस्य च हितार्थिभिः ॥ १४॥

अमित्रैरपि सन्धेयं प्राणा रक्ष्या हि भारत ॥ १५

यो ह्यमित्रैर्नरैर्नित्यं न सन्दध्यादपण्डितः ।
न सोऽर्थं प्राप्नुयात् किञ्चित् फलान्यपि च भारत ॥ १६

यस्त्वमित्रेण सन्धत्ते मित्रेण च विरुध्यते ।
अर्थयुक्तिं समालोक्य सुमहद्विन्दते फलम् ॥ १७

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
मार्जारस्य च संवादं न्यग्रोधे मूषिकस्य च ॥ १८

वने महति कस्मिंश्चिन्न्यग्रोधस्सुमहानभूत् ।
लताजालप्रतिच्छन्नो नानाद्विजगणायुतः ॥ १९

---

1. ख—समाचरेत्

स्कन्धवान् मेघसङ्काशश् शीतच्छायो मनोरमः ।
वैराज्यमभितो जातस् तरुर्व्यालमृगायुतः ॥ २०

तस्य मूलमुपाश्रित्य कृत्वा शतमुखं बिलम् ।
वसति स्म महाप्राज्ञः पलितो नाम मूषिकः ॥ २१

शाखां तस्य समाश्रित्य वसति स्म सुखं तदा ।
रोमशो नाम मार्जारस् सर्वसत्त्वावसादकः ॥ २२

तत्र त्वागत्य चण्डालो वैराज्यकृतकेतनः ।
युयोज यन्त्रमुन्माथं नित्यमस्तङ्गते रवौ ॥ २३

तत्र स्नायुमयान् पाशान् यथावत् संविधाय च ।
गृहं गत्वा सुखी शेते प्रभातामेति शर्वरीम् ॥ २४

तत्र स्म नित्यं बध्यन्ते नक्तं बहुविधा मृगाः ।
कदाचित्तत्र मार्जारस् [1]सम्प्रमत्तो ह्यबध्यत ॥ २५

[2]तस्मिन् बद्धे महाप्राज्ञ शत्रौ नित्याततायिनि ।
तं कालं पलितो ज्ञात्वा विचचार सुनिर्भयः ॥ २६

तेनानुचरता तस्मिन् वने विश्वस्तचारिणा ।
भक्ष्यं मृगयमाणेन न दृष्टं मृष्टमामिषम् ॥ २७

स तमुन्माथमारुह्य तदामिषमभक्षयत् ।

---

1. क—सम्प्रवृत्तो ह्यबुध्यत
   ख-घ—सम्प्रवृत्तो ह्यबुध्यत
2. घ—अर्धैतयं नास्ति

तस्योपरि सपत्नस्य बद्धस्य मनसा हसन् ॥ २८

आमिषेषु प्रसक्तस्स कदाचिदवलोकयन् ।
अपश्यदपरं घोरम् आत्मनो रिपुमागतम् ॥ २९

शरप्रसूनसङ्काशं महीविवरशायिनम् ।
नकुलं हरिकं नाम चपलं ताम्रलोचनम् ॥ ३०

तेन मूषिकगन्धेन त्वरमाण उपागमत् ।
भक्षार्थं लेलिहन् वक्रं भूमावूर्ध्वमुखस्स्थितः ॥ ३१

शाखागतमरिं चान्यम् अपश्यत् कोटरालयम् ।
उलूकं चन्द्रकं नाम वक्रतुण्डं दुरासदम् ॥ ३२

गतस्य विषयं तस्य नकुलोलूकयोस्तयोः ।
अथास्यासीदियं चिन्ता तत् प्राप्तस्य महद्भयम् ॥ ३३

आपद्यपि सुकष्टायां मरणे समुपस्थिते ।
समन्ताद्भय उत्पन्ने किं कार्यं वै मनीषिणा ॥ ३४

स तथा सर्वतो रुद्धस् सर्वत्र भयकर्शितः ।
अभवद्भयसन्त्रस्तस् चक्रे चेमां परां मतिम् ॥ ३५

मूषिकः—

आपद्विनाशभूयिष्ठं शङ्कनीयं हि जीवितम् ।
समन्तात् संशयस्सोऽयं अस्मांस्तावदुपस्थितः ॥ ३६

गतं हि सहसा भूमिं नकुलो मामवाप्नुयात् ।

उलूकश्चेह तिष्ठन्तं मार्जारो वा समाप्नुयात् ॥ ३७

न त्वेवास्मद्विधः प्राज्ञस् सम्मोहं गन्तुमर्हति ।
करिष्ये जीविते यत्नं यावदुच्छ्वासनिग्रहात् ॥ ३८

न हि बुद्ध्याऽन्विताः प्राज्ञा नीतिशास्त्रविशारदाः ।
सम्भ्रमन्त्यापदं प्राप्य महतोऽर्थानवाप्य वा ॥ ३९

न त्वन्यामिह मार्जाराद् गतिं [1]प्राप्स्यामि साम्प्रतम् ।
विषमस्थो ह्ययं जन्तुः कृत्यं चास्य महन्मया ॥ ४०

जीवितार्थी कथं त्वद्य प्रार्थितश्शत्रुभिस्त्रिभिः ।
प्राणहेतोरिमं मित्रं मार्जारं संश्रयामि वै ॥ ४१

अत्रैव खलु मार्जारे जीवितं सम्प्रतिष्ठितम् ।
अतोऽस्मै सम्प्रवक्ष्यामि हेतुमात्माभिरक्षणे ॥ ४२

[2-3]क्षत्रविद्यां समाश्रित्य हितं तत्रोपधारये ।
येनेमं शत्रुसङ्घातं मित्रपूर्वेण [4]वञ्चये ॥ ४३

अयमत्यन्तशत्रुर्मे वैषम्यं परमं गतः ।
मूढो ग्राहयिता स्वार्थं सङ्गत्या यदि शक्यते ॥ ४४

कदाचिद्व्यसनं प्राप्य सन्धिं कुर्यान्मया सह ॥ ४५॥

---

1. ख—पश्यामि
2. क-ख-घ—अपीदानीमयं शत्रुस्सङ्गत्या पण्डितो भवेत् ।
[ अधिकः पाठः ]
3. ख—श्लोकार्धानि न सन्ति
4. क-घ—वञ्चयेत्

बलिना सन्निकृष्टस्य शत्रोरपि परिग्रहः ।
कार्य इत्याहुराचार्या व्यसने जीवितार्थिना ॥ ४५॥

श्रेयान् हि पण्डितश्शत्रुर् न हि मित्रमपण्डितम् ।
अपीदानीमयं शत्रुस् सङ्गत्या पण्डितो भवेत् ॥ ४६॥

ततोऽस्मै सम्प्रवक्ष्यामि हेतुमात्माभिरक्षणे ॥ ४७

भीष्मः—

ततोऽर्थमतितत्त्वज्ञस् सन्धिविग्रहकालवित् ।
सान्त्वपूर्वमिदं वाक्यं मार्जारं मूषिकोऽब्रवीत् ॥ ४८

मूषिकः—

सौहृदेनाभिभाषे त्वां कच्चिन्मार्जार जीवसे ।
जीवितं हि तवेच्छामि श्रेयस्साधारणं हि नौ ॥ ४९

न ते सौम्य भयं कार्यं जीविष्यसि यथा पुरम् ।
अहं त्वामुद्धरिष्यामि प्राणा[1]ञ्जह्यां कृते तव ॥ ५०

अस्ति कश्चिदुपायोऽत्र पुष्कलः प्रतिभाति माम् ।
येन शक्यस्त्वया मोक्षः प्राप्तुं श्रेयस्तथा मया ॥ ५१

मयाह्युपायो दृष्टोऽयं विचार्य हितमात्मनः ।
आत्मार्थे च त्वदर्थे च श्रेयस्साधारणं हि नौ ॥ ५२

इदं हि नकुलोलूकं पापबुद्ध्या हि संस्थितम् ।

---

1. ख—अह्यां हिते कृते　　　घ—जह्यामि त्वत्कृते

न धर्षयति मार्जार तेन मे स्वस्ति साम्प्रतम् ॥ ५३

क्रूरश्चपलनेत्रोऽयं कौशिको मां निरीक्षते ।
नगशाखागतस्तिष्ठंस् तस्याहं भृशमुद्विजे ॥ ५४

सतां साप्तपदं मित्रं [1]स सखा मेऽसि पण्डितः ।
सवासकं करिष्यामि नास्ति ते प्राणतो भयम् ॥ ५५

न हि शक्तोषि मार्जार पाशं छेत्तुं मया विना ।
अहं छेत्स्यामि ते पाशं यदि मां त्वं न हिंससि ॥ ५६

त्वमाश्रितो द्रुमस्याग्रं मूलं त्वहमुपाश्रितः ।
चिरोषितावुभावावां वृक्षेऽस्मिन् विदितं हि तत् ॥ ५७

यस्मिन्नाश्वासते कश्चिद् यश्च नाश्वसते क्वचित् ।
न तौ धीराः प्रशंसन्ति नित्यमुद्विग्नचेतसौ ॥ ५८

तस्माद्विवर्धतां प्रीतिस् सत्यं सङ्गतमस्तु नौ ।
कालातीतमिहार्थं हि न प्रशंसन्ति पण्डिताः ॥ ५९

अर्थयुक्तिमिमां तावद् यथाभूतां निशामय ।
तव जीवितमिच्छामि त्वं ममेच्छसि जीवितम् ॥ ६०

कश्चित्तरति काष्ठेन सुगम्भीरां महानदीम् ।
स तारयति तत् काष्ठं स च काष्ठेन तार्यते ॥ ६१

ईदृशो नः क्रियायोगो भविष्यति सुविस्तरः ।

---

1. क—सावासो ख-घ—सवास्यो

अहं त्वां तारयिष्यामि मां च त्वं तारयिष्यसि ॥　　६२

भीष्मः—

एवमुक्त्वा तु पलितस् तमर्थमुभयोर्हितम् ।
हेतुमद्ग्रहणीयं च कालापेक्षी व्यतिष्ठत ॥　　६३

अथ सुव्याहृतं तस्य श्रुत्वा शत्रुर्विचक्षणः ।
हेतुमद्ग्रहणीयार्थं मार्जारो वाक्यमब्रवीत् ॥　　६४

बुद्धिमान् वाक्यसम्पन्नस् तद्वाक्यमनुवर्तयन् ।
स्वामवस्थां प्रतीक्ष्यान्यां साम्नैव प्रत्यपूजयत् ॥　　६५

ततस्तीक्ष्णाग्रदशनो वैडूर्यमणिलोचनः ।
मूषिकं मन्दमुद्वीक्ष्य मार्जारो वाक्यमब्रवीत् ॥　　६६

मार्जारः—

नन्दामि सौम्य भद्रं ते यो मां जीवितुमिच्छसि ।
श्रेयश्च यदि जानीषे क्रियतां मा विचारय ॥　　६७

अयं हि दृढमापन्नस् त्वमापन्नतरो मया ।
द्वयोरापन्नयोस्सन्धिः क्रियतां मा विचारय ॥　　६८

विधत्स्व प्राप्तकालं यत् कार्यं सिध्यतु चावयोः ।
मयि कृच्छ्राद्विनिर्मुक्ते न विनश्यति ते कृतम् ॥　　६९

त्यक्तमानोऽस्मि भक्तोऽस्मि शिष्यस्त्वद्धितकृत् तथा ।
तथा निदेशवर्ती च भवन्तं शरणं गतः ॥　　७०

भीष्मः—

इत्येवमुक्तः पलितो मार्जारं वशमागतम् ।
वाक्यं हितमुवाचेदम् अभिजातार्थमर्थवित् ॥ ७१

मूषिकः—

उदारं यद्भवानाह नैतच्चित्रं भवद्विधे ।
[1]विहितो यस्तु मार्गो मे हितार्थं शृणिवदं मम ॥ ७२

अहं त्वाऽनुप्रवेक्ष्यामि नकुलान्मे महद्भयम् ।
त्रायस्व मां मा वधीश्च शक्तोऽस्मि तव मोक्षणे ॥ ७३

उलूकाच्चापि मां रक्ष क्षुद्रः प्रार्थयतीह माम् ।
अहं छेत्स्यामि ते पाशान् सखे सत्येन ते शपे ॥ ७४

भीष्मः—

तद्वचस्सङ्गतं श्रुत्वा लोमशो युक्तमर्थवत् ।
हर्षादुद्वीक्ष्य पलितं स्वागतेनाभ्यपूजयत् ॥ ७५

तं सम्पूज्याथ पलितं मार्जारस्सौहृदे स्थितम् ।
स विचिन्त्याब्रवीद्धीरः प्रीतस्त्वरित एव च ॥ ७६

मार्जारः—

क्षिप्रमागच्छ भद्रं ते त्वं मे प्राणसमस्सखा ।
तव प्राज्ञ प्रसादाद्धि प्रियं प्राप्स्यामि जीवितम् ॥ ७७

यद्यदेवङ्गतेनाद्य शक्यं कर्तुं मया तव ।

---

1. क-ख-घ—विदितो

तदाज्ञापय कर्तास्मि सिद्धिरेवास्तु नौ सखे ॥ ७८

अस्मात्ते संशयान्मुक्तस् समित्रगणबान्धवः ।
सर्वकार्याणि कर्ताऽहं प्रियाणि च हितानि च ॥ ७९

मुक्तश्च व्यसनादस्मात् सौम्याहमपि नाम ते ।
प्रीतिमुत्पादयेऽहं च प्रतिकर्तुं च शक्नुयाम् ॥ ८०

भीष्मः—

एवमाश्वासितो विद्वान् मार्जारेण स मूषिकः ।
प्रविवेश सुविस्रब्धस् सम्यगङ्गीचकार ह ॥ ८१

ग्राहयित्वा तु तं स्वार्थं मार्जारं मूषिकस्तदा ।
मार्जारोरसि विस्रब्धस् सुष्वाप पितृमातृवत् ॥ ८२

निलीनं तस्य गात्रेषु मार्जारस्याथ मूषिकम् ।
तं दृष्ट्वा नकुलोलूकौ निराशौ जग्मतुर्गृहान् ॥ ८३

लीनस्स तस्य गात्रेषु पलितो देशकालवित् ।
चिच्छेद पाशान्नृपते कालाकाङ्क्षी शनैश्शनैः ॥ ८४

अथ बन्धपरिक्षिप्तो मार्जारो वीक्ष्य मूषिकम् ।
छिन्दन्तं वै तदा पाशान् अत्वरन्तं त्वरान्वितः । ८५

तमत्वरन्तं पलितं पाशानां छेदने तदा ।
सञ्चोदयितुमारेभे मार्जारो मूषिकं ततः ॥ ८६

मार्जारः—

किं सौम्य नाभित्वरसे किं कृतार्थोऽवमन्यसे ।
छिन्धि पाशममित्रघ्न पुरा श्वपच एति सः ॥ ८७

भीष्मः—

इत्युक्तस्त्वरताऽनेन मतिमान् पलितोऽब्रवीत् ।
मार्जारमकृतप्रज्ञं तथ्यमात्महितं वचः ॥ ८८

मूषिकः—

तूष्णीं भव न ते सौम्य त्वरा कार्या न सम्भ्रमः ।
वयमेवात्र कालज्ञा न कालः परिहास्यते ॥ ८९

अकाले कृत्यमारब्धं कर्तुर्नार्थाय कल्पते ।
तदेव काल आरब्धं महतेऽर्थाय कल्पते ॥ ९०

अकाले मित्र मुक्तान्मे त्वत्त एव भवेद्भयम् ।
तस्मात् कालं प्रतीक्षस्व किमिति त्वरसे सखे ॥ ९१

यावत् पश्यामि चण्डालम् आयान्तं शस्त्रपाणिनम् ।
ततश्छेत्स्यामि ते पाशं प्राप्ते साधारणे भये ॥ ९२

तस्मिन् काले प्रमुक्तस्त्वं तरुमेवाधिरोक्ष्यसे ।
न हि ते जीवितादन्यत् किञ्चित् कृत्यं भविष्यति ॥ ९३

तस्मिन् कालेऽपि च तथा दिवाकीर्तिभयार्दितः ।
मम न ग्रहणे शक्तः पलायनपरायणः ॥ ९४

ततो भवत्यपक्रान्ते त्रस्ते भीते च लुब्धकात् ।
अहं बिलं प्रवेक्ष्यामि भवाञ् शाखां गमिष्यति ॥　　९५

भीष्मः—

एवमुक्तस्तु मार्जारो मूषिकेणात्मनो हितम् ।
वचनं वाक्यतत्त्वज्ञो जीवितार्थी महामतिः ॥　　९६

अथात्मकृत्यं त्वरितस् सम्यक् प्रणितमाचरन् ।
उवाच रोमशो वाक्यं मूषिकं चिरकारिणम् ॥　　९७

मार्जारः—

न ह्येवं मित्रकार्याणि प्रीत्या कुर्वन्ति साधवः ॥　　९७॥
यथा त्वं मोक्षितः कृच्छ्रात् त्वरमाणेन वै मया ।
तथा हि त्वरमाणेन त्वया कार्यमिदं मम ॥　　९८॥
यत्नं कुरु महाप्राज्ञ यथा स्वस्त्यावयोर्भवेत् ॥　　९९

अथ वा पूर्ववैरं त्वं स्मरन् कालं जिहीर्षसि ।
पश्य दुष्कृतकर्मंस्त्वं व्यक्तमायुःक्षयो मम ॥　　१००

यदि किञ्चिन्मयाऽज्ञानात् पुरस्ताद्विप्रियं कृतम् ।
न तन्मनसि कर्तव्यं क्षामये त्वां प्रसीद मे ॥　　१०१

भीष्मः—

तमेवंवादिनं प्राज्ञं शास्त्रविद्बुद्धिसत्तमः ।
उवाचेदं वचश्श्रेष्ठं मार्जारं मूषिकस्ततः ॥　　१०२

मूषिकः—

श्रुतं मे तव मार्जार स्वमर्थं परिगृह्णतः ।
यन्मित्रं भीतवत् साध्यं यस्मिन् मित्रे भयं हितम् ॥ १०३

आरक्षितं ततः कार्यं पाणिस्सर्पमुखादिव ॥ १०३॥

कृत्वा बलवता सन्धिम् आत्मानं यो न रक्षति ।
[1]आमिषं हि यथा युक्तं तस्यानर्थाय कल्पते ॥ १०४॥

न कश्चित् कस्यचिन्मित्रं न कश्चित् कस्यचिद्रिपुः ।
[2]अर्थतस्तु निबध्यन्ते मित्राणि रिपवस्तथा ॥ १०५॥

अर्थैरर्था निबध्यन्ते गजैरिव महागजाः ।
न च कश्चित् कृते कार्ये कर्तारं समवेक्षते ॥ १०६॥

तस्मात् सर्वाणि कार्याणि सावशेषाणि कारयेत् ॥ १०७

छिन्नं तु तन्तुबाहुल्यं तन्तुरेकोऽवशेषितः ।
छेत्स्याम्यहं तमप्याशु निर्वृतो भव रोमश ॥ १०८

भीष्मः—

तयोस्संवदतोरेवं द्वयोरापन्नयोस्तदा ।
क्षयं जगाम सा रात्री रोमशं चागमद्भयम् ॥ १०९

ततः प्रभातसमये विकटः कृष्णपिङ्गलः ।

1. क-ख-घ—अनर्थमिव तद्भुक्तं
2. क-ख-घ—नास्तीदमर्थम्

स्थूलस्फिग्विनतो रूक्षश् श्वयूथपरिवारितः ॥ ११०

शङ्कुकर्णो महावक्त्रः खनित्री घोरदर्शनः ।
परिघो नाम चण्डालश् शस्त्रपाणिरदृश्यत ॥ १११

तं दृष्ट्वा यमदूताभं मार्जारस्त्रस्तचेतनः ।
उवाच पलितं भीतः किमिदानीं करिष्यसि ॥ ११२

तथैव च सुसन्त्रस्तौ तं दृष्ट्वा घोरदर्शनम् ।
क्षणेन नकुलोलूकौ नैराश्यमुपजग्मतुः ॥ ११३

बलिनौ मतिमन्तौ च सङ्घातं चाप्युपागतौ ।
अशक्यौ सुनयात्तस्मात् सम्प्रधर्षयितुं बलात् ॥ ११४

कार्यार्थे कृतसन्धी तौ दृष्ट्वा मार्जारमूषिकौ ।
उलूकनकुलौ तूर्णं जग्मतुस्स्वं स्वमालयम् ॥ ११५

ततश्चिच्छेद तं तन्तुं मार्जारस्य स मूषिकः ।
विप्रमुक्तोऽथ मार्जारस् तमेवाभ्यपतद्द्रुमम् ॥ ११६

स तस्मात् सम्भ्रमान्मुक्तो मुक्तो घोरेण शत्रुणा ।
बिलं विवेश पलितश् शाखां लेभे स लोमशः ॥ ११७

उन्माथमप्युपादाय चण्डालोऽवेक्ष्य सर्वशः ।
विहीनाशः क्षणेनैव तस्माद्देशादपाक्रमत् ॥ ११८

जगाम च स्वभवनं चण्डालो भरतर्षभ ॥ ११८॥

ततस्तस्माद्भयान्मुक्तो दुर्लभं प्राप्य जीवितम् ।
बिलस्थं पादपाग्रस्थः पलितं रोमशोऽब्रवीत् ॥ ११९॥

मार्जारः—

मित्रोपभोगसमये किं हि मां नोपसर्पसि ॥ १२०

कृत्वा हि पूर्वं मित्राणि यः पश्चान्नाभितिष्ठति ।
न स मित्राणि लभते कृच्छ्रास्वापत्सु दुर्मतिः ॥ १२१

सत्कृतोऽहं त्वया मित्र सामर्थ्यादात्मनस्सखे ।
स मां मित्रत्वमापन्नम् उपभोक्तुं त्वमर्हसि ॥ १२२

यानि मे सन्ति मित्राणि ये च मे सन्ति बान्धवाः ।
सर्वे त्वां पूजयिष्यन्ति शिष्या इव गुरुं प्रियम् ॥ १२३

अहं च पूजयिष्ये त्वां समित्रगणबान्धवम् ।
जीवितस्य प्रदातारं कृतज्ञः को न पूजयेत् ॥ १२४

ईश्वरो मे भवानस्तु शरीरस्य गृहस्य च ।
अर्थानां चैव सर्वेषाम् अनुशास्ता च मे भव ॥ १२५

अमात्यो मे भव प्राज्ञ पितेवेह प्रशाधि माम् ।
न तेऽस्ति भयमस्मत्तो जीवितेनात्मनश्शपे ॥ १२६

बुद्ध्या त्वमुशना साक्षाद् बले त्वधिकृता वयम् ।
त्वं मन्त्रबलयुक्तो हि दद्या विजयमेव मे ॥ १२७

भीष्मः—

एवमुक्तः परं सान्त्वं मार्जारेण स मूषिकः ।

उवाच परमार्थज्ञश्‌ श्लक्ष्णमात्महितं वचः ॥　　१२८

मूषिकः—

यद्भवानाह तत्‌ सर्वं मया ते रोमश श्रुतम्‌ ।
ममापि तावद्ब्रुवतश्‌ शृणु यत्‌ प्रतिभाति माम्‌ ॥　　१२९

वेदितव्यानि मित्राणि बोद्धव्याश्चापि शत्रवः ।
[1]तस्मात्‌ सुसूक्ष्मं लोकेऽस्मिँल्लक्ष्यते प्राज्ञसम्मतैः ॥　　१३०

शत्रुरूपा हि सुहृदो मित्ररूपाश्च शत्रवः ।
सान्त्विवतास्ते न बुध्यन्ते [2]रागलोभवशं गताः ॥　　१३१

येषां सौम्यानि मित्राणि क्रोधनाश्चैव शत्रवः ।
सान्त्विवतास्ते न बुध्यन्ते रागलोभवशंगताः ॥　　१३२

नास्ति जात्या रिपुर्नाम मित्रं नाम न विद्यते ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥　　१३३

मित्रं च शत्रुतामेति कस्मिंश्चित्‌ कालपर्यये ।
शत्रुश्च मित्रतामेति स्वार्थो हि बलवत्तरः ॥　　१३४

यो विश्वसिति मित्रेषु न विश्वसिति शत्रुषु ।
अर्थयुक्तिमविज्ञाय चलितं तस्य जीवितम्‌ ॥　　१३५

अर्थयुक्तिमविज्ञाय यश्शुभे कुरुते मनः ।
मित्रे वा यदि वा शत्रौ तस्यापि चलिता मतिः ॥　　१३६

---

1. ख—एतत्‌　　2. अ—इतोऽष्टौ पादा न सन्ति

न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नम् अपि मूलानि कृन्तति ॥ १३७

अर्थयुक्ता हि दृश्यन्ते पिता माता सुतस्तथा ।
मातुला भागिनेयाश्च तथा सम्बन्धिबान्धवाः ॥ १३८

पुत्रं हि मातापितरौ त्यजतः पतितं प्रियम् ।
[1]आत्मानं रक्षते लोकः पश्य स्वार्थस्य सारताम् ॥ १३९

सामान्ये निकृतिप्रज्ञे यो मोक्षात् प्रत्यनन्तरम् ।
कृत्यं मृगयते कर्तुं सुखोपायमसंशयम् ॥ १४०

तस्मिन्निलय एवं च न्यग्रोधादवपातितः ।
पूर्वं निविष्टमुन्माथं चपलत्वादबुद्धवान् ॥ १४१

आत्मनश्चपलो नास्ति कुतोऽन्येषां भविष्यति ।
तस्मात् सर्वाणि कार्याणि चपलो हन्त्यसंशयम् ॥ १४२

ब्रवीषि मधुरं यच्च प्रियो मे हि भवानिति ।
तन्मिथ्याकारणं सर्वं विस्तरेण हि मे शृणु ॥ १४३

कारणात् प्रियतामेति द्वेष्यो भवति कारणात् ।
अर्थार्थी जीवलोकोऽयं न कश्चित् कस्यचित् प्रियः ॥ १४४

सख्यं सोदर्ययोर्भ्रात्रोर् दम्पत्योर्वा परस्परम् ।
कस्यचिन्नाभिजानामि प्रीतिं निष्कारणादिह ॥ १४५

---

1. अ—अर्धद्वयं नास्ति

यद्यपि भ्रातरः क्रुद्धा भार्या वा कारणान्तरे ।
स्वभावतस्ते प्रीयन्ते नेतरः प्राकृतो जनः ॥　　१४६

प्रियो भवति दानेन प्रियवादेन चापरः ।
मन्त्रहोमजपैरन्यः कार्यार्थे प्रीयते जनः ॥　　१४७

उत्पन्ना कारणात् प्रीतिर् आसीन्नौ कारणान्तरम् ।
प्रध्वस्ते कारणस्थाने सा प्रीतिर्नाभिवर्धते ॥　　१४८

किं नु तत् कारणं मन्ये येनाहं भवतः प्रियः ।
अन्यत्राभ्यवहारार्थात् तत्रापि च बुधा वयम् ॥　　१४९

कालो हेतुं विकुरुते स्वार्थस्तमनुवर्तते ।
स्वार्थं प्राज्ञा विजानन्ति प्राज्ञान् लोकोऽनुवर्तते ॥　　१५०

न हीदृशं त्वया वाच्यं विद्यते स्वार्थपण्डितः ॥　　१५०॥

अकालो हि समर्थस्य स्नेहहेतुरयं तव ।
तस्मान्नाहं चले स्वार्थात् सुस्थितस्सन्धिविग्रहे ॥　　१५१॥

अभ्राणामिव रूपाणि विकुर्वन्ति पदे पदे ।
अद्यैव हि रिपुर्भूत्वा पुनरद्यैव सौहृदम् ॥　　१५२॥
पुनश्च रिपुरद्यैव [1]युक्तीनां पश्य चापलम् ॥　　१५३

आसीन्मैत्री तु ताव[2]न्नो यावद्धेतुरभूत् पुरा ।
सा गता सह तेनैव कालयुक्तेन हेतुना ॥　　१५४

---

1. घ—युक्तानां　　2. ख—न्नौ

त्वं हि मेऽन्यन्ततश्शत्रुस् सामर्थ्यान्मित्रतां गतः ॥ १५४॥

सोऽहमेवं [1]प्रमाणानि ज्ञात्वा शास्त्राणि तत्त्वतः ।
प्रविशेयं कथं पार्श्वं त्वत्कृतं तद्ब्रवीहि मे ॥ १५५॥

त्वद्वीर्येण विमुक्तोऽहं मद्वीर्येण तथा भवान् ।
अन्योन्यानुग्रहे वृत्ते नास्ति भूयस्समागमः ॥ १५६॥

त्वं हि सौम्य कृतार्थोऽद्य निवृत्तार्थास्तथा वयम् ।
न तेऽस्त्यद्य मया कृत्यं किञ्चिदन्यत्र भक्षणात् ॥ १५७॥

अहमन्नं भवान् भोक्ता दुर्बलोऽहं भवान् बली ।
नावयोर्विद्यते सन्धिर् वियुक्ते विषमे बले ॥ १५८॥

स मन्येऽहं तव प्रज्ञां यन्मोक्षात् प्रत्यनन्तरम् ।
भक्ष्यं मृगयसे नूनं सुखोपायमसंशयम् ॥ १५९॥

भक्षार्थी ह्येव सुव्यक्तो विमुक्तः प्रसृताक्षुधा ।
शास्त्रज्ञां बुद्धिमास्थाय प्रातराशमिहेच्छसि ॥ १६०॥

जानामि क्षुधितं च त्वाम् आहारसमयश्च ते ।
[2]स त्वं मामभिसन्धाय भक्ष्यं मृगयसे पुनः ॥ १६१॥

किं चात्र पुत्रदारार्थं यद्वाणीं सृजसे मयि ।
शुश्रूषां नार्हसे कर्तुं सखे मम न तत् क्षमम् ॥ १६२॥

त्वया मां सहितं दृष्ट्वा प्रिया भार्या सुताश्च ये ।

---

1. ख—प्रणीतानि 2. अ—अर्धचतुष्टयं नास्ति

[1]कस्मात्तेनैव खादेयुस् स्पृष्ट्वा प्रणयिनि त्वयि ॥ १६३॥

नाहं त्वया समेष्यामि वृत्ते हेतुसमागमे ।
शिवं ध्यायस्व तत्रस्थस् सुकृतं स्मरसे यदि ॥ १६४॥

शत्रोरन्नाद्यभूतस्सन् क्लिष्टस्य क्षुधितस्य च ।
[2]भक्ष्यं मृगयमाणस्य कः प्राज्ञो विषयं व्रजेत् ॥ १६५॥

स्वस्ति तेऽस्तु गमिष्यामि दूरादपि तवोद्विजे ।
नाहं त्वया समेष्यामि निवृत्तो भव रोमश ॥ १६६॥

बलवत् सन्निकर्षो हि न कदाचित् प्रशस्यते ।
प्रशान्तादपि हि प्राज्ञाद् भेतव्यं बलिभिस्सदा ॥ १६७॥

यदि त्वर्थेन ते कार्यं ब्रूहि किं करवाणि ते ।
कामं सर्वं प्रदास्यामि न त्वात्मानं कथञ्चन ॥ १६८॥

आत्मार्थे सन्ततिस्त्याज्या राज्यं रत्नं धनानि च ।
अपि [3]सर्वस्वमुत्सृज्य रक्षेदात्मानमात्मवान् ॥ १६९॥

[4]ऐश्वर्यधनरत्नानां प्रत्यमित्रेऽपि वर्तताम् ।
दृष्टा हि पुनरावृत्तिर् जीवतामिति नश्श्रुतम् ॥ १७०॥

न त्वात्मनस्सम्प्रदानं धनरत्नाद्विशिष्यते ।
आत्मा हि सर्वथा रक्ष्यो दारैरपि धनैरपि ॥ १७१॥

---

1. क-घ—तस्मात्		2. क-ख-घ—भक्षं
3. क-घ—सर्वं समुत्सृज्य		4. क-घ—ऐश्वर्यं

आत्मरक्षण[1]तन्त्राणां सुपरीक्षितकारिणाम् ।
आपदो नोपपद्यन्ते पुरुषाणां स्वदोषजाः ॥ १७२॥

शत्रुं सम्यगविज्ञातो विप्रियो ह्यबलीयसा ।
शङ्कनीयस्स सर्वत्र प्रियमप्याचरन् सदा ॥ १७३॥

कुलजानां सुमित्राणां धार्मिकाणां महात्मनाम् ।
न तेषां चाल्यते बुद्धिश् शास्त्रार्थकृतनिश्चया ॥ १७४॥

भीष्मः—

इत्यभिव्यक्तमेवासौ पलितेनापहासितः ।
मार्जारो व्रीडितो भूत्वा मूषिकं वाक्यमब्रवीत् ॥ १७५॥

मार्जारः—

सम्मन्येऽहं तव प्रज्ञां यस्त्वं मम हिते रतः ।
उक्तवानर्थतत्त्वेन मया सम्भिन्नदर्शनः ॥ १७६॥
न तु मामन्यथा साधो त्वं ग्रहीतुमिहार्हसि ॥ १७७

प्राणप्रदानजं त्वत्तो मयि सौहृदमागतम् ।
धर्मज्ञोऽस्मि गुणज्ञोऽस्मि कृतज्ञोऽस्मि विशेषतः ॥ १७८

मित्रेषु वत्सलश्चास्मि त्वद्भक्तश्च विशेषतः ।
त्वं मामेवं गते साधो न वाचयितुमर्हसि ॥ १७९

---

1. ख—मन्त्राणां

भीष्मः—

[1]इति संस्तूयमानोऽपि मार्जारेण स मूषिकः ।
मनसा भावगम्भीरं मार्जारमिदमब्रवीत् ॥　　१८०

मूषिकः—

साधुर्भवान् कृतार्थोऽस्मि प्रिये च न च विश्वसे ।
संस्तवैर्वा धनौघैर्वा नाहं शक्यस्त्वया पुनः ॥　　१८१

न ह्यमित्रवशं यान्ति प्राज्ञा निष्कारणं सखे ।
अस्मिन्नर्थे च गाथे द्वे निबोधोशनसा कृते ॥　　१८२

शत्रुस्साधारणे कृत्ये कृत्वा सन्धिं बलीयसा ।
समाहितश्चरेद्बुद्ध्या कृतार्थश्च न विश्वसेत् ॥　　१८३

न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
नित्यं विश्वासयेदन्यान् परेषां तु न विश्वसेत् ॥　　१८४

तस्मात् सर्वास्ववस्थासु रक्षेज्जीवितमात्मनः ।
द्रव्याणि सन्ततिश्चैव सर्वं भवति जीवताम् ॥　　१८५

सङ्क्षेपो नीतिशास्त्राणाम् अविश्वासः परो मतः ।
[2]नृषु तस्मादविश्वासः पुष्कलं हितमात्मनः ॥　　१८६

---

1. ख—त्वयाऽपि वाच्यमानोऽहं जह्यां प्राणान् सबान्धवः ।
धिक्शब्दो हि बुधैर्दृष्टो मद्विधेषु मनस्विषु ।
पतनं धर्मतत्त्वज्ञ न मे शंसितुमर्हसि ॥　　[अधिकः पाठः]

2. ब—दृष्टं

वध्यन्ते न ह्यविश्वस्ताश् शत्रुभिर्दुर्बला अपि ।
विश्वस्तास्त्वाशु वध्यन्ते बलवन्तोऽपि शत्रुभिः ॥ १८७

त्वद्विधेभ्यो मया ह्यात्मा रक्ष्यो मार्जार सर्वदा ।
रक्ष त्वमपि चात्मानं चण्डालाज्जातिकिल्बिषात् ॥ १८८

भीष्मः—

स तस्य ब्रुवतस्त्वेवं सन्त्रासाज्जातसाध्वसः ।
कथां हित्वा जवेनाशु मार्जारः प्रययौ तदा ॥ १८९

ततश्शास्त्रार्थतत्त्वज्ञो बुद्धिसामर्थ्यमात्मनः ।
विश्राव्य पलितः प्राज्ञो बिलमन्यज्जगाम ह ॥ १९०

एवं प्रज्ञावता बुद्ध्या दुर्बलेन बलीयसः ।
एकेन बहवोऽमित्राः पलितेनातिसन्धिताः ॥ १९१

[1]अरिणाऽप्यसमर्थेन सन्धिं कुर्वीत पण्डितः ।
मूषिकश्च विडालश्च मुक्तावन्योन्यसंश्रयात् ॥ १९२

इत्येष क्षत्रधर्मस्य मया मार्गो निदर्शितः ।
विस्तरेण महीपाल सङ्क्षेपेण पुनश्शृणु ॥ १९३

अन्योन्यं कृतवन्तौ तौ [2]जग्मतुः प्रीतिमुत्तमाम् ।
अन्योन्यमभिसन्धातुम् [3]अभूच्चैव तयोर्मतिः ॥ १९४

---

1. अ—अरिणाऽपि समर्थेन 2. अ—चक्रतुः
3. अ—सम्बभूव

अत्र प्राज्ञोऽभिसन्धत्ते सम्यग्बुद्धिबलाश्रयात् ।
तथाऽतिसन्ध्यते प्राज्ञः प्रमादादपि चाबुधैः ॥ १९५

तस्माद्भीतवद्भीतो विश्वस्तवदविश्वसेत् ।
न ह्यप्रमत्तश्चलते चलितो वा न नश्यति ॥ १९६

काले हि रिपुणा सन्धिः काले मित्रेण विग्रहः ।
कार्य इत्येव तत्त्वज्ञाः प्राहुर्नित्यं युधिष्ठिर ॥ १९७

एवं ज्ञात्वा महाराज शास्त्रार्थमभिगम्य च ।
अभियुक्तोऽप्रमत्तश्च प्राग्भयाद्भीतवच्चरेत् ॥ १९८

भीतवत् संहितः कार्यः प्रतिसन्धिस्तथैव च ।
भयादुत्पद्यते बुद्धिर् अप्रमत्ताभियोगजा ॥ १९९

न भयं जायते राजन् भीतस्यानागते भये ।
अभीतस्य तु विस्रम्भात् सुमहज्जायते भयम् ॥ २००

न भीरुरिति चात्यन्तं मन्त्रो देयः कथञ्चन ।
अविज्ञानाद्धि विज्ञाने गच्छेदास्पददर्शनम् ॥ २०१

तस्मादभीतवद्भीतो विश्वस्तवदविश्वसन् ।
कार्याणां गुरुतां बुद्ध्वा नानृतः किञ्चिदाचरेत् ॥ २०२

एवमेतन्मया प्रोक्तम् इतिहासं युधिष्ठिर ।
श्रुत्वा त्वं सुहृदां मध्ये यथावत् समुदाचर ॥ २०३

उपलभ्य मतिं चाग्र्याम् अरिमित्रान्तरं तथा ।

सन्धिविग्रहकालौ च मोक्षोपायं तथाऽऽपदि ॥ २०४

शत्रुसाधारणे कृत्ये कृत्वा सन्धिं बलीयसा ।
समाहितश्चरेद्बुद्ध्या कृतार्थश्च न विश्वसेत् ॥ २०५

अविरुद्धां त्रिवर्गेण नीतिमेतां युधिष्ठिर ।
अभ्युत्तिष्ठ श्रुतात्तस्माद् भूयस्संरञ्जयन् प्रजाः ॥ २०६

ब्राह्मणैश्चैव ते सार्धं यात्रा भवतु पाण्डव ।
ब्राह्मणाद्धि परं श्रेय इह लोके परत्र च ॥ २०७

एते धर्मस्य वेत्तारः कृतज्ञास्सततं प्रभो ।
पूजिताश्शुभकर्तारः पूजयैनाञ्जनाधिप ॥ २०८

राज्यं श्रेयः परं राजन् यशश्च महदाप्स्यसे ।
कुलं च सन्ततिं चैव करिष्यन्ति सुपूजिताः ॥ २०९

श्रुतं च ते भारत सन्धिविग्रहं
विभावितं बुद्धिविशेषकारितम् ।
तथा त्ववेक्ष्य क्षितिपेन सर्वदा
निषेवितव्यं नृप शत्रुमण्डलम् ॥ २१०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये २१० श्लोकाः]

## ॥ एकोनत्रिंशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति पूजनीब्रह्मदत्तसंवादानुवादः ॥

युधिष्ठिरः—

उक्तो मन्त्रो महाराज न विश्वासोऽस्ति शत्रुषु ।
कथं हि राजा वर्तेत यदि सर्वत्र नाश्वसेत् ॥ १

विश्वासाद्धि परं राजन् राज्ञामुत्पद्यते भयम् ।
कथं वै नाश्वसन् राजा शत्रूञ्जयति पार्थिवः ॥ २

एतन्मे संशयं छिन्धि मनो मे सम्प्रमुह्यते ।
अविश्वासे कथामेताम् उपाश्रित्य पितामह ॥ ३

भीष्मः—

शृणु कौन्तेय यो वृत्तो ब्रह्मदत्तनिवेशने ।
पूजन्या सह संवादो ब्रह्मदत्तस्य [1]धीमतः ॥ ४

[2]काम्पिल्ये ब्रह्मदत्तस्य अन्तःपुरनिवासिनी ।
पूजनी नाम शकुनिर् दीर्घकालं सुखोषिता ॥ ५

रुतज्ञा सर्वभूतानां तथा वै जीवजीविका ।
सर्वज्ञा सर्वधर्मज्ञा तिर्यग्योनिं गताऽपि सा ॥ ६

अभिप्रजाता सा तत्र पुत्रमेकं सुवर्चसम् ।

1. अ—भूपतेः  2. अ—काम्बील्ये  ख-घ—काम्बिल्ये

समकालं च राज्ञोऽपि देव्यां पुत्रो व्यजायत ॥ ७

समुद्रतीरं सा गत्वा आजहार फलद्वयम् ॥ ७॥

पुष्ट्यर्थं स्वस्य पुत्रस्य राजपुत्रस्य चैव हि ।
फलमेकं सुतायादाद् राज्ञः पुत्राय चापरम् ॥ ८॥

अमृतास्वादसदृशं बलतेजोभिवर्धनम् ।
तत्रागच्छत् परां [1]वृद्धिं राजपुत्रः फलाशनात् ॥ ९॥

धात्र्या हस्तगतश्चापि तेनाक्रीडत पक्षिणा ॥ १०

शून्ये तु तमुपादाय पक्षिणं समजातकम् ।
हत्वा ततस्तं राजेन्द्र धात्र्या हस्तमुपागमत् ॥ ११

अथ सा शकुनी राजन्नागता तत्र भामिनी ।
अपश्यन्निहतं पुत्रं तेन बालेन भूपते ॥ १२

बाष्पपूर्णमुखी दीना दृष्ट्वा तं पतितं सुतम् ।
पूजनी दुःखसन्तप्ता रुदती वाक्यमब्रवीत् ॥ १३

पूजनी—

क्षत्रिये सङ्गतिर्नास्ति न प्रीतिर्न च सौहृदम् ।
कारणे सान्त्वयन्त्येते कृतार्थास्सन्त्यजन्ति च ॥ १४

क्षत्रियेषु न विश्वासः कार्यस्सर्वापराधिषु ।
अपकृत्यापि सततं सान्त्वयन्ति निरर्थकम् ॥ १५

---

1. ख-घ—तृप्तिं

इयमद्य करोम्यस्य सदृशीं वैरयातनाम् ।
कृतघ्नस्य नृशंसस्य नित्यं विश्वासघातिनः ॥ १६

सहजातस्य वृद्धस्य तथैव सहभोजिनः ।
शरण्यस्य वधश्चैव त्रिविधं तस्य किल्बिषम् ॥ १७

भीष्मः—

इत्युक्त्वा चरणाभ्यां तु नेत्रे नृपसुतस्य च ।
हृत्वा चैवाम्बरस्थेदं पूजनी वाक्यमब्रवीत् ॥ १८

पूजनी—

इच्छयेह कृतं पापं सद्य एवोपसर्पति ।
कृतं प्रतिकृतं तेषां न नश्यति शुभाशुभम् ॥ १९

पापं कर्म कृतं किञ्चिद् यदि तस्मिन् न विद्यते ।
निपात्यतेऽस्य पुत्रेषु पौत्रेष्वपि च नप्तृषु ॥ २०

ब्रह्मदत्तः—

अस्ति ते कृतमस्माभिर् अस्ति प्रतिकृतं त्वया ।
उभयं तत् समं भूतं वस पूजनि मा गमः ॥ २१

पूजनी—

सकृत् कृतापराधस्य तत्रैव परिलम्बतः ।
न तद्बुधाः प्रशंसन्ति श्रेयस्तत्रापसर्पणम् ॥ २२

सान्त्वे प्रयुक्ते विवृते वैरे चैव न विश्वसेत् ।
क्षिप्रं स हन्यते मूढो न हि वैरं प्रशाम्यति ॥ २३

अन्योन्यकृतवैराणां पुत्रपौत्रं नियच्छति ।
पुत्रपौत्रे विनष्टे तु परलोकं नियच्छति ॥ २५

सर्वेषां कृतवैराणाम् अविश्वासस्सुखावहः ।
एकान्ततो न विश्वासः कार्यो विश्वासघातके ॥ २०

न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत् ।
कामं विश्वासयेदन्यान् परेषां तु न विश्वसेत् ॥ २६

माता पिता बान्धवानां वरिष्ठौ
भार्या क्षेत्रं बीजमात्रं तु पुत्रः ।
भ्राता शत्रुः क्लिन्नपाणिर्वयस्य
आत्मा ह्येकस्सुखदुःखस्य भोक्ता ॥ २७

अन्योन्यकृतवैराणां न सन्धिरुपपद्यते ।
स च हेतुरतिक्रान्तो यदर्थमहमावसम् ॥ २८

[1]पूजितस्यार्थमानाभ्यां स्यात्तु पूर्वापकारिणः ।
हृदयं भवत्यविश्वस्तं कर्म त्रासयते बलात् ॥ २९

पूर्वं सम्मानना यत्र पश्चाच्चैव विमानना ।
जह्यात्तं बुद्धिमान् वासं सम्मानितविमानितः ॥ ३०

उषिताऽस्मि तवागारे दीर्घकालमहिंसिता ।
तदिदं वैरमुत्पन्नं सुखमास्स्व व्रजाम्यहम् ॥ ३१

1. क-घ—पूजिताश्चा

ब्रह्मदत्तः—

यः कृते प्रतिकुर्याद्वै न स तत्राप[1]राप्नुते ।
अनृणस्तेन भवति वस पूजनि मा गमः ॥ ३२

पूजनी—

न कृतस्य न कर्तुश्च सख्यं सन्धीयते पुनः ।
हृदयं [2] तत्र जानाति कर्तुश्चैव कृतस्य च ॥ ३३

ब्रह्मदत्तः—

कृतस्य चैव कर्तुश्च सख्यं सन्धीयते पुनः ।
वैरस्योपशमो दृष्टः पापं नोपाश्नुते पुनः ॥ ३४

पूजनी—

नास्ति वैरमतिक्रान्तं सान्त्वितोऽस्मीति नाश्वसेत् ।
[3]विश्वासाद्बाध्यते लोकस् तस्माच्छ्रेयो ह्यदर्शनम् ॥ ३५

तरसा ये न शक्यन्ते शस्त्रैस्सुनिशितैरपि ।
साम्ना तेऽपि निगृह्यन्ते गजा इव करेणुभिः ॥ ३६

ब्रह्मदत्तः—

संवासाज्जायते स्नेहो जीवितान्तकरेष्वपि ।
अन्योन्यस्य च विश्वासश् श्वानश्वपचयोरिव ॥ ३७

अन्योन्यकृतवैराणां संवासान्मृदुतां गतम् ।

---

1. घ—राप्नुयात्  2. क-ख-घ—न विजानाति
3. ख—स्याद्बुध्यते वैरिलोकस्  ख—विश्वासाद्बुध्यते

नावतिष्ठति तद्वैरं पुष्करस्थमिवोदकम् ॥ ३८

वैरं पञ्चसमुत्थानं बुध्यन्ते तत्र पण्डिताः ।
स्त्रीकृतं वास्तुजं वाग्जं स्वसपत्नापराधजम् ॥ ३९

तत्र सर्वे न हन्तव्यं क्षत्रियेण विशेषतः ।
प्रकाशं वाऽप्रकाशं वा बुद्ध्वा दोषबलाबलम् ॥ ४०

पूजनी—

कृतपापे न विश्वासः कार्यस्त्विह सुहृद्यपि ।
प्रच्छन्नं तिष्ठते वैरं गूढोऽग्निरिव दारुषु ॥ ४१

न वित्तेन न पारुष्यैर् न च सान्त्वेन च श्रुतैः ।
वैराग्निश्शाम्यते राजन् निमग्नोऽग्निरिवार्णवे ॥ ४२

न हि वैराग्निरुद्भूतः कर्म चाप्यपराधजम् ।
अदग्ध्वा शाम्यते नृणां विना ह्येकतरक्षयात् ॥ ४३

सत्कृतस्यार्थमानाभ्यां तत्र [1]सर्वापकारिणः ।
नैव शान्तिर्न विश्वासः कर्मणा जायते बलात् ॥ ४४

नैवापकारे कस्मिंश्चिद् अहं त्वयि तथा भवान् ।
उषितौ वाऽपि चकितं नेदानीं विश्वसाम्यहम् ॥ ४५

ब्रह्मदत्तः—

कालेन क्रियते कार्यं तथैव विविधाः क्रियाः ।

---

1. ख—पू

कालेनैव प्रवर्तन्ते कः कस्येत्यपराध्यति ॥ ४६

तुल्यं चोभे प्रवर्तेते मरणं जन्म चैव हि ।
कार्यते चैव कालेन तन्निमित्तं च जीवति ॥ ४७

[1]बध्यन्ते युगपत् केचिद् एकैकं चापरे तथा ॥ ४७॥

पूजनी—

नास्ति वैरस्य विश्वासस् सान्त्वितोऽस्मीति नाश्वसेत् ।
विश्वासाद्बध्यते तस्माच् छ्रेयो मेऽदर्शनं परम् ॥ ४८॥

ब्रह्मदत्तः—

कालो दहति भूतानि सम्प्राप्तोऽग्निरिवेन्धनम् ॥ ४९

नाहं प्रमाणं नैव त्वम् अन्योन्यं कारणं शुभे ।
कालो नित्यमुपादत्ते सुखं दुःखं च देहिनाम् ॥ ५०

एवं वसेह सस्नेहा यथाकाममहिंसिता ।
यत् कृतं ते मया क्षान्तं त्वं च वै क्षम पूजनि ॥ ५१

पूजनी—

यदि कालः प्रमाणं ते न वैरं कस्यचिद्भवेत् ।
कस्मादपचितिं यान्ति बान्धवा बान्धवे हते ॥ ५२

कस्माद्देवासुरास्सर्वे अन्योन्यमभिजघ्निरे ॥ ५२॥

यदि कालेन निर्याणं सुखदुःखे भवाभवौ ।

---

2. क-घ—वध्यन्ते

भिषजो भैषजं कर्तुं कस्मादिच्छन्ति रोगिणे ॥ ५३॥
यदि कालेन पच्यन्ते भेषजैः किं प्रयोजनम् ॥ ५४

प्रलापस्सुमहान् कस्मात् क्रियते शोकमूर्च्छितैः ।
यदि कालः प्रमाणं ते कस्माद्धर्मोऽस्ति कर्तृषु ॥ ५५

तव पुत्रो ममापत्यं हतवान् हिंसितो मया ।
अनन्तरं त्वया चाहं बाधितव्या महीपते ॥ ५६

अहं हि पुत्रशोकेन कृतपापा तवात्मजे ।
तथा त्वया प्रहर्तव्यं मयि तत्त्वं च मे शृणु ॥ ५७

भक्षार्थं क्रीडनार्थं वा नरा इच्छन्ति पक्षिणः ।
तृतीयो नास्ति संयोगो वधबन्धादृते क्षमः ॥ ५८

वधबन्धभयादेके मोक्षतन्त्रमुपाश्रिताः ।
जनीमरणजं दुःखम् इत्याहुर्विदुषो जनाः ॥ ५९

सर्वस्य दयिताः प्राणास् सर्वस्य दयितास्सुताः ।
दुःखादुद्विजते सर्वं सर्वस्य सुखमीप्सितम् ॥ ६०

दुःखं जरा ब्रह्मदत्त दुःखमर्थविपर्ययः ।
दुःखं चानिष्टसंवासो दुःखमिष्टवियोगजम् ॥ ६१

वैरबन्धकृतं दुःखं स्त्रीकृतं सहजं तथा ।
दुःखं दुःखेन सततं विवर्धति नराधिप ॥ ६२

न दुःखं परदुःखं वै केचिदाहुरबुद्धयः ॥ ६२॥

यो दुःखं नाभिजानाति न जल्पति महाजने ।
यस्तु शोचति दुःखार्तस् स कथं वक्तुमुत्सहेत् ॥ ६३॥

रसज्ञस्तस्य दुःखस्य यथाऽऽत्मनि तथा परे ॥ ६४

भिन्ना श्लिष्टा न शक्यन्ते शस्त्रैस्सुनिशितैरपि ।
साम्ना तेऽपि निगृह्यन्ते गजा इव करेणुभिः ॥ ६५

यत् कृतं ते मया राजंस् त्वया च मम यत् कृतम् ।
न तद्वर्षशतैश्शक्यं व्यपोहितुमरिन्दम ॥ ६६

आवयोः कृतमन्योन्यं तस्य सन्धिर्न विद्यते ।
[1]निश्चयश्चार्थशास्त्रेषु न विश्वासस्सुखोदयः ॥ ६७

उशना त्वथ गाथे द्वे प्रह्लादायाब्रवीत् पुरा ॥ ६७॥

ये वैरिणश्श्रद्दधते सत्ये सत्येतरेऽपि वा ।
वध्यन्ते श्रद्दधाना हि मधु शुष्कतृणैरिव ॥ ६८॥

[2]अपाकृत्य हि वैराणि सान्त्वयन्ति नराधिपाः ।
अथैनं प्रतिहिंसन्ति पूर्णं घटमिवाश्मनि ॥ ६९॥

सदा न विश्वसेद्राजन् पापं कृत्वेह कस्यचित् ।

---

1. ख—स्मृत्वा स्मृत्वा हि तं पुत्रं नवं वैरं भविष्यति ।
वैरमन्तिकमासाद्य यः प्रीतिं कर्तुमिच्छति ।
मृण्मयस्येव भिन्नस्य तस्य सन्धिर्न विद्यते ॥ [अधिकः पाठः]

2. ख—न हि वैराणि शाम्यन्ति कुलेष्वादशमाद्युगात् ।
आख्यातारश्च विद्यन्ते कुले चेज्जायते पुमान् ॥ [अधिकः पाठः]

अपकृत्य परेषां हि विश्वासाद्दुःखमाप्नुते ॥ ७०॥

ब्रह्मदत्तः—

नाविश्वासाच्चिनोत्यर्थं न चापीहति [1]कश्चन ।
भयाच्चैकतरं मित्रं कृतकृत्या [2]भवन्ति हि ॥ ७१॥

पूजनी—

यस्येह [3]व्रणिनौ पादौ पद्भ्यां च परिधावतः ।
[4]क्षिण्येते तस्य तौ पादौ सुगुप्तमपि धावतः ॥ ७२॥

नेत्राभ्यां सरुजाभ्यां यः प्रतिवातमुदीक्षते ।
तस्य वायुरुजा नित्यं नेत्रयोर्भवति ध्रुवम् ॥ ७३॥

दुष्टं पन्थानमासाद्य यो मोहादभिपद्यते ।
आत्मनो बलमज्ञात्वा तदन्तं तस्य जीवितम् ॥ ७४॥

यस्तु वर्षमविज्ञाय क्षेत्रं कर्षति मानवः ।
हीनः पुरुषकारेण तस्य वै नाप्नुते फलम् ॥ ७५॥

यस्तु तिक्तं कषायं वा स्वादु वा मधुरं हितम् ।
आहारं कुरुते नित्यं सोऽमृतत्वाय कल्पते ॥ ७६॥

पथ्यं भुक्त्वा नरो योऽन्यल्लोभादश्नाति भोजनम् ।

---

1. ख—किञ्चन
2. क-घ—भवन्त्विह ख—भवत्विह
3. क-घ—व्रणितौ ख—पूजये व्रणितौ
4. क-ख-घ—क्षुण्येते

परिणाममविज्ञाय तदन्तं तस्य जीवितम् ॥ ७७॥

दैवं पुरुषकारश्च स्थितावन्योन्यसंश्रयात् ।
उदात्तं कर्म वै तत्र दैवं क्लीबा उपासते ॥ ७८॥

कर्म चात्महितं कार्यं तीक्ष्णं वा यदि वा मृदु ।
[1]गृह्यते कर्मशीलस्तु सदाऽनर्थैरकिञ्चनः ॥ ७९॥

तस्मात् साधयितव्येऽर्थे कार्य एव पराक्रमः ।
सर्वस्वमपि सन्त्यज्य कार्यमात्महितं नरैः ॥ ८०॥

विद्या शौचं च दाक्ष्यं च बलं शौर्यं च पञ्चमम् ।
मित्राणि सहजान्याहुर् वर्तयन्तीह यैर्बुधाः ॥ ८१॥

निवेशनं च कुप्यं च भार्या क्षेत्रं सुहृज्जनम् ।
एतान्युपचितान्याहुस् सर्वतो लभते पुमान् ॥ ८२॥

सर्वत्र रमते प्राज्ञस् सर्वत्र च विरोचते ।
न च भीषयते किञ्चिद् भीषितो न बिभेति च ॥ ८३॥

नित्यं बुद्धिमतो ह्यर्थस् स्वल्पकोऽपि विवर्धते ।
दाक्ष्येण कुर्वतां कर्म संयमात् प्रतितिष्ठति ॥ ८४॥

गृहस्नेहावबद्धानां नराणामल्पमेधसाम् ।
कुस्त्री खादति मांसानि माघमासे गवामिव ॥ ८५॥

गृहं क्षेत्राणि मित्राणि स्वदेश इति चापरे ।

---

1. ख—ग्रस्यते

इत्येवमवसीदन्ति नरा बुद्धिविपर्यये ॥ ८६॥

उत्पथाच्च विमानाच्च देशाद्दुर्भिक्षपीडितात् ।
अन्यत्र वसतिं गच्छेद् वसेद्वा नित्यमानितः ॥ ८७॥

तस्मादन्यत्र यास्यामि वस्तुं नाहमिहोत्सहे ।
कृतमेतदनाहार्यं तव पुत्रेण पार्थिव ॥ ८८॥

कुभार्यां च कुपुत्रं च कुराजानं कुसौहृदम् ।
कुदेशं च कुसम्बन्धं दूरतः परिवर्जयेत् ॥ ८९॥

कुमित्रे नास्ति विश्वासः कुभार्यायां कुतो रतिः ।
कुराजनि धृतिर्नास्ति कुदेशे न प्रजीवति ॥ ९०॥

कुपुत्रे सौहृदं नास्ति नित्यमस्थिरसौहृदे ।
अवमानः कुसम्बन्धे भवत्यर्थविपर्यये ॥ ९१॥

सा भार्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः ।
तन्मित्रं यत्र विश्वासस् स देशो यत्र जीवति ॥ ९२॥

यत्र नास्ति बलात्कारस् स राजा तीव्रशासनः ।
स च यौनाभिसम्बन्धो [1]यं जनोऽपि बुभूषति ॥ ९३॥

भार्या देशोऽथ मित्राणि पुत्रसम्बन्धिबान्धवाः ।
एते सर्वे गुणवति धर्मनेत्रे महीपतौ ॥ ९४॥

अधर्मज्ञस्य विषये प्रजा नश्यन्ति निग्रहात् ॥ ९५

1. अ—यस्सतोऽपि

राजा मूलं त्रिवर्गस्य अप्रमत्तोऽनुपालयन् ।
बलिषड्भागमुद्धृत्य फलं तदुपयोजयेत् ॥                    ९६
न रक्षति प्रजास्सम्यक् स च पार्थिवतस्करः ॥                    ९६॥

दत्त्वाऽभयं यस्स्वयमेव राजा
न तत् प्रमाणं कुरुतेऽर्थलोभात् ।
स [1]धर्मलोपादुपलभ्य पापम्
अधर्मबुद्धिर्निरयं प्रयाति ॥                    ९७॥

दत्त्वाऽभयं स्वयं राजा प्रमाणं कुरुते यदा ।
स सर्वं सुखमाप्नोति प्रजा धर्मेण पालयन् ॥                    ९८॥

पिता भ्राता गुरुश्शास्ता वह्निर्वैश्रवणो यमः ।
सप्त राजगुणानेतान् मनुराह प्रजापतिः ॥                    ९९॥

पिता हि राजा लोकस्य प्रजानां योऽनुकम्पिता ।
तस्मिन् मिथ्यापनीते हि तिर्यग् भवति मानवः ॥                    १००॥

सम्भावयति मातेव दीनमभ्यवपद्यते ।
दहत्यग्निरिवानिष्टान् दमयत्यहितांस्तदा ॥                    १०१॥

इष्टेषु विसृजत्यर्थान् कुबेर इव कामदः ।
गुरुर्धर्मोपदेशेन गोप्ता च परिपालनात् ॥                    १०२॥

यस्तु रञ्जयते राजा पौरजानपदान् गुणैः ।

---

1. ख—सर्वलोका

न तस्य भ्रश्यते राज्यं गुणधर्मानुपालनात् ॥ १०३॥

यस्सम्यक् प्रतिगृह्णाति पौरजानपदं जनम् ।
स सुखं पश्यते राजा इह लोके परत्र च ॥ १०४॥

नित्योद्विग्नाः प्रजा यस्य करभारप्रपीडिताः ।
विप्रलुप्यन्त्यनर्थैर्हि स गच्छति पराभवम् ॥ १०५॥

प्रजा यस्य च वर्धन्ते सरसीव महोत्पलम् ।
स राजा सर्वसुखदस् स्वर्गलोके महीयते ॥ १०६॥

बलिना विग्रहो राजन् न कदाचित् प्रशस्यते ।
बलिना विग्रही तस्य कुतो राज्यं कुतो रतिः ॥ १०७॥

भीष्मः—

सैवमुक्त्वा शकुनिका ब्रह्मदत्तं नराधिपम् ।
राजानं समनुज्ञाप्य जगामाभीप्सितां दिशम् ॥ १०८॥

एतत्ते ब्रह्मदत्तस्य पूजन्या सह भाषितम् ।
मयोक्तं भरतश्रेष्ठ किमन्यच्छ्रोतुमिच्छसि ॥ १०९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि नवमोऽध्यायः ॥ ९ ॥
[ अस्मिन्नध्याये १०९॥ श्लोकाः ]

## ॥ त्रिंशदधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति शत्रुन्तपाय भारद्वाजोक्तापद्धर्मानुवादः ॥



युधिष्ठिरः—

युगक्षयात् परिक्षीणे धर्मे लोके च भारत ।
दस्युभिः पीड्यमाने च कथं स्थेयं पितामह ॥ १

भीष्मः—

हन्त ते वर्तयिष्यामि नीतिमापत्सु भारत ।
उत्सृज्यापि घृणां काले तथा वर्तेत भूमिपः ॥ २

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
भारद्वाजस्य संवादं राज्ञश्शत्रुन्तपस्य च ॥ ३

राजा शत्रुन्तपो नाम सौवीराणां महारथः ।
कणिङ्कमुपसङ्गम्य पप्रच्छार्थविनिश्चयम् ॥ ४

शत्रुन्तपः—

अलब्धस्य कथं लिप्सा लब्धं केन विवर्धते ।
वर्धितं पाल्यते केन पालितं प्रणयेत् कथम् ॥ ५

भीष्मः—

तस्मै विनिश्चितार्थाय परिपृष्टोऽर्थनिश्चयम् ।
उवाच मतिमान् वाक्यम् इदं हेतुमदुत्तरम् ॥ ६

कणिङ्कः—

नित्यमुद्यतदण्डस्यान्नित्यं विवृतपौरुषः ।

अच्छिद्रश्छिद्रदर्शी च परेषां विवरानुगः ॥ ७

नित्यमुद्यतदण्डस्य भृशमुद्विजते जनः ।
तस्मात् सर्वाणि भूतानि दण्डेनैव प्रसाधयेत् ॥ ८

एवमेव प्रशंसन्ति बुधा ये तत्त्वदर्शिनः ।
तस्माच्चतुष्टये तस्मिन् प्रधानो दण्ड उच्यते ॥ ९

छिन्नमूले ह्यधिष्ठाने सर्वे तज्जीविनो हताः ।
कथं हि शाखास्तिष्ठेयुश् छिन्नमूले वनस्पतौ ॥ १०

मूलमेवादितश्छिन्द्याद् अरिपक्षस्य पण्डितः ।
ततस्सहायान् पक्षं च सर्वमेवानुशातयेत् ॥ ११

सुमन्त्रितं सुविक्रान्तं सुयुद्धं सुपलायितम् ।
आपदागमकाले तु कुर्वीत न विचारयेत् ॥ १२

वाङ्मात्रेण विनीतस्स्याद्धृदयेन क्षुरोपमः ।
श्लक्ष्णपूर्वाभिभाषी च कामक्रोधौ विवर्जयेत् ॥ १३

सपत्नसहितो राज्ये कृत्वा सन्धि न विश्वसेत् ।
अपक्रामेत्ततश्शीघ्रं कृतकार्यो विचक्षणः ॥ १४

शत्रुं च मित्रं पूर्वेण सान्त्वेनैवानुसान्त्वयेत् ।
नित्यशश्चोद्विजेत्तस्मात् सर्पाद्वेश्मगतादिव ॥ १५

यस्य बुद्धिं परिभवेत् तमतीतेन सान्त्वयेत् ।
अनागतेन दुष्प्रज्ञं प्रत्युत्पन्नेन पण्डितम् ॥ १६

अञ्जलिश्शपथं सान्त्वं शिरसा पादवन्दनम् ।
अश्रुप्रपातनं चैव कर्तव्यं भूतिमिच्छता ॥ १७

वहेदमित्रं स्कन्धेन यावदर्थस्य लम्भनम् ।
अथैनमागते काले भिन्द्याद्घटमिवाश्मनि ॥ १८

मुहूर्तमपि राजेन्द्र तिन्दुकालातवज्ज्वलेत् ।
मा तुषाग्निरिवानर्चिर् धूमायेत नरश्चिरम् ॥ १९

नानर्थकं ह्यर्थबलं कृतघ्नेन समाचरेत् ।
कार्यार्थी शक्यते भोक्तुं कृतकार्योऽवमन्यते ॥ २०

तस्मात् सर्वाणि कार्याणि सावशेषाणि कारयेत् ॥ २०॥

कोकिलस्य वराहस्य मेरोश्शून्यस्य वेश्मनः ।
व्यालस्य भक्तचित्तस्य [1]यच्छ्रेयस्तत् समाचरेत् ॥ २१॥

उत्थायोत्थाय गच्छेच्च नित्ययुक्तो रिपोर्गृहम् ।
कुशलं तस्य पृच्छेत यद्यप्यकुशलं महत् ॥ २२॥

नालसाः प्राप्नुवन्त्यर्थान् न क्लीबा नातिमानिनः ।
न च लोकरवाद्भीता न च शश्वत् परीक्षिणः ॥ २३॥

नास्य च्छिद्रं परो विद्याद् विद्याच्छिद्रं परस्य तु ।
गूहेत् कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ २४॥

बकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत् ।

---

1. घ—यज्ज्ञेय

वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् ॥ २५॥

पानमक्षास्तथा नार्यो मृगया गीतवादितम् ।
एतानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान् ॥ २६॥

कुर्यात्तृणमयं पाशं शयीत मृगशायिकाम् ।
अन्धस्स्यादन्धवेलायां बाधिर्यमपि संश्रयेत् ॥ २७॥

देशकालं समासाद्य विक्रमेत विचक्षणः ।
देशकालव्यतीतो हि विक्रमो विफलो भवेत् ॥ २८॥

कालाकालौ सम्प्रधार्य बलाबलमथात्मनः ।
परस्य च बलं ज्ञात्वा तथाऽऽत्मानं नियोजयेत् ॥ २९॥

दण्डेनोपनतं शत्रुं यो राजा न नियच्छति ।
स मृत्युमुपगूहेत गर्भमश्वतरी यथा ॥ ३०॥

सुपुष्पितस्स्यादफलः फलवान् स्याद्दुरारुहः ।
आमस्स्यात् पक्वसङ्काशो न च शीर्येत कस्यचित् ॥ ३१॥

आशां कालवतीं कुर्यात् कालं विघ्नेन योजयेत् ।
विघ्नं निमित्ततो ब्रूयान्निमित्तं चापि हेतुमत् ॥ ३२॥

भीतवत् संविधातव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥ ३३॥

न साहसमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति ॥ ३४॥

अनागतं विजानीयात् त्यजेद्भयमुपागतम् ।
पुनर्बुद्धिक्षयात् किञ्चिद् अतिवृत्तिं निशामयेत् ॥ ३५॥

प्रत्युपस्थितकालस्य सुखस्य परिवर्जनम् ।
अनागतसुखाशा च नैष बुद्धिमतां नयः ॥ ३६॥

योऽरिणा सह सन्धाय विश्वस्तस्स्वपते सुखम् ।
स वृक्षाग्रे प्रसुप्तो वा पतितः प्रतिबुध्यते ॥ ३७॥

कर्मणा येन केनेह मृदुना दारुणेन वा ।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥ ३८॥

ये सपत्नास्सपत्नानां सर्वांस्ताननुवर्तयेत् ।
आत्मनश्चापि बोद्धव्याश् चारास्सुप्रहिताः परैः ॥ ३९॥

चारस्सुविहितः कार्य आत्मनोऽथ परस्य च ।
पाषण्डाद्यैरविज्ञातैर् विदित्वाऽरिं वशं नयेत् ॥ ४०॥

विश्वासयित्वा तु परं तत्त्वभूतेन हेतुना ।
अथास्य प्रहरेत् काले किञ्चित् प्रचलिते पदे ॥ ४१॥

अशङ्क्यमपि शङ्केत नित्यं शङ्केत शङ्कितान् ।
भयं ह्यशङ्किताज्जातं समूलमपि कृन्तति ॥ ४२॥

अवधानेन मौनेन काषायेण जटाजिनैः ।
विश्वासयित्वा द्वेष्टारम् अवलुम्पेद्यथा वृकः ॥ ४३॥

पुत्रो वा यदि वा भ्राता पिता वा यदि वा सुहृत् ।

अर्थस्य विघ्नं कुर्वाणा हन्तव्या भूतिमिच्छता ॥ ४४॥

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥ ४५॥

प्रत्युत्थानाभिवादाभ्यां सम्प्रदानेन केनचित् ।
प्रपूजयन्निघाती स्यात् तीक्ष्णतुण्ड इव द्विजः ॥ ४६॥

नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दारुणम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति परमां श्रियम् ॥ ४७॥

नास्ति जात्या रिपुर्नाम मित्रं नाम न विद्यते ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥ ४८॥

न विमुञ्चेत दायादं वदन्तं करुणं बहु ।
न दुःखं तत्र कर्तव्यं हन्यात् पूर्वापकारिणम् ॥ ४९॥

सङ्ग्रहानुग्रहे यत्नस् सदा कार्यो विजानता ।
निग्रहश्चापि कर्तव्यो यत्नेन हितमिच्छता ॥ ५०॥

प्रहरिष्यन् प्रियं ब्रूयात् प्रहृत्यापि प्रियोत्तरम् ।
अपि चास्य शिरश्छित्त्वा शोचेत च रुदेत च ॥ ५१॥

निमन्त्रयेत सान्त्वेन सम्मानेन तितिक्षया ।
आशाकरणमित्येतत् कर्तव्यं भूतिमिच्छता ॥ ५२॥

न शुष्कवैरं कुर्वीत न बाहुभ्यां नदीं तरेत् ॥ ५३

अनर्थकमनायुष्यं गोविषाणस्य भक्षणम् ।
दन्ताश्च परिमृद्यन्ते रसश्चापि न लभ्यते ॥ ५४

त्रिवर्गे त्रिविधा पीडा ह्यनुबन्धस्तथैव च ।
अनुबन्धं तथा पीडां ज्ञात्वा विद्वान् वशं नयेत् ॥ ५५

ऋणशेषं चाग्निशेषं शत्रुशेषं तथैव च ।
पुनः पुनः प्रवर्धन्ते तस्माच्छेषं न कारयेत् ॥ ५६

ऋणशेषा विवर्धन्ते परिभूताश्च शत्रवः ।
आवहन्त्यनयं तीव्रं व्याधयश्चाप्युपेक्षिताः ॥ ५७

नासम्यक्कृत्यकारी स्याद् अप्रमत्तस्सदा भवेत् ।
कण्टकोऽपि हि दुश्छिन्नो विकारं कुरुते चिरम् ॥ ५८

वधेन च मनुष्याणां मार्गाणां दूषणेन च ।
आकाराणां विनाशैश्च परराष्ट्रं विनाशयेत् ॥ ५९

गृध्रदृष्टिर्बकालीनश् श्वचेष्टस्सिंहविक्रमः ।
अनुद्विग्नः काकशङ्की भुजङ्गचरितं चरेत् ॥ ६०

श्रेणीमुख्योपजापेषु वल्लवानुनयेषु च ।
अमात्यान् परिरक्षेत भेदसङ्घातयोरपि ॥ ६१

मृदुरित्यवजानन्ति तीक्ष्ण इत्युद्विजन्ति च ।
तीक्ष्णकाले च तीक्ष्णस्स्यान्मृदुकाले मृदुर्भवेत् ॥ ६२

मृदुना हि मृदुं हन्ति मृदुना हन्ति दारुणम् ।
नासाध्यं मृदुना किञ्चित् तस्मात्तीक्ष्णतरो मृदुः ॥ ६३

काले मृदुर्यो भवति काले भवति दारुणः ।
स साधयति कृत्यानि शत्रूंश्चैवाधितिष्ठति ॥ ६४

पण्डितेन विरुद्धस्तु दूरस्थोऽस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥ ६५

न तत्तरेद्यस्य न पारमुत्तरे-
न्न तद्धरेद्यत् पुनराहरेत् परः ।
न तत् खनेद्यस्य न मूलमुद्धरे
न्न तं हरेद्यस्य शिरो न पातयेत् ॥ ६६

इतीदमुक्तं वृजिनाभिसंहितं
न चैतदेवं पुरुषस्समाचरेत् ।
परप्रयुक्तस्तु कथं विभावयेद्
अतो मयोक्तं भवतो हितार्थिना ॥ ६७

भीष्मः—

यथावदुक्तं वचनं हितं तदा
निशम्य विप्रेण सुवीरराष्ट्रपः ।

तथाऽकरोद्वाक्यमदीनचेतनश्
श्रियं च दीप्तां बुभुजे सबान्धवः ॥ ६८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥
॥ ८७ ॥ आपद्धर्मपर्वणि दशमोऽध्यायः ॥ १० ॥
॥ अस्मिन्नध्याये ६८ श्लोकाः ॥

---

## ॥ एकत्रिंशदधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति आपदि अभक्ष्यभक्षणेनाप्यात्मरक्षणकरणे दृष्टान्ततया विश्वामित्रश्वपचसंवादानुवादः ॥

---

युधिष्ठिरः—

हीने परमके धर्मे सर्वलोकावलङ्घिते ।
अधर्मे धर्मतां नीते धर्मे चाधर्मतां गते ॥ १

मर्यादासु प्रभिन्नासु क्षुभिते लोकनिश्चये ।
राजभिः पीडिते लोके चोरैश्चापि विशां पते ॥ २

सर्वाश्रमेषु मूढेषु कर्मसूपहतेषु च ।
कामाल्लोभाच्च मोहाच्च भयं पश्यत्सु भारत ॥ ३

अविश्वस्तेषु सर्वेषु नित्यं भूतेषु भारत ।
नित्यं च हन्यमानेषु वञ्चयत्सु परस्परम् ॥ ४

प्रदीप्तेषु च सर्वेषु ब्राह्मण्ये चाभिपीडिते ।
अवर्षति च पर्जन्ये मिथो भेदे समुत्थिते ॥ ५

सर्वस्मिन् दस्युसाद्भूते पृथिव्यामुपजीवने ।
केनस्विद्ब्राह्मणो जीवेज् जघन्ये काल आगते ॥ ६

अतितिक्षुः पुत्रपौत्रान् अनुक्रोशान्नराधिप ।
कथमापदि वर्तेत तन्मे ब्रूहि पितामह ॥ ७

कथं च राजा वर्तेत लोके कलुषतां गते ।
कथमर्थाच्च धर्माच्च न हीयेत परन्तप ॥ ८

भीष्मः—

राजमूला महाराज योगक्षेमास्सुवृष्टयः ।
प्रजासु व्याधयश्चैव मरणं च भयानि च ॥ ९

कृतं त्रेता द्वापरं च कलिश्च भरतर्षभ ।
राजमूला इति मतिर् मम नास्त्यत्र संशयः ॥ १०

तस्मिंस्त्वभ्यागते काले प्रजानां दोषकारके ।
विज्ञाय बलमास्थाय जीवितव्यं तदा भवेत् ॥ ११

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
विश्वामित्रस्य संवादं चण्डालस्य च पक्कणे ॥ १२

त्रेताद्वापरयोस्सन्धौ पुरा दैवव्यतिक्रमात् ।
अनावृष्टिरभूद्घोरा लोके द्वादशवार्षिकी ॥ १३

प्रजानामभिवृद्धानां युगान्ते पर्युपस्थिते ।
त्रेतायां मोक्षसमये द्वापरप्रतिपादने ॥ १४

न ववर्ष सहस्राक्षः प्रतिलोमोऽभवद्गुरुः ।
जगाम दक्षिणं मार्गं सोमो व्यावृत्तमण्डलः ॥ १५

नावश्यायोऽपि रात्र्यन्ते कुतश्चैवाभ्रराजयः ।
नद्यस्सङ्क्षिप्ततोयौघाः क्वचिदन्तर्गता भवन् ॥ १६

सरांसि सरितश्चैव कूपाः प्रस्रवणानि च ।
हतत्विट्का न्यदृश्यन्त निसर्गात् पूर्वकारितात् ॥ १७

भूमिश्शुष्कजलस्थाना विनिवृत्तसभाप्रपा ।
निवृत्तयज्ञस्वाध्याया निर्वषट्कारमङ्गला ॥ १८

उत्सन्नकृषिगोरक्षा निवृत्तविपणापणा ।
निवृत्तपूगसमया सम्प्रनष्टमहोत्सवा ॥ १९

अस्थिकङ्कालसङ्कीर्णा हाहाभूतनराकुला ।
शून्यभूयिष्ठनगरा दग्धग्रामनिवेशना ॥ २०

क्वचिच्चोरैः क्वचिच्छूरैः क्वचिद्राजभिरातुरैः ।
परस्परभयाच्चैव शून्यभूयिष्ठनिर्जना ॥ २१

गतदैवतसंयोगा वृद्धबालविनाकृता ।
गोजाविमहिषैर्हीना परस्परपराहृता ॥ २२

हतविप्रा हतारक्षा प्रनष्टोत्सवसञ्चया ।

शवभूतनरप्राया बभूव वसुधा तदा ॥　　२३

तस्मिन् प्रतिभये काले क्षीणधर्मे युधिष्ठिर ।
[1]बभूवुः क्षुधिताः [2]पुंसः खादमानाः परस्परम् ॥　　२४

ऋषयो नियमांस्त्यक्त्वा परित्यक्ताग्निदेवताः ।
आश्रमान् सम्परित्यज्य पर्यधावन्नितस्ततः ॥　　२५

विश्वामित्रोऽपि भगवान् महर्षिरनिकेतनः ।
क्षुधापरिगतो धीमान् [3]समन्तात् पर्यधावत ॥　　२६

स कदाचित् परिपतञ् श्वपचानां निकेतनम् ।
हिंस्राणां प्राणिघातानाम् आससाद वने क्वचित् ॥　　२७

विभिन्नकलशाकीर्णं श्वमांसेन च दूषितम् ।
वराहखरभग्नास्थिकपालघटसङ्कुलम् ॥　　२८

मृतचेलपरिस्तीर्णं निर्माल्य[4]क्षतभूषणम् ।
सर्पनिर्मोकमालाभिः कृतचिह्नकुटीमुखम् ॥　　२९

उलूकपक्षध्वजिभिर् देवतायतनैर्वृतम् ।
लोहघण्टापरिष्कारं श्वयूथपरिवारितम् ॥　　३०

तत् प्रविश्य क्षुधाविष्टो गाधिपुत्रो महानृषिः ।
आहारान्वेषणे युक्तः परं यत्नं समास्थितः ॥　　३१

---

1. ख—बभ्रमुः　　2. घ—मर्त्याः
3. घ—इतः षट् पादा न सन्ति　　4. ख—कृत

न च कश्चिदविन्दत् स भिक्षमाणोऽपि कौशिकः ।
मांसमन्नं फलं मूलम् अन्यद्वा तत्र किञ्चन ॥　　३२

अहो कृच्छ्रं मया प्राप्तम् इति निश्चित्य कौशिकः ।
पपात भूमौ दौर्बल्यात् तस्मिंश्चण्डालपक्कणे ॥　　३३

स चिन्तयामास मुनिः किं नु मे सुकृतं भवेत् ।
कथं वृथा न मृत्युस्स्याद् इति पार्थिवसत्तम ॥　　३४

स ददर्श श्वमांसस्य कुतन्त्रीं पतितां मुनिः ।
चण्डालस्य गृहे राजन् सद्यश्शस्त्रहतस्य वै ॥　　३५

स चिन्तयामास तदा स्तेयं कार्यमितो मया ।
न हीदानीमुपायोऽन्यो विद्यते प्राणधारणे ॥　　३६

आपत्सु विहितं स्तेयं विशिष्टसमहीनतः ।
परस्यासम्भवे पूर्वम् आस्थेयमिति [1]निश्चयः ॥　　३७

हीनादादेयमादद्यात् समाद्वा तदनन्तरम् ।
असम्भवे त्वाददीत विशिष्टादपि धार्मिकात् ॥　　३८

सोऽहमन्तावसानानां हरमाणः परिग्रहात् ।
न स्तेयदोषं पश्यामि हरिष्याम्येतदामिषम् ॥　　३९

एतां बुद्धिं समास्थाय विश्वामित्रो महातपाः ।
तस्मिन् देशे स सुष्वाप पतितो यत्र भारत ॥　　४०

---

1. घ—मे मतिः

स विगाढां निशां दृष्ट्वा सुप्ते चण्डालपक्कणे ।
शनैरुत्थाय भगवान् प्रविवेश कुटीमुखम् ॥ ४१
स सुप्तश्चापि चण्डालश् श्लेष्मापिहितलोचनः ।
परिभिन्नस्वरो रूक्षः प्रोवाचाप्रियदर्शनः ॥ ४२
कः कुतन्त्रीं [1]घट्टयति सुप्ते चण्डालपक्कणे ।
जागर्मि नावसुप्तोऽस्मि हतोऽसीति च दारुणः ॥ ४३
विश्वामित्रोऽहमित्येव सहसा तमुवाच ह ।
सहसाऽभ्यागतो भूयस् सोद्वेगस्तेन कर्मणा ॥ ४४
चण्डालस्तद्वचश्श्रुत्वा महर्षेर्भावितात्मनः ।
शयनादुपसम्भ्रान्त इयेषोत्पतितुं ततः ॥ ४५
स विसृज्याश्रु नेत्राभ्यां बहुमानात् कृताञ्जलिः ।
उवाच कौशिकं रात्रौ ब्रह्मन् किं ते चिकीर्षितम् ॥ ४६
विश्वामित्रस्तु मातङ्गम् उवाच परिसान्त्वयन् ॥ ४६॥

विश्वामित्रः—

क्षुधितो निर्गतप्राणो हरिष्यामि श्वजाघनीम् ॥ ४७
अवसीदन्ति मे प्राणास् स्मृतिर्मे नश्यति क्षुधा ।
सोऽधर्मं बुध्यमानोऽपि हरिष्यामि श्वजाघनीम् ॥ ४८
[2]यदा भैक्षं न विन्दामि युष्माकमहमालये ।
तदा बुद्धिः कृता पापे हरिष्यामि श्वजाघनीम् ॥ ४९

---

1. ख-घ—घटयति 2. अ—अर्धचतुष्टयं नास्ति

तृषितः कलुषापातान्नास्ति भीरशनार्थिनः ।
क्षुद्धर्मं नाशयत्यत्र हरिष्यामि श्वजाघनीम् ॥ ५०
अग्निर्मुखं पुरोधाश्च देवानां [1]शुचिषाड्विभुः ।
[2]यथा च सर्वभुग्ब्रह्मा तथा मां विद्धि सर्वतः ॥ ५१

भीष्मः—

तमुवाच स चण्डालो महर्षे शृणु मे वचः ।
श्रुत्वा तथा समातिष्ठ यथा धर्मान्न हीयसे ॥ ५२
मृगाणामधमं श्वानं प्रवदन्ति मनीषिणः ।
तस्याप्यधम उद्देशश् शरीरस्य तु जाघनी ॥ ५३
नेदं सम्यग्व्यवसितं महर्षे कर्म वैदिकम् ।
चण्डालस्वस्य हरणम् अभक्ष्यस्य विशेषतः ॥ ५४
साध्वन्यमनुपश्य त्वम् उपायं प्राणधारणे ।
श्वमांसलोभात्तपसो नाशस्ते स्यान्महामुने ॥ ५५
जानता विहितो मार्गो न कार्यो धर्मसङ्करः ।
मा स्म धर्मं परित्याक्षीस् त्वं हि धर्मविदुत्तमः ॥ ५६
विश्वामित्रस्ततो राजन्नित्युक्तो भरतर्षभ ।
क्षुधार्तः प्रत्युवाचेदं पुनरेव महामुनिः ॥ ५७

विश्वामित्रः—

निराहारस्य सुमहान् मम कालो व्यधावत ।
न विद्यते ह्युपायश्च कश्चिन्मत्प्राणधारणे ॥ ५८

---

1. ख-घ—शुचिवाग्　　2. अ—नास्तीदमर्धम्

तेन तेन विशेषेण कर्मणा येनकेनचित् ।
उज्जिहीर्षे सीदमानस् समर्थो धर्ममाचरेत् ॥ ५९

ऐन्द्रो धर्मः क्षत्रियाणां ब्राह्मणानामथाग्निकः ।
ब्रह्मवह्निर्मम बलं भोक्ष्यामि शमयन् क्षुधम् ॥ ६०

यथा यथैव जीवेत तत् कर्तव्यमलीलया ।
जीवितं मरणाच्छ्रेयो जीवन् धर्ममवाप्नुयात् ॥ ६१

सोऽहं जीवितमाकाङ्क्षन्नभक्ष्यस्यापि भक्षणम् ।
व्यवस्ये बुद्धिपूर्वं वै तद्भवाननुमन्यताम् ॥ ६२

जीवन् धर्मं चरिष्यामि प्रणोत्स्याम्यशुभानि च ।
तपोभिर्विद्यया चैव ज्योतींषीव महत्तमः ॥ ६३

श्वपचः—

नैतत्त्वदन् प्राप्स्यसे प्राणमद्य
नायुर्दीर्घं नामृतस्येव तृप्तिम् ।
भिक्षामन्यां भिक्ष मा ते [1]रुचिस्तु
श्वभक्षणे श्वा ह्यभक्ष्यो द्विजानाम् ॥ ६४

विश्वामित्रः—

न दुर्भिक्षे सुलभं मांसमन्यच्
छ्वपाक मन्ये च न वेद्मि वित्तम् ।

1. ख—कलिस्तु

क्षुधार्तश्चाहमगतिर्निशाचर
श्वजाघनीं षड्रसां साधु मन्ये ॥ ६५

शिष्टा वै कारणं धर्मे तद्वृत्तमनुवर्तये ।
परां मेध्याशनेत्येतां भक्ष्यां मन्ये श्वजाघनीम् ॥ ६६

श्वपचः—

असद्भिर्यस्समाचीर्णो न स धर्मस्सनातनः ।
[1]अनार्यमिह कार्यं वा मा छलेनाशुभं कृथाः ॥ ६७

विश्वामित्रः—

न पातकं नावमतम् ऋषिस्सन् कर्तुमर्हति ।
समौ च श्वमृगौ मन्ये तस्माद्भक्ष्या श्वजाघनी ॥ ६८

श्वपचः—

पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रस्य वै द्विज ।
यदि शास्त्रं प्रमाणं ते माऽभक्ष्ये वै मनः कृथाः ॥ ६९

विश्वामित्रः—

अगस्त्येनासुरो भुक्तो वातापिः [2]क्षुधितो न वै ।
अहमापद्गतः क्षुब्धो भक्षयिष्ये श्वजाघनीम् ॥ ७०

श्वपचः—

[3]भिक्षामन्यामाहरेति न च तत्कर्तु[4]मर्हसि ।
कृतं नः कार्यमेतद्वै हरतेमां श्वजाघनीम् ॥ ७१

---

1. ख—अकार्यं　　2. ख—क्षुभितेन　　घ—क्षुधितेन
3. ख—अर्धद्वयं नास्ति　　4. घ—मिच्छसि

यद्ब्राह्मणार्थे कृतमर्थितेन
तेनर्षिणा तदभक्ष्यं न कामात् ।
स वै धर्मो ह्यत्र न पापमस्ति
सर्वैरुपायैर्गुरवोऽभिरक्ष्याः ॥ ७२

विश्वामित्रः—

मित्रं च मे ब्राह्मणश्चायमात्मा
प्रियश्च मे पूज्यतमश्च लोके ।
तद्भोक्तुकामोऽहमिमां जिहीर्षे
नृशंसानामीदृशानां हि बिभ्ये ॥ ७३

श्वपचः—

कामं नरा जीवितं सन्त्यजन्ति
न चाभक्ष्ये प्रतिकुर्वन्ति बुद्धिम् ।
सर्वांश्च कामान् प्राप्नुवन्तीति [1]बुद्ध्व
स्वर्गं गत्वा सहितारः क्षुधं ये ॥ ७४

विश्वामित्रः—

स्थाने भवेत् संशयः प्रेत्यभावे
निस्संशयः कर्मणां चापि नाशः ।
अहं पुनर्व्रतनित्याशयात्मा
मूलं रक्षन् भक्षयिष्याम्यभक्ष्यम् ॥ ७५

---

1. ख—विद्धि

बुद्ध्यात्मके व्यक्तमस्तीति तुष्टो
मोक्षात्मके त्वं यथा शिष्टचक्षुः ।
यद्यप्येतत् संशयादाहरामि
नाहं भविष्यामि यथा त्वमात्थ ॥ ७६

श्वपचः—

यापनीयमिदं दुःखम् इति मे वर्तते मतिः ।
दुष्कृतिं ब्राह्मणं सन्तं यस्त्वामहमुपालभे ॥ ७७

विश्वामित्रः—

पिबन्त्येवोदकं गावो मण्डूकेषु रुवत्स्वपि ॥
न तेऽधिकारो धर्मेऽस्ति मा भूरात्मप्रशंसकः ॥ ७८

श्वपचः—

सुहृद्भूत्वाऽनुशोचे त्वां कृपा हि त्वयि मे द्विज ।
तदिदं श्रेय आधत्स्व मा लोभे चेत आदधाः ॥ ७९

विश्वामित्रः—

सुहृत्त्वं चेदिच्छसि त्वम् आपदो मां समुद्धर ।
जानेऽहं धर्मतो त्मानम् उत्सृजेमां श्वजाघनीम् ॥ ८०

श्वपचः—

नैवोत्सहे भवतो दातुमेतां
नोपेक्षितुं ह्रियमाणं स्वमन्नम् ।
उभौ स्याव श्वमलेनानुलिप्तौ
दाता चाहं त्वं च विप्र प्रतीच्छन् ॥ ८१

विश्वामित्रः—

अद्याहमेतद्वृजिनं कर्म कृत्वा
जीवंश्चरिष्यामि महापवित्रम् ।
सम्पूजितात्मा धर्ममेवाभिपत्स्ये
यदेतयोर्गुरु नस्तद्ब्रवीहि ॥ ८२

श्वपचः—

[1]आत्मैव साक्षी किल धर्ममाहुस्
त्वमेव जानासि यदत्र दुष्कृतम् ।
योऽभ्यर्थयेद्भक्ष्यमिति श्वमांसं
मन्ये न तस्यास्ति विवर्जनीयम् ॥ ८३

विश्वामित्रः—

उपादाने खादने वाऽप्यदोषः
कार्ये न्याये नित्यमत्रापवादः ।
यस्मिन्नहिंसा नानृते वाक्यलेशो
भक्ष्यक्रिया यत्र न तद्गरीयः ॥ ८४

श्वपचः—

यद्येष हेतुस्तव खादने स्यात्
ततो वेदः कारणं [2]नार्यधर्मः ।
तस्माद्भक्ष्याभक्षणे वा द्विजेन्द्र
दोषं न पश्यामि यदर्थमात्थ ॥ ८५

---

1. ख—अर्धषट्कं नास्ति  2. क-घ—नात्र

विश्वामित्रः—

न पातकं भक्षणमस्य दृष्टं
सुरां तु पीत्वा पततीति शब्दः ।
अन्योन्यकार्याणि यथा तथैव
न लेशमात्रेण कृतं हिनस्ति ॥ ८६

श्वपचः—

अस्थानतो हीनतः कुत्सिताद्वा
तद्विद्वांसं बाधते साधु वृत्तम् ।
श्वानं पुनर्यो लभतेऽभिषङ्गात्
तेनापि दण्डस्सहितव्य एव ॥ ८७

भीष्मः—

एवमुक्त्वा निववृते मातङ्गः कौशिकं तदा ।
विश्वामित्रो जहारैव कृतबुद्धिश्श्वजाघनीम् ॥ ८८

ततो जग्राह स श्वाङ्गं जीवितार्थं महामुनिः ।
सदारस्त्वथ चाहृत्य वने भोक्तुमियेष सः ॥ ८९

एतस्मिन्नेव काले तु प्रववर्षाथ वासवः ।
सञ्जीवयन् प्रजास्सर्वा जनयामास चौषधीः ॥ ९०

विश्वामित्रोऽपि भगवांस् तपसा दग्धकिल्बिषः ।
कालेन महता सिद्धिम् इयेष परमाद्भुताम् ॥ ९१

एवं विद्वानदीनात्मा व्यसनस्थो जिजीविषुः ।
सर्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत् ॥ १२

एतां बुद्धिं समास्थाय जीवितव्यं सदा भवेत् ।
जीवन् पुण्यमवाप्नोति पुरुषो भद्रमश्नुते ॥ १३

तस्मात् कौन्तेय विदुषा धर्माधर्मविनिश्चये ।
बुद्धिमास्थाय लोकेऽस्मिन् वर्तितव्यं कृतात्मना ॥ १४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[ अस्मिन्नध्याये १४ श्लोकाः ]

---

## ॥ द्वात्रिंशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति राज्ञा ब्राह्मणवर्जं दण्डेन प्रजापालनकरणे शुक्रमतानुवादः ॥

---

युधिष्ठिरः—

यदिदं घोरमुद्दिष्टम् अश्रद्धेयमिवानृतम् ।
अस्ति स्विद्दस्युमर्यादा यामयं परिवर्जयेत् ॥ १

सम्मुह्यामि विषीदामि धर्मोऽयं शिथिलीकृतः ।
उद्यमं नाधिगच्छामि [1]कुत्रचित् परिचिन्तयन् ॥ २

---

1. ख-ग—कुतश्चित्

नैतच्छुद्धागमादेव तव धर्मानुशासनम् ॥　　२॥

भीष्मः—

प्रज्ञासमभिहारोऽयं कविभिस्सम्भृतं मधु ॥　　३

बहु प्रतिविधातव्याः प्रज्ञा राज्ञा ततस्ततः ।
बहुशाखेन धर्मेण यत्रैषा सम्प्रसिध्यते ॥　　४

बुद्धिसञ्जननं राज्ञां धर्ममाचरतां सदा ।
क्षयो भवति कौरव्य सदा तद्वृद्धिरेव च ॥　　५

बुद्धिश्रेष्ठा हि राजानो [1]भवन्ति विजयैषिणः ।
धर्मः प्रतिविधातव्यो बुद्ध्या राज्ञा ततस्ततः ॥　　६

नैकशाखेन धर्मेण राज्ञो धर्मो विधीयते ।
अबलस्य ततः प्रज्ञा पुरस्तादनुदाहृता ॥　　७

अद्वैधज्ञः प्रतिद्वैधैस् संशयं प्राप्तुमर्हति ।
बुद्धिद्वैधं विधातव्यं पुरस्तादेव भारत ॥　　८

पार्श्वतः कारणं राज्ञो विषूच्यस्त्वापगा इव ।
जनास्तूच्चरितं धर्मं विजानन्त्यन्यथाऽन्यथा ॥　　९

सम्यग्विज्ञानिनः केचिन्मिथ्याविज्ञानिनोऽपरे ।
तद्वै यथायथं बुद्ध्वा ज्ञानमाददते सताम् ॥　　१०

परिमुष्णन्ति शास्त्राणि धर्मस्य परिपन्थिनः ।

---

1. ख—जयन्ति

वैषम्यमपि विद्यानां निरर्थाः ख्यापयन्ति ते ॥ ११

आजिजीविषवो विद्यां [1]यशःकामास्समन्ततः ।
ते सर्वे नरपापिष्ठा धर्मस्य परिपन्थिनः ॥ १२

अपक्वमतयो मन्दा न जानन्ति यथातथम् ॥ १२॥

प्रगृह्य शास्त्रकुशलास् सर्वत्रापरिनिष्ठिताः ।
परिमुष्णन्ति शास्त्राणि शास्त्रदोषानुदर्शिनः ॥ १३॥

विज्ञानमथ विद्यानां [2]न सम्यगिति वर्तते ।
निन्दया परविद्यानां स्वविद्यां ख्यापयन्ति ते ॥ १४॥

वागस्त्रा वाग्विनीताश्च दुग्धविद्याफला इव ।
तान् विद्यावणिजो विद्धि राक्षसानिव भारत ॥ १५॥

व्याजेन कृत्स्नो विहितो धर्मस्ते परिहास्यते ।
न धर्मवचनं वाचा न बुद्ध्या चेति नश्श्रुतम् ॥ १६॥

इति बार्हस्पत्यविज्ञानं प्रोवाच मघवा स्वयम् ॥ १७

न त्वेव वचनं किञ्चिद् अनिमित्तमिहोच्यते ।
स्वभिनीतेन शास्त्रेण अध्यवस्यन्ति चापरे ॥ १८

लोकयात्रामिहैके तु धर्मं प्राहुर्मनीषिणः ।
समुद्दिष्टं स्वकं धर्मं स्वयमूहेत पण्डितः ॥ १९

अमर्षाच्छास्त्रसम्मोहाद् अनिमित्तादिहोच्यते ।

---

1. ख—यशस्कामाः 2. अ-क—अयं पादोऽनन्तरश्च न स्तः

शास्त्रं प्राज्ञस्य वदतस् समूहे यात्यदर्शनम् ॥ २०

आगमागतया बुद्ध्या वचनेन प्रशस्यते ।
अज्ञानाज्ज्ञानहेतुत्वाद् वचनं साधु मन्यते ॥ २१

अनुपागतमेवेदं [1]नेदं शास्त्रमनर्थकम् ।
दैतेयानुशना प्राह संशयच्छेदने पुरा ॥ २२

ज्ञानमव्यपदेश्यं हि यथा नास्ति तथैव तत् ।
तेन सञ्छिन्नमूलेन कस्तोषयितुमिच्छति ॥ २३

पुनर्व्यवसितं यो वा नेदं वाक्यमुपाश्रुयात् ।
[2]उग्रे चैव हि सृष्टोऽसि कर्मणा तत्त्वमीक्षसे ॥ २४

अग्रे मामनवेक्षस्व राजन् योऽयं बुभूषते ।
यथा प्रमुच्यते त्वर्थो यदर्थं च प्रमोदते ॥ २५

अजोऽश्वः क्षत्रमित्येतत् सदृशं ब्रह्मणा कृतम् ।
तस्मान्न तैक्ष्ण्याद्भूतानां यात्रा काचित् प्रसिद्ध्यति ॥ २६

यस्त्ववध्यवधे दोषस् स वध्यस्यावधे स्मृतः ।
एषा ह्येव तु मर्यादा यामयं परिवर्जयेत् ॥ २७

तस्मात् तीक्ष्णः प्रजा राजा स्वधर्मे स्थापयत्युत ।
अन्योन्यं भक्षयन्तो हि प्रचरेयुर्वृका इव ॥ २८

---

1. अ—शास्त्रमेवमनर्थकम्
2. अ—उग्रे चैव हि दृष्टोऽसि क—अग्रे ख—उग्रायैव हि सृष्टोऽसि

यस्य दस्युगणा राष्ट्रे ध्वाङ्क्षा मत्स्याञ्जलादिव ।
विहरन्ति परस्वानि स वै क्षत्रियपांसनः ॥ २९

कुलीनान् सचिवान् कृत्वा वेदविद्यासमन्वितान् ।
प्रशाधि पृथिवीं राजन् प्रजा धर्मेण पालयन् ॥ ३०

विहीनजन्मकर्माणं यः प्रगृह्णाति भूमिपः ।
उभयस्याविशेषज्ञस् तद्वै क्षत्रं नपुंसकम् ॥ ३१

[1]नैवोग्रं नैव चानुग्रं धर्मेणेह प्रशस्यते ।
उभयं न व्यतिक्रामेद् उग्रो भूत्वा मृदुर्भव ॥ ३२

कष्टः क्षत्रियधर्मोऽयं सौहृदं त्वयि यत् स्थितम् ।
उग्रे कर्मणि सृष्टोऽसि तस्माद्राज्यं प्रशाधि वै ॥ ३३

अरुष्टः कस्यचिद्राजन् एवमेव समाचर ॥ ३३॥

अशिष्टनिग्रहो नित्यं शिष्टस्य परिपालनम् ।
एवं शक्रोऽब्रवीद्धीमान् आपत्सु भरतर्षभ ॥ ३४॥

युधिष्ठिरः—

वृत्तिं चैव महाबाहो यामाभ्यां नातिलङ्घयेत् ।
पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥ ३५॥

भीष्मः—

ब्राह्मणानेव सेवेत विद्यावृद्धांस्तपोधनान् ।

---

1. अ—नैवोऽग्रं; क-ब—नैवाग्रं

श्रुतचारित्रवृत्ताढ्यान् पवित्रं ह्येतदुत्तमम् ॥ ३६॥

शुश्रूषा तु महाराज सान्त्वं विप्रेषु नित्यदा ।
क्रुद्धैर्हि विप्रैः कर्माणि कृतानि बहुधा नृप ॥ ३७॥

तेषां प्रीत्या यशो मुख्यम् अप्रीत्या परमं भयम् ।
प्रीत्या ह्यमृतवद्विप्राः क्रुद्धाश्चैव यथोरगाः ॥ ३८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[ अस्मिन्नध्याये ३८॥ श्लोकाः ]

---

## ॥ त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति शरणागतरक्षणे मुचुकुन्दं प्रति भार्गवोक्त-व्याधकपोतोपाख्यानानुवादारम्भः ॥ १ ॥ वनमध्ये महावृष्टिनिपीडितेन केनचिद्व्याधेन वर्षपीडयाऽधः पतितां काञ्चन कपोतीं पञ्जरे निरुध्य वृष्ट्युपरमे कस्यचिन्महावृक्षस्याधोदेशे शयनम् ॥ २ ॥

---

युधिष्ठिरः—

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
शरणागतं पालयतो यो धर्मस्तं ब्रवीहि मे ॥ १

भीष्मः—

महान् धर्मो महाराज शरणागतपालने ।

अर्हः प्रष्टुं भवांश्चैनं प्रश्नं भरतसत्तम ॥ २

[1]नृगप्रभृतयो राजन् राजानश्शरणागतान् ।
परिपाल्य महात्मानस् संसिद्धिं परमां गताः ॥ ३

श्रूयते हि कपोतेन शत्रुश्शरणमागतः ।
पूजितश्च यथा स्वैश्च मांसैर्नित्यमतन्द्रितः ॥ ४

युधिष्ठिरः—

कथं कपोतेन पुरा शत्रुश्शरणमागतः ।
स्वमांसैर्भोजितः कां च गतिं लेभे स भारत ॥ ५

भीष्मः—

शृणु राजन् कथामेतां सर्वपापप्रमोचनीम् ।
नृपतेर्मुचुकुन्दस्य कथितां भार्गवेण ह ॥ ६

इममर्थं पुरा पार्थ मुचुकुन्दो नराधिपः ।
भार्गवं [2]पर्यपृच्छत्स प्रणतः पुरुषर्षभ ॥ ७

तस्मै शुश्रूषमाणाय भार्गवोऽकथयत् कथाम् ।
इयं यथा कपोतेन सिद्धिः प्राप्ता जनाधिप ॥ ८

उशना—

धर्मनिश्चयसंयुक्तां कामार्थसहितां कथाम् ।
शृणुष्वावहितो राजन् गदतो मे महाभुज ॥ ९

---

1. अ—शिबि 2. घ—परिपप्रच्छ

कश्चित् क्षुद्रसमाचारः पृथिव्यां कालसन्निभः ।
चचार पृथिवीपाल घोरश्शकुनिलुब्धकः ॥ १०

काकोल इव कृष्णाङ्गो रूक्षः पापसमाहितः ।
यवमध्यः कृशग्रीवो ह्रस्वपादो महाहनुः ॥ ११

नैव तस्य सुहृत् कश्चिन्न सम्बन्धी न बान्धवाः ।
बान्धवैस्सम्परित्यक्तस् तेन रौद्रेण कर्मणा ॥ १२

स वै क्षारकमादाय वने हत्वा च पक्षिणः ।
चकार विक्रयं तेषां पतङ्गानां नराधिप ॥ १३

एवं तु वर्तमानस्य तस्य वृत्तिं दुरात्मनः ।
अगमत् सुमहान् कालो नैष धर्ममबुध्यत ॥ १४

तस्य भार्यासहायस्य रममाणस्य शाश्वतम् ।
दैवयोगे विमूढस्य नान्या वृत्तिररोचत ॥ १५

ततः कदाचित् तस्याथ वनस्थस्य समुद्गतः ।
पातयन्निव वृक्षांस्तान् सुमहान् वातसम्भ्रमः ॥ १६

मेघसङ्कुलमाकाशं विद्युन्मण्डलमण्डितम् ।
सञ्छन्नं तु मुहूर्तेन नौसार्थेनेव सागरः ॥ १७

वारिधारासहस्रैश्च सम्प्रहृष्टश्शतक्रतुः ।
क्षणेन पूरयामास सलिलेन वसुन्धराम् ॥ १८

ततो धाराकुले लोके सोऽभवन्नष्टचेतनः ॥ १८॥

शीतार्तस्तद्वनं सर्वम् आकुलेनान्तरात्मना ।
नैव निम्नं स्थलं वाऽपि सोऽविन्दत विहङ्गहा ॥ १९॥

पूरितो हि जलौघेन मार्गस्तस्य वनस्य वै ॥ २०

पक्षिणो वर्षवेगेन शाखालीनास्तु [1]पादपान् ।
मृगसिंहवराहाश्च ये चान्ये तत्र वर्तिनः ॥ २१

महता वातवर्षेण त्रासितास्ते वनौकसः ।
भयार्ताश्च क्षुधार्ताश्च बभ्रमुस्सहिता वने ॥ २२

स तु शीतहतैर्गात्रैर् जगामैव न तस्थिवान् ॥ २२॥

सोऽपश्यद्वनषण्डेऽस्मिन् मेघनीलं वनस्पतिम् ।
कुसुमाकारताराढ्यम् आकाशं निर्मलं च ह ॥ २३॥

मेघैर्मुक्तं नभो दृष्ट्वा लुब्धकश्शीतविह्वलः ।
दिशो विलोकयामास वेलां च सुदुरात्मवान् ॥ २४॥

दूरे ग्रामनिवेशश्च तस्मात् स्थानादिति प्रभो ।
कृतबुद्धिर्वने तस्मिन् वस्तुं तां रजनीं तदा ॥ २५॥

सोऽञ्जलिं प्रणतः कृत्वा वाक्यमाह वनस्पतिम् ।
शरणं यामि यान्यस्मिन् दैवतानीह भारत ॥ २६॥

---

1. ख—पादपात्

स शिलायां शिरः कृत्वा पर्णान्यास्तीर्य भूतले ।
दुःखेन महताऽऽविष्टस् ततस्सुष्वाप पक्षिहा ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
[ अस्मिन्नध्याये २७॥ श्लोकाः ]

## ॥ चतुस्त्रिंशदधिकशततमोऽध्यायः ॥

महावृक्षनिवासिना कपोतेनाहारार्थं गतायां निजपत्न्यां रात्रावनागतायां तद्गुणानुवर्णनपूर्वकं तां प्रति शोचनम् ॥ १ ॥ भर्तृविलापं श्रुतवत्या व्याधपञ्जरस्थया कपोत्या धर्मोपन्यासपूर्वकं पतिं प्रति व्याधसत्कारचोदना ॥ २ ॥ पत्नीचोदितेन कपोतेन शुष्कपर्णैः पावकसंदीपनेन व्याधस्य शैत्यापनोदनपूर्वकं पुनः स्वेन तदभीष्टकरणप्रतिज्ञा ॥ ३ ॥ तेन तस्य क्षुन्निवृत्तिप्रार्थने फलादिकं किमप्यलभमानेन कपोतेन स्वमांसेन तदीयक्षुत्परिजिहीर्षयाऽग्नौ प्रवेशनम् ॥ ४ ॥ कपोतस्य वह्निप्रवेशदर्शिना व्याधेन आत्मोपालम्भपूर्वकं स्वप्राणविमोक्षणायानशनादिना शरीरशोषणाध्यवसायः ॥ ५ ॥ भर्तृशोकतप्तया कपोत्या सकरुणं विलप्याग्नौ प्रवेशः ॥ ६ ॥ ततो विमानारोहणेन स्वर्गतयोः कपोतयोस्तत्र सुखेन चिरविहारः ॥ ७ ॥ व्याधेन विमानस्थयोर्दर्शनम् ॥ ८ ॥ ततो व्याधेन दावाग्नौ शरीरत्यागेन स्वर्गगमनम् ॥ ९ ॥

उशना—

अथ वृक्षस्य शाखायां विहङ्गस्ससुहृज्जनः ।
दीर्घकालोषितो राजंस् तत्र चित्रतनूरुहः ॥ १

तस्य कालयं गता भार्या चरितुं नाभ्यवर्तत ।
प्राप्तां च रजनीं दृष्ट्वा स पक्षी पर्यतप्यत ॥ २

कपोतः—

वातवर्षं महच्चासीन्न चागच्छति मे प्रिया ।
किं नु तत् कारणं येन साऽद्यापि न निवर्तते ॥ ३
अपि स्वस्ति भवेत् तस्याः प्रियाया मम कानने ॥ ३॥
तया हि रहितं हीदं शून्यमद्य गृहं मम ॥ ४
यदि सा रक्तनेत्रान्ता चित्राङ्गी मधुरस्वरा ।
अद्य नाभ्येति मे कान्ता न कार्यं जीवितेन मे ॥ ५
पतिधर्मव्रता साध्वी प्राणेभ्योऽपि गरीयसी ।
सा हि श्रान्तं क्षुधार्तं च जानीते मां तपस्विनी ॥ ६
अनुरक्ता हिता चैव स्निग्धा चैव पतिव्रता ।
यस्य वै तादृशी भार्या धन्यस्स मनुजो भुवि ॥ ७
भार्या हि परमो नाथः पुरुषस्येह [1]पठ्यते ।
असहायस्य लोकेऽस्मिँल्लोकयात्रासहायिनी ॥ ८
अथ मोहाभिभूतस्य नित्यं कृच्छ्रगतस्य च ।
[2]नास्ति भार्यासमं मित्रं नरस्यार्तस्य भेषजम् ॥ ९

---

1. ख—दृश्यते घ—पश्यतः
2. अ-क—नास्तीदमर्धम्

नास्ति भार्यासमो बन्धुर् नास्ति भार्यासमा गतिः ।
नास्ति भार्यासमो लोके सहायो धर्मशासने ॥ १०

उशना—

एवं विलपतस्तस्य द्विजस्यार्तस्य वै तदा ।
गृहीता शकुनिघ्नेन भार्या शुश्राव भारतीम् ॥ ११

कपोती—

सा हि स्त्रीत्यवगन्तव्या यस्या भर्ता तु तुष्यति ।
[1]अग्निसाक्षिकमप्येतद् भर्ता हि शरणं परम् ॥ १२

उशना—

इति सञ्चिन्त्य दुःखार्ता भर्तारं दुःखितं तदा ।
कपोती लुब्धकेनाथ हृता वचनमब्रवीत् ॥ १३

कपोती—

हन्त वक्ष्यामि ते श्रेयश् श्रुत्वा तु कुरु तत्तथा ।
शरणागतसन्त्राता भव कान्त विशेषतः ॥ १४

एष शाकुनिकश्शेते तव वासं समाश्रितः ।
शीतार्तश्च क्षुधार्तश्च पूजामस्मै प्रयोजय ॥ १५

यो हि कश्चिद्द्विजं हन्याद् गां वा लोकस्य मातरम् ।
शरणागतं च यो हन्यात् तुल्यं तेषां हि पातकम् ॥ १६

याऽस्माकं विहिता वृत्तिः कापोती धर्मतः पुरा ।

---

1. अ—नास्तीदमर्धम्

सा न्याय्या भवता नित्यं त्वद्विधेनानुवर्तितुम् ॥ १७

यस्तु धर्मं यथाशक्ति गृहस्थो ह्यनुवर्तते ।
स प्रेत्य लभते लोकान् अक्षयानिति शुश्रुम ॥ १८

स त्वं सन्तानवानद्य पुत्रवानपि च द्विज ।
त्वं स्वदेहे दयां त्यक्त्वा धर्मार्थौ परिगृह्य च ॥ १९

पूजामस्मै प्रयुङ्क्ष्व त्वं प्रीयेतास्य मनो यथा ॥ १९॥

उशना—

इति सा शकुनिर्वाक्यं पञ्जरस्था तपस्विनी ।
अतिदुःखान्विता प्रोक्त्वा भर्तारं समुदैक्षत ॥* २०॥

स पत्न्या वचनं श्रुत्वा धर्मयुक्तिसमन्वितम् ।
हर्षेण महता [1]युक्तो बाष्पव्याकुललोचनः ॥ २१॥

स वै शाकुनिकं दृष्ट्वा विधिदृष्टेन कर्मणा ।
पूजयामास युक्तेन स पक्षी पक्षिजीविनम् ॥ २२॥

उवाच स्वागतं तेऽस्तु ब्रूहि किं करवाणि ते ।
सन्तापश्च न [2]कर्तव्यस् स्वगृहे वर्तते भवान् ॥ २३॥

ब्रवीतु च भवान् क्षिप्रं किं करोमि किमिच्छसि ।
प्रणयेन ब्रवीमि त्वां त्वं हि नश्शरणं गतः ॥ २४॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. ख—ऽऽविष्टो 2. ख-ग—गन्तव्यः

शरणागतस्य कर्तव्यम् आतिथ्यमिह यत्नतः ।
पञ्चयज्ञप्रवृत्तेन गृहस्थेन विशेषतः ॥ २५॥

पञ्चयज्ञांस्तु यो मोहान्न करोति गृहाश्रमी ।
तस्य नायं न च परो लोको भवति धर्मतः ॥ २६॥

तद्ब्रूहि त्वं सुविस्रब्धो यत् त्वं वाचा वदिष्यसि ।
तत् करिष्याम्यहं सर्वं मा त्वं शोके मनः कृथाः ॥ २७॥

तस्य तद्वचनं श्रुत्वा शकुनेर्लुब्धकोऽब्रवीत् ॥ २८

व्याधः—

बाधते खलु मां शीतं हिमत्राणं विधीयताम् ॥ २८॥

उशना—

एवमुक्तस्ततः पक्षी पर्णान्याहृत्य भूतले ।
यथा शुष्काणि यत्नेन ज्वलनार्थं द्रुतं ययौ ॥ २९॥

स गत्वा त्वरकर्मा तद् गृहीत्वाऽग्निमथागमत् ।
ततश्शुष्केषु पर्णेषु पावकं स ह्यदीपयत् ॥ ३०॥

स दीप्तं सुमहत् कृत्वा तमाह [1]शरणं गतम् ॥ ३१

कपोतः—

प्रतापय सुविस्रब्धस् स्वगात्राण्यकुतोभयः ॥ ३१॥

उशना—

स तथोक्तस्तथेत्युक्त्वा लुब्धो गात्राण्यतापयत् ।

---

1. ख-घ—शरणागतम्

सोऽग्निप्रत्यागतप्राणस् ततः प्राह विहङ्गमम् ॥ ३२॥

व्याधः—

दत्तमाहारमिच्छामि त्वया क्षुद्बाधते हि माम् ॥ ३३

उशना—

स तद्वचः प्रतिश्रुत्य वाक्यमाह विहङ्गमः ॥ ३३॥

कपोतः—

न मेऽस्ति विभवो येन नाशयेयं तव क्षुधाम् ।
उत्पन्नेन हि जीवामो वयं नित्यं वनौकसः ॥ ३४॥

सञ्चयो नास्ति चास्माकं मुनीनामिव कानने ॥ ३५

उशना—

इत्युक्त्वा स तदा तत्र विवर्णवदनोऽभवत् ॥ ३५॥

कथं नु खलु कर्तव्यम् इति चिन्तापरस्तदा ।
बभूव भरतश्रेष्ठ गर्हयन् वृत्तिमात्मनः ॥ ३६॥

मुहूर्ताल्लब्धसंज्ञस्तु स पक्षी पक्षिघातकम् ।
उवाच तर्पयिष्यामि मुहूर्तं परिपालय ॥ ३७॥

इत्युक्त्वा शुष्कपर्णैस्तं समुज्ज्वाल्य हुताशनम् ।
हर्षेण महताऽऽविष्टः कपोतः पुनरब्रवीत् ॥ ३८॥

कपोतः—

ऋषीणां देवतानां च पितॄणां च महात्मनाम् ।
श्रुतः पूर्वो मया धर्मो महानतिथिपूजने ॥ ३९॥

कुरुष्वानुग्रहं मेऽद्य सत्यमेतद्ब्रवीमि ते ।
निश्चिता खलु मे बुद्धिर् अतिथिप्रतिपूजने ॥ ४०॥

उशना—

ततस्सत्यप्रतिज्ञोऽसौ स पक्षी प्रहसन्निव ।
तमग्निं त्रिः परिक्रम्य प्रविवेश महामतिः ॥ ४१॥

अग्निमध्ये प्रविष्टं तं लुब्धो दृष्ट्वाऽथ पक्षिणम् ।
चिन्तयामास मनसा किमिदं नु कृतं मया ॥ ४२॥

अहो मम नृशंसस्य गर्हितस्य स्वकर्मणा ।
अधर्मस्सुमहान् घोरो भविष्यति न संशयः ॥ ४३॥

एवं बहुविधं भूरि विललाप स लुब्धकः ।
गर्हयन् स्वानि कर्माणि द्विजं दृष्ट्वा तथाऽऽगतम् ॥ ४४॥

ततस्तु लुब्धकः पश्यन् कृपयाऽभिपरिप्लुतः ।
कपोतमग्नौ पतितं वाक्यं पुनरुवाच ह ॥ ४५॥

व्याधः—

धिङ्मामस्तु सुदुर्बुद्धिं सदा निकृतनिश्चयम् ।
शुभं कर्म परित्यज्य योऽहं शकुनिलुब्धकः ॥ ४६॥

नृशंसस्य ममाद्यायं प्रत्यादेशो न संशयः ।
दत्तं स्वमांसं दहता कपोतेन महात्मना ॥ ४७॥

सोऽहं त्यक्ष्ये प्रियान् प्राणान् पुत्रान् दारान् विसृज्य च ।

उपदिष्टो हि मे धर्मः कपोतेनात्र धर्मिणा ॥ ४८॥

अद्यप्रभृति देहं स्वं सर्वभोगैर्विवर्जितम् ।
यथा स्वल्पजलं ग्रीष्मशु शोषयिष्याम्यहं तथा ॥ ४९॥

क्षुत्पिपासातपसहः कृशो धमनिसन्ततः ।
उपवासैर्बहुविधैः करिष्ये पारलौकिकम् ॥ ५०॥

अहो देहप्रदानेन दर्शिताऽतिथिपूजना ।
तस्माद्धर्मं चरिष्यामि धर्मो हि परमा गतिः ॥ ५१॥

दृष्टो धर्मो हि धर्मिष्ठे यादृशोऽसौ विहङ्गमे ॥ ५२

उशना—

एवमुक्त्वा विनिश्चित्य रौद्रकर्मा स लुब्धकः ।
महाप्रस्थानमाश्रित्य प्रययौ संशितव्रतः ॥ ५३

ततो यष्टिं शलाकाश्च क्षारकं पञ्जराणि च ।
तां च बद्धां कपोतीं च सम्प्रमुच्योत्ससर्ज ह ॥* ५४

ततो गते शाकुनिके कपोती प्राह दुःखिता ।
संस्मृत्य भर्तारमथो रुदती शोककर्शिता ॥ ५५

कपोती—

नाहं ते विप्रियं कान्त कदाचिदपि संस्मरे ॥ ५५॥
सर्वाऽपि दुःखिता नारी बहुपुत्राऽपि वै सदा ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

शोच्या भवति बन्धूनां पतिहीना तपस्विनी ॥ ५६॥
लालिताऽहं त्वया नित्यं बहुमानाच्च सान्त्विता ।
वचनैर्मधुरैस्स्निग्धैर् असकृत् सुमनोहरैः ॥ ५७॥
कन्दरेषु च शैलानां नदीनां निर्झरेषु च ।
द्रुमाग्रेषु च रम्येषु रमिताऽहं त्वया प्रिया ॥ ५८॥
आकाशगमने चैव सहिताऽहं त्वया गता ।
रमिताऽस्मि पुरा कान्त तन्मे नास्त्यत्र वै प्रिय ॥ ५९॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥ ६०॥
नास्ति भर्तृसमो नाथो नास्ति भर्तृसमं सुखम् ।
विसृज्य धनसर्वस्वं भर्ता वै शरणं स्त्रियाः ॥ ६१॥
किं कार्यमिह मे नाथ जीवितेन त्वया विना ।
पतिहीना तु का नारी सती जीवितुमुत्सहेत् ॥ ६२॥

भीष्मः—

एवं विलप्य बहुधा करुणं साधुदुःखिता ।
पतिव्रता सम्प्रदीप्तं प्रविवेश हुताशनम् ॥ ६३॥
ततश्चित्राङ्गदधरं भर्तारं साऽन्वपद्यत ।
विमानस्थं सुकृतिभिः पूज्यमानं महात्मभिः ॥ ६४॥
चित्रमाल्याम्बरधरं सर्वाभरणभूषितम् ।

विमानशतकोटीभिर् आवृतं पुण्यकीर्तिभिः ॥ ६५॥

ततस्स्वर्गं गतः पक्षी भार्यया सह सङ्गतः ।
कर्मणा पूजितस्तेन रेमे स सह भार्यया ॥* ६६॥

विमानस्थौ तु तौ राजंल्लुब्धको वै ददर्श ह ।
दृष्ट्वा स दम्पती दुःखाद् अचिन्तयत तद्गतिम् ॥ ६७॥

कीदृशेनेह तपसा गच्छेयं परमां गतिम् ।
इति बुद्ध्या विनिश्चित्य गमनायोपचक्रमे ॥ ६८॥

महाप्रस्थानमाश्रित्य उत्तमं पक्षिजीवनः ।
स निश्चेष्टो निराहारो निर्ममस्स्वर्गकाङ्क्षया ॥ ६९॥

ततः पश्यति विस्तीर्णं हृद्यं पद्मविभूषितम् ।
नानाद्विजगणाकीर्णं सरश्शीतजलं शुभम् ॥ ७०॥

पिपासार्तोऽपि तद्दृष्ट्वा तृप्तस्यान्नात्र संशयः ॥ ७१

उपवासी कृशोऽत्यर्थं स तु पार्थिव लुब्धकः ।
उपसृत्य तु तद्धृष्टश् श्वापदाध्युषितं वनम् ॥ ७२

महान्तं निश्चयं कृत्वा लुब्धकः प्रविवेश ह ।
प्रविशन्नेव स वनं निगृहीतस्स कण्टकैः ॥ ७३

स कण्टकविभिन्नाङ्गो लोहितार्द्रीकृतच्छविः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

बभ्राम तस्मिन् विजने नानाद्रुमलताकुले ॥ ७४

ततो द्रुमाणां पततां पवनेन वने तदा ।
उदतिष्ठत सङ्घर्षात् सुमहान् हव्यवाहनः ॥ ७५

तद्वनं वृक्षसङ्कीर्णं लताविटपसङ्कुलम् ।
ददाह पावकः क्रुद्धो युगान्ताग्निसमप्रभः ॥ ७६

स ज्वालैः पवनोद्धूतैर् विष्फुलिङ्गैस्समन्ततः ।
ददाह तद्वनं घोरं मृगपक्षिसमाकुलम् ॥ ७७

तदा स्वदेहमोक्षार्थं सम्प्रहृष्टेन चेतसा ।
अभ्यधावत वर्धन्तं पावकं लुब्धकस्तदा ॥ ७८

ततस्तेनाग्निना दग्धो लुब्धको दग्धकिल्बिषः ।
आससाद परां सिद्धिं तदा भरतसत्तम ॥ ७९

ततस्स्वर्गस्थमात्मानम् अपश्यद्विगतज्वरः ।
यक्षगन्धर्वसिद्धानां मध्ये भ्राजन्तमिन्द्रवत् ॥ ८०

एवं खलु कपोतश्च कपोती च पतिव्रता ।
लुब्धकेन सह स्वर्गं गतौ पुण्येन कर्मणा ॥ ८१

याऽन्या चैवंविधा नारी भर्तारमनुवर्तते ।
विराजति च सा क्षिप्रं कपोतीव दिवि स्थिता ॥ ८२

एवमेतत् पुरावृत्तं लुब्धकस्य महात्मनः ।
कपोतस्य च धर्मिष्ठा गतिः पुण्येन कर्मणा ॥ ८३

यश्चेदं शृणुयान्नित्यं यश्चेदं परिकीर्तयेत् ।
नाशुभं विद्यते तस्य मानवस्य न संशयः ॥ ८४

उक्तश्चैव महानेष धर्मो धर्मभृतां वर ।
गोघ्नेष्वपि भवेन्नित्यं निष्कृतिः पापकर्मणः ॥ ८५

न निष्कृतिर्भवेत्तस्य यो हन्या[1]च्छरणं गतम् ॥ ८५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
[ अस्मिन्नध्याये ८५॥ श्लोकाः ]

---

## ॥ पञ्चत्रिंशदधिकशततमोऽध्यायः ॥

युधिष्ठिरेण भीष्मं प्रति अबुद्धिपूर्वकब्रह्महत्याप्रायश्चित्तप्रश्नः ॥ १ ॥ भीष्मेण जनमेजयस्याबुद्धिपूर्वकब्रह्महत्याप्राप्तिकथनपूर्वकं तत्कथाकथनारम्भः ॥ २ ॥ शौनकेन स्वपादयोः प्रणमतो जनमेजयस्य गर्हणम् ॥ ३ ॥ शौनकेन जनमेजयप्रार्थनया तदीयब्रह्महत्यापनोदनाङ्गीकरणम् ॥ ४ ॥ शौनकेन जनमेजयस्याश्वमेधयाजनेन तदीयब्रह्महत्यापनोदनपूर्वकं राज्ये प्रतिष्ठापनम् ॥ ५ ॥

---

युधिष्ठिरः—

अबुद्धिपूर्वं यः पापं कुर्याद्भरतसत्तम ।
मुच्यते स कथं तस्माद् एनसस्तद्ब्रवीहि मे ॥ १

---

1. ख-घ—च्छरणागतम्

भीष्मः—

अत्र ते वर्तयिष्यामि पुराणमृषिसंस्कृतम् ।
इन्द्रोतश्शौनको विप्रो यदाह जनमेजयम् ॥ २

आसीद्राजा महावीर्यः पारिक्षिज्जनमेजयः ।
अबुद्धिजा ब्रह्महत्या तमागच्छन्महीपतिम् ॥ ३

ब्राह्मणास्सर्व एवैनं तत्यजुस्सपुरोहिताः ॥ ३॥

स जगाम वनं राजा दह्यमानो दिवानिशम् ॥ ४

स प्रजाभिः परित्यक्तश् चकार कुशलं महत् ।
अतिवेलं तपस्तेपे दह्यमानस्स मन्युना ॥ ५

तत्रेतिहासं वक्ष्यामि धर्मस्यास्योपबृंहणम् ॥ ५॥

दह्यमानः पापकृत्या जगाम जनमेजयः ।
परीक्षमाण इन्द्रोतं शौनकं संशितव्रतम् ॥ ६॥

समासाद्योपजग्राह पादयोः परिपीडयन् ।
ततो भीतो महाप्राज्ञो जगर्हे सुभृशं तदा ॥ ७॥

शौनकः—

कर्ता पापस्य महतो भ्रूणहा किमिहागतः ॥ ८

किं तवास्मासु कर्तव्यं मा मां [1]प्राक्षीः कथञ्चन ।
गच्छ गच्छ न ते स्थानं प्रीणात्यस्मानिति ब्रुवन् ॥ ९

1. ख—द्राक्षीः

रुधिरस्येव ते गन्धश् शवस्येव च दर्शनम् ।
अशिवश्शिवसङ्काशो मृतो जीवन्निवाटसि ॥ १०

अन्तर्मृत्युरशुद्धात्मा पापमेवानुचिन्तयन् ।
प्रबुध्यसे प्रस्वपिषि वर्तस्व परमे सुखे ॥ ११

मोघं ते जीवितं राजन् परिक्लिष्टं च जीवसि ।
पापायैव हि सृष्टोऽसि कर्मणेह यवीयसे ॥ १२

बहुकल्याणमिच्छन्त ईहन्ते पितरस्सुतान् ।
तपसा दैवतेज्याभिर् [1]वन्दनेन तितिक्षया ॥ १३

पितृवंशमिमं पश्य त्वत्कृते निधनं गतम् ।
निरर्थास्सर्व एवैषाम् आशाबन्धास्त्वदाश्रयाः ॥ १४

यान् पूजयन्तो विन्दन्ति स्वर्गमायुर्यशश्श्रियम् ।
तेषु ते सन्ततं द्वेषो ब्राह्मणेषु निरर्थकः ॥ १५

इमं लोकं विमुच्य त्वम् अवाङ्मूर्धा पतिष्यसि ।
अशाश्वतीश्शाश्वतीश्च समाः पापेन कर्मणा ॥ १६

खाद्यमानो जन्तुशतैस् [2]तीक्ष्णदंष्ट्रैरयोमुखैः ।
ततोऽति नरकात्तात पापयोनिं गमिष्यसि ॥ १७

यदेवं मन्यसे राजन् नायमस्ति कुतः परः ।

---

1. ख-घ—शमनेन
2. क-ख-घ—शितिकण्ठै

प्रतिस्मारयितारस्त्वां यमदूता यमक्षये* ॥ १८

भीष्मः—

एवमुक्तः प्रत्युवाच तं मुनिं जनमेजयः ॥ १८॥

जनमेजयः—

विगर्ह्यं मां गर्हयति नित्यं निन्दति मां भवान् ।
धिक्कार्यं मां धिक्कुरुते तस्मात्त्वाऽहं प्रसादये ॥ १९॥

सर्वं हीदं सत् कृतं मे ज्वलाम्यग्नाविवाहितम् ॥ २०

स्वकर्माण्यभिसन्धाय नाभिनन्दति मे मनः ।
प्राप्तं नूनं भयं घोरं मया वैवस्वतादपि ॥ २१

तत्तु शल्यमनिर्हृत्य कथं शक्ष्यामि जीवितुम् ।
सर्वं मन्युं विनयितुं ममाभिवद शौनक ॥ २२

गन्ता गतिं ब्राह्मणानां भविष्याम्यर्थवान् पुनः ।
अस्तु शेषं कुलस्यास्य मा पराभूदिदं कुलम् ॥ २३

न हि नो ब्रह्मशप्तानां शेषं भवितुमर्हति ।
स्तुतीरलभमानानां संविदं वेदनिश्चयात् ॥ २४

निन्दमानस्त्वमात्मानं भूयो वक्ष्यामि साम्प्रतम् ॥ २४॥

भूयश्चैवाभिमथ्नन्ति निर्धर्मा निर्जला इव ।
न ह्ययज्ञा अमुं लोकं प्राप्नुवन्ति कथञ्चन ॥ २५॥

---

*सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

अवाक्च [1]प्रपतिष्यन्ति पुलिन्दशबरा इव ॥ २६

अविज्ञायैव मे प्रज्ञां बालस्येव सुपण्डितः ।
ब्रह्मन् पितेव पुत्रेभ्यः प्रीतिमावह शौनक ॥ २७

शौनकः—

किमाश्चर्यं यतः प्राज्ञो बहुकुर्यादसाम्प्रतम् ।
इति वै पण्डितो भूत्वा भूतानां को नु तप्यते ॥ २८

प्रज्ञाप्रासादमारुह्य अशोच्यश्शोचते जनान् ।
जगतीस्थानिवाद्रिस्थः प्रज्ञया परिपश्यति ॥ २९

न चोपलभते तत्र न चाश्चर्याणि पश्यति ।
निर्विण्णात्मा परोक्षं वा धिक्कृतस्सर्वसाधुषु ॥ ३०

विदित्वा भवतो वीर्यं माहात्म्यं चैव चागमे ।
कुरुष्वेह महाशान्तिं ब्रह्मा शरणमस्तु ते ॥ ३१

तद्वै चारित्रकं नाम ब्राह्मणानामकुप्यताम् ।
अथवा तप्यसे पापं धर्मं चेदनुपश्यसि ॥ ३२

जनमेजयः—

अनुतप्ये च पापेन न चाधर्मं चराम्यहम् ।
बुभूषे भजमानं च प्रीतिमान् [2]भव शौनक ॥ ३३

---

1. क-ख-घ—प्रतिवक्ष्यन्ति
2. क-ख-घ—वापि

शौनकः—

हित्वा दम्भं च मानं च प्रीतिमिच्छामि ते नृप ।
सर्वभूतहिते तिष्ठ धर्मं वै प्रतिसंस्मर ॥ ३४

न भयान्न च कार्पण्यान्न लोभात् त्वामुपाह्वये ।
[1]तां मे देवा गिरं सत्यां शृण्वन्तु ब्राह्मणैस्सह ॥ ३५

सोऽहं न केनचिच्चार्थी त्वां च धर्मादुपाह्वये ।
क्रोशतां सर्वभूतानां हाहा धिगिति कुर्वताम् ॥ ३६

वक्ष्यन्ति मामधर्मज्ञं त्यक्ष्यन्ति सुहृदो जनाः ।
ता वाचस्सुहृदश्श्रुत्वा सञ्ज्वरिष्यन्ति ते भृशम् ॥ ३७

केचिदेव महाप्राज्ञाः प्रतिज्ञास्यन्ति कार्यताम् ।
जानीहि मे कृतं तात ब्राह्मणान् परितोषये ॥ ३८

यथा ते सत्कृताः क्षेमं लभेरंस्त्वं तथा कुरु ।
प्रतिजानीहि चाद्रोहं ब्राह्मणानां जनाधिप ॥ ३९

जनमेजयः—

नैव वाचा न मनसा पुनर्जातु न कर्मणा ।
द्रोग्धास्मि ब्राह्मणान् विप्र चरणावेव ते स्पृशे ॥ * ४०

---

1. ख—अर्धद्वयं नास्ति

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

शौनकः—

तस्मात्ते [1]सम्प्रवक्ष्यामि धर्ममावृतचेतसः ।
श्रीमान् महाबलस्तुष्टो यस्त्वं धर्ममवेक्षसे ॥ ४१

पुरस्ताद्दारुणो भूत्वा सुचित्रतरमेव तत् ।
अनुगृह्णन्ति भूतानि स्वेन वृत्तेन पार्थिवाः ॥ ४२

कृत्स्ने नूनं सदसती इति लोको व्यवस्यति ।
यत्र त्वं तादृशो भूत्वा धर्ममद्यानुपश्यसि ॥ ४३

दर्पं हित्वा पुनश्चापि भोगांश्च तप आस्थितः ।
इत्येतदपि भूतानाम् अद्भुतं जनमेजय ॥ ४४

योऽदुर्बलो भवे[2]द्दान्तः कृपणो वा तपोधनः ।
अनाश्चर्यं तदित्याहुर् नातिदूरे हि वर्तते ॥ ४५

तप एव हि कार्पण्यं समग्रमसमीक्षितम् ।
तच्चेत् समीक्षयैव स्याद् भवेत्तस्मिंस्तपोगुणः ॥ ४६

यज्ञो दानं दया वेदास् सत्यं च पृथिवीपते ।
पञ्चैतानि पवित्राणि षष्ठं सुचरितं तपः ॥ ४७

तदेव राज्ञां परमं पवित्रं जनमेजय ।
तेन सम्यग्गृहीतेन श्रेयांसं धर्ममाप्स्यसि ॥ ४८

पुण्यदेशाभिगमनं पवित्रं परमं स्मृतम् ।

---

1. ख—ऽहं 2. ख—द्दाता

अपि ह्युदाहरन्तीमा गाथा गीता ययातिना ॥ ४९

यो मर्त्यः प्रतिपद्येत आयुर्जीवेन वा पुनः ।
यज्ञमेकं ततः कृत्वा तत् संन्यस्य तपश्चरेत् ॥ ५०

पुण्यमाहुः कुरुक्षेत्रं सरस्वत्यां पृथूदके ।
अत्रावगाह्य स्थित्वा च नैनं श्वो मरणं तपेत् ॥ ५१

प्रभासोत्तममासाद्य मानसं पुष्करं सरः ।
कङ्कालं चापि गन्तासि लब्धायुर्जीविते पुनः ॥ ५२

सरस्वतीदृषद्वत्यौ सेवमानोऽनुसञ्चरेत् ।
स्वाध्यायशील एतेषु सर्वेष्वेवमुपस्पृशेत् ॥ ५३

त्यागधर्मं पवित्राणां संन्यासं परमब्रवीत् ।
अत्राप्युदाहरन्तीमा गाथास्सत्यवता कृताः ॥ ५४

यथा कुमारस्सत्यो वै नैव पुण्यो न पापकः ।
न ह्यस्ति सर्वभूतेषु दुःखमस्मिन् कुतस्सुखम् ॥ ५५

एवं प्रकृतिभूतानां सर्वसंसर्गयायिनाम् ।
त्यजतां जीवितं प्रायो निवृत्ते पुण्यपापके ॥ ५६

यत्त्वेव राज्ञो ज्यायिष्ठं कार्याणां तद्ब्रवीमि ते ॥ ५६॥

बलेन संविभागैश्च जय स्वर्गं पुनीष्व च ।
यस्य वै बलमोजश्च स धर्मस्य प्रभुर्नरः ॥ ५७॥

ब्राह्मणानां सुखार्थं त्वं पर्येहि पृथिवीमिमाम् ।
यथैवैतान् पुरा क्षेप्सीस् तथैवैतान् प्रसादय ॥ ५८॥

अपि धिक्क्रियमाणोऽपि तर्ज्यमानोऽप्यनेकधा ।
आत्मनो दर्शनं विद्वान् नाहर्तास्मीति मा क्रुधः ॥ ५९॥

घटमानस्स्वकार्येषु कुर्वन्नैश्श्रेयसं परम् ॥ ६०

हिमाग्निघोषसदृशो राजा भवति कश्चन ।
लाङ्गलाशनिकल्पो वा भवत्यन्यः परन्तपः ॥ ६१

न निश्शेषेण गन्तव्यम् अचिकित्सेन वा पुनः ।
न जातु नाहमस्मीति प्रसक्तव्यमसाधुषु ॥ ६२

विकर्मणा तप्यमानः पादात् पापस्य मुच्यते ।
नैतत् कुर्यां पुनरिति द्वितीयात् परिमुच्यते ॥ ६३

[1]चरिष्ये धर्ममेवेति तृतीयात् परिमुच्यते ।
[2]शुचिस्तीर्थान्यनुचरन् बहुत्वात् परिमुच्यते ॥ ६४

कल्याणमेव कर्तव्यं पुरुषेण बुभूषता ॥ ६४॥

ये सुगन्धीनि सेवन्ते तथागन्धा भवन्ति ते ।
ये दुर्गन्धीनि सेवन्ते तथागन्धा भवन्ति ते ॥ ६५॥

तपश्चर्यापरस्सद्यं पापाद्धि परिमुच्यते ।

---

1. ख—नास्तीदमर्धम्
2. क-ख-घ—नास्तीदमर्धम्

संवत्सरमुपास्याग्निम् अभिशस्तः प्रमुच्यते ॥ ६६॥

त्रीणि वर्षाण्युपास्याग्निं भ्रूणहाऽपि प्रमुच्यते ॥ ६७

महासरः पुष्कराणि प्रभासोत्तरमानसम् ।
अभ्येत्य योजनशतं [1]भ्रूणहा विप्रमुच्यते ॥ ६८

यावतः प्राणिनो हन्यात् तज्जातीयान् स्वभावतः ।
प्रमीयमाणानुन्मोच्य [2]प्राणिहा विप्रमुच्यते ॥ ६९

अपि वाऽप्सु निमज्जेत त्रिर्जपन्नघमर्षणम् ।
यथाऽश्वमेधावभृथम् एतत्तन्मनुरब्रवीत् ॥ ७०

क्षिप्रं प्रणुदते पापं सत्कारं लभते तथा ।
अपि चैनं प्रसीदन्ति भूतानि जडमूकवत् ॥ ७१

बृहस्पतिं देवगुरुं पुरा सुरास्
समेत्य सर्वे नृपतेऽ[3]न्वयुञ्जत ॥ ७१॥

देवाः—

धर्मे फलं हेतुकृते महर्षे
तथेतरस्मिन्नरके पापलोक्ये ।
उभे तु यस्य सुकृते भवेतां
किं ते द्वयोस्तत्र जयोत्तरं स्यात् ॥ ७२॥

---

1. ख—भ्रूणहत्या विमुच्यते

2. क-ख-घ—भ्रूणहा

3. ख-घ—त्वयुञ्जत

आचक्ष्व तत् कर्मफलं महर्षे
कथं पापं नुदते पुण्यशीलः ॥ ७३

बृहस्पतिः—

सकृत् कृत्वा पापमबुद्धिपूर्वं
पुण्यानि चेत् कुरुते बुद्धिपूर्वम् ।
स तत् पापं नुदते पुण्यशीलो
वासो यथा मलिनं क्षारयुक्त्या ॥ ७४

पापं कृत्वाऽभिमन्येत नाहमस्मीति पूरुषः ।
चिकीर्षेदेव कल्याणं श्रद्दधानो जितेन्द्रियः ॥ ७५

छिद्राणि वसनस्येव साधूनां संवृणोति सः ।
यः पापं पुरुषः कृत्वा कल्याणमभिपद्यते ॥ ७६

आदित्यः पुनरुद्यन् वा तमस्सर्वं व्यपोहति ।
कल्याणमाचरन्नेवं सर्वपापं व्यपोहति ॥ ७७

भीष्मः—

एवमुक्त्वा तु राजानम् इन्द्रोतो जनमेजयम् ।
याजयामास विधिवद् वाजिमेधेन शौनकः ॥ ७८

ततस्स राजा व्यपनीतकल्मषश्
श्रिया युतः प्रज्वलितोऽनुरूपया ।

विवेश राज्यं स्वममित्रकर्शनो
दिवं यथा पूर्णवपुर्निशाकरः ॥ ७९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[ अस्मिन्नध्याये ७९ श्लोकाः ]

## ॥ षट्त्रिंशदधिकशततमोऽध्यायः ॥

वैदिशनाम्नि नगरे केषुचिद्ब्राह्मणेषु मृतबालं श्मशानमुपनीय गृध्रजम्बुकवचनैर्दोलायमानमानसतया चिन्तयत्सु तत्र यदृच्छासमागतपरमेश्वरेण पार्वतीचोदनया मृतबालकोज्जीवनम् ॥

भीष्मः—

शृणु पार्थ यथावृत्तम् इतिहासं पुरातनम् ।
[1]गृध्रजम्बुकसंवादं यो वृत्तो वैदिशे पुरे ॥ १

दुःखिताः केचिदादाय बालमप्राप्तयौवनम् ।
कुलसर्वस्वभूतं वै रुदन्तश्शोककर्शिताः ॥ २

बालं मृतं गृहीत्वाऽथ श्मशानाभिमुखास्स्थिताः ।
अङ्केनाङ्कं समाक्रम्य रुरुदुर्भूतले तदा ॥ ३

तेषां रुदितशब्देन गृध्रोऽभ्येत्य वचोऽब्रवीत् ॥ ३॥

1. घ—अर्धद्वयं नास्ति

गृध्रः—

प्रेतात्मकमिमं काले त्यक्त्वा गच्छत मा चिरम् ॥ ४

इह पुंसां सहस्राणि स्त्रीसहस्राणि चैव ह ।
समानीतानि कालेन किं ते वै जातु बान्धवाः ॥ ५

सम्पश्यत जगत् सर्वं सुखदुःखैरधिष्ठितम् ।
संयोगो विप्रयोगश्च पर्यायेणैव लक्ष्यते ॥ ६

गृहीत्वा येऽनु गच्छन्ति अनुयान्ति च ये मृतान् ।
तेऽप्यायुषः प्रमाणेन स्वेन गच्छन्ति जन्तवः ॥ ७

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे ॥ ८

न पुनर्जीवितः कश्चित् कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥ ९

सर्वेण खलु मर्तव्यं मर्त्यलोके प्रसूयता ।
कृतान्तविहिते मार्गे को मृतं जीवयिष्यति ॥ १०

[1]दिशान्तोपचितो यावद् अस्तं गच्छति भास्करः ।
गम्यतां स्वमधिष्ठानं सुतस्नेहं विसृज्य वै ॥ ११

भीष्मः—

ततो गृध्रवचश्श्रुत्वा विक्रोशन्तस्तदा नृप ।

1. ख-घ—दशा

बान्धवास्तेऽभ्यधावन्त पुत्रमुत्सृज्य भूतले ॥ १२

विनिश्चित्याथ च तदा सन्त्यजन्तस्स्वमात्मजम् ।
निराशा जीविते तस्य मार्गमारुह्य विष्ठिताः ॥ १३

ध्वाङ्क्षरूक्षसवर्णस्तु बिलान्निस्सृत्य जम्बुकः ।
गच्छमानांस्तु तानाह निर्घृणाः खलु मानुषाः ॥ १४

आदित्योऽयं स्थितो मूढास् स्नेहं कुरुत मा भयम् ।
बहुरूपो मुहूर्ताच्च जीवेदपि कथञ्चन ॥ १५

दर्भान् भूमौ विनिक्षिप्य पुत्रस्नेहविनाकृताः ।
श्मशाने पुत्रमुत्सृज्य कस्माद्गच्छत निर्घृणाः ॥ १६

न वोऽस्त्यस्मिन् सुते स्नेहो मधुराभाषिणि प्रिये ।
यस्य भाषितमात्रेण प्रसादमुपगच्छत ॥ १७

न पश्यध्वं सुतस्नेहं यादृशं पशुपक्षिणाम् ।
न तेषां धारयित्वा तु कश्चिदस्ति फलागमः ॥ १८

चतुष्पात्पक्षिकीटानां प्राणिनां स्नेहसङ्गिनाम् ।
परलोकगतिस्थानां मुनियज्ञक्रिया इव ॥ १९

तेषां पुत्राभिरामाणाम् इह लोके परत्र च ।
न गुणो दृश्यते कश्चित् प्रजास्सन्धारयन्ति च ॥ २०

अपश्यतां प्रियान् पुत्रान् येषां शोको न तिष्ठति ।
न ते पोषणसम्प्रीता मातापितर एव हि ॥ २१

मानुषाणां कुतस्स्नेहो येषां शोको न विद्यते ।
इमं कुलकरं पुत्रं त्यक्त्वा क नु गमिष्यथ ॥ २२

चिरं मुञ्चत बाष्पं च चिरं स्नेहेन पश्यत ।
एवंविधानि हीष्टानि दुस्त्यजानि विशेषतः ॥ २३

क्षीणस्याथाभिशस्तस्य श्मशानाभिमुखस्य च ।
बान्धवा यत्र तिष्ठन्ति तत्रान्यो नावतिष्ठते ॥ २४

सर्वस्य दयिताः प्राणास् सर्वस्स्नेहं च विन्दति ।
तिर्यग्योनिष्वपि समं स्नेहं पश्यत यादृशम् ॥ २५

त्यक्त्वा कथं गच्छथेमं पद्मलोलायतेक्षणम् ।
यथा नवोद्वाहकृतं स्नानमाल्यविभूषितम् ॥ २६

जम्बुकस्य वचश्श्रुत्वा कृपणं परिदेवतः ।
न्यवर्तन्त ततस्सर्वे बालार्थं ते हि मानुषाः ॥ २७

गृध्रः—

अहो धिक् सुनृशंसेन जम्बुकेनाल्पमेधसा ।
क्षुद्रेणोक्ता हीनसत्त्वा मानुषाः किं निवर्तथ ॥ २८

पञ्चभूतपरित्यक्तं शुष्कं काष्ठत्वमागतम् ।
कस्माच्छोचथ निश्चेष्टम् आत्मानं किं न शोचथ ॥ २९

तपः कुरुध्वं वै तीव्रं मुच्यध्वं येन किल्बिषात् ।
तपसा लभ्यते सर्वं विलापः किं करिष्यति ॥ ३०

स्वनिष्टानि च भाग्यानि जानीत स्वं स्वमात्मना ।
येन गच्छति बालोऽयं त्यक्त्वा शोकमनुत्तरम् ॥ ३१

धनं गावस्सुवर्णं च मणिरत्नमथापि च ।
अपत्यं च तपोमूलं तपो योगाच्च लभ्यते ॥ ३२

यथा कृता च भूतेषु प्राप्यते सुखदुःखिता ।
गृहीत्वा जायते जन्तुर् दुःखानि च सुखानि च ॥ ३३

न कर्मणा पितुः पुत्रः पिता वा पुत्रकर्मणा ।
मार्गेणान्येन गच्छन्ति बद्धास्सुकृतदुष्कृतैः ॥ ३४

धर्मं चरत यत्नेन तथाऽधर्मान्निवर्तत ।
वर्तध्वं च यथाकालं दैवतेषु द्विजेषु च ॥ ३५

शोकं त्यजत दैन्यं च सुतस्नेहं विमुञ्चत ।
त्यज्यतामयमाकाशे ततश्शीघ्रं निवर्तत ॥ ३६

यत् करोति शुभं कर्म तथा धर्मं सुदारुणम् ।
तत् कर्तैव समश्नाति बान्धवानां किमत्र वै ॥ ३७

इह त्यक्त्वाऽवतिष्ठन्ते बान्धवा बान्धवं प्रियम् ।
स्नेहमुत्सृज्य गच्छन्ति बाष्पपूर्णाविलेक्षणाः ॥ ३८

प्राज्ञो वा यदि वा मूर्खस् सधनो निर्धनोऽपि वा ।
सर्वः कालवशं याति सुखदुःखसमन्वितः ॥ ३९

किं करिष्यथ शोचित्वा मृतं किमनुशोचथ ।

सर्वस्य हि प्रभुः कालो धर्मतस्समदर्शनः ॥ ४०
यौवनस्थांश्च बालांश्च वृद्धान् गर्भगतानपि ।
सर्वानाविशते मृत्युर् एवम्भूतमिदं जगत् ॥ ४१

जम्बुकः—

अहो मन्दीकृतस्स्नेहो गृध्रेणेहाल्पबुद्धिना ।
पुत्रस्नेहाभिभूतानां युष्माकं शोचतां भृशम् ॥ ४२
समैस्सम्यक् प्रयुक्तैश्च वचनैर्हेतुदर्शनैः ।
सत्वमेतत् प्रपद्याशु कुरुतां मा विचार्यताम् ॥ ४३
यद्गच्छथ जलस्थानं स्नेहमुत्सृज्य दुस्त्यजम् ॥ ४३॥
अहो पुत्रवियोगेन मृतशून्योपसेवनात् ।
क्रोशतां वा भृशं दुःखं विवत्सानां गवामिव ॥ ४४॥
अद्य शोकं विजानामि मानुषाणां महीतले ।
स्नेहं हि करुणं दृष्ट्वा ममाप्यश्रूण्यथागमन् ॥ ४५॥
यत्नो हि सततं कार्यस् ततो दैवेन युज्यते ।
दैवं पुरुषकारश्च कृतान्तेनोपपद्यते ॥ ४६॥
अनिर्वेदस्सदा कार्यो निर्वेदाद्धि कुतस्सुखम् ।
प्रयत्नात् प्राप्यते ह्यर्थः कस्माद्गच्छथ निर्दयाः ॥ ४७॥
आत्ममांसोपवृत्तां च शरीरार्धमयीं तनुम् ।
पितॄणां वंशकर्तारं वने त्यक्त्वा क्व यास्यथ ॥ ४८॥

अथ चास्तं गते सूर्ये सन्ध्याकालेऽप्युपस्थिते ।
ततो नेष्यथ वा पुत्रम् इहस्था वा भविष्यथ ॥　　४९॥

गृध्रः—

अद्य वर्षसहस्रं मे साग्रं जातस्य मानुषाः ।
न च पश्यामि जीवन्तं मृतं स्त्रीपुंनपुंसकम् ॥　　५०॥

मृता गर्भेषु जायन्ते जायमाना म्रियन्ति च ।
विक्रामन्तो म्रियन्ते च यौवनस्थास्तथा परे ॥　　५१॥

अनित्यानि च भाग्यानि चतुष्पात्पक्षिणामपि ।
जङ्गमाजङ्गमानां च ह्यायुरग्रेऽवतिष्ठते ॥　　५२॥

इष्टदारवियुक्ताश्च पुत्रशोकान्वितास्तथा ।
दह्यमानास्स्म शोकेन गृहान् गच्छन्ति नित्यदा ॥　　५३॥

अनिष्टानां सहस्राणि तथेष्टानां शतानि च ।
उत्सृज्येह प्रयाता वै बान्धवा भृशदुःखिताः ॥　　५४॥

त्यज्यतामेष निस्तेजाश् शून्यः काष्ठत्वमागतः ॥　　५५

अन्यदेहविषक्तं हि शिशुं काष्ठमुपासथ ॥　　५५॥

[1]त्यक्तजीवस्य वै बाष्पं कस्माद्धित्वा न गच्छथ ।
निरर्थको ह्ययं स्नेहो निष्फलश्च परिश्रमः ॥　　५६॥

न चक्षुर्भ्यां न कर्णाभ्यां स [2]शृणोति स पश्यति ।

1. ख-घ—भ्रान्तदेहस्य　　2. क-ख-घ— न शृणोति न

तस्मादेनं समुत्सृज्य स्वगृहान् गच्छताशु वै ॥ ५७॥

मोक्षधर्माश्रितैर्वाक्यैर् हेतुमद्भिरनिष्ठुरैः ।
मयोक्ता गच्छत क्षिप्रं स्वं स्वमेव निवेशनम् ॥ ५८॥

प्रज्ञासंज्ञानयुक्तेन बुद्धिसंज्ञाप्रदायिना ।
वचनं श्राविता मुख्यं मानुषास्संन्निवर्तथ ॥ ५९॥

जम्बुकः—

इमं कनकवर्णाङ्गं भूषणैस्समलङ्कृतम् ।
गृध्रवाक्यात् कथं पुत्रं [1]त्यक्ष्यध्वं पितृपिण्डदम् ॥ ६०॥

न स्नेहस्य विरोधोऽस्ति विलापरुदितस्य वा ।
मृतस्यास्य परित्यागात् तापो वो भविता ध्रुवम् ॥ ६१॥

श्रूयते शम्बुके शूद्रे हते ब्राह्मणदारकः ।
जीवितो धर्ममासाद्य रामात् सत्यपराक्रमात् ॥ ६२॥

तथा श्वैत्यस्य राजर्षेर् बालो दिष्टान्तमागतः ।
मुनिना धर्मनित्येन मृतस्सञ्जीवितः पुनः ॥ ६३॥

यथा कश्चिद्भवेत् सिद्ध ऋषिर्वा देवताऽपि वा ।
कृपणानामनुक्रोशं कुर्याद्वो रुदतामिह ॥ ६४॥

भीष्मः—

इत्युक्तास्ते न्यवर्तन्त शोकार्ताः पुत्रवत्सलाः ।

---

1. ख—त्यजध्वं

अङ्के शिरस्समाधाय रुरुदुर्बहुविस्तरम् ॥ ६५॥

गृध्रः—

अश्रुपातपरिक्लिन्नः पाणिस्पर्शप्रपीडितः ।
धर्मराजप्रयोगाच्च दीर्घनिद्रां प्रवेशितः ॥ ६६॥

तपसाऽपि हि संयुक्तो जनः कालेन हन्यते ।
सर्वस्नेहावसक्तानाम् इदं हि स्नेहवर्तनम् ॥ ६७॥

बालवृद्धसहस्राणि सदा सन्त्यज्य बान्धवाः ।
दिवसानि च रात्रीश्च दुःखं तिष्ठन्ति भूतले ॥ ६८॥

अलं निर्बन्धमालम्ब्य शोकस्य परिवारणम् ।
अप्रत्ययं कुतो ह्यस्य पुनरद्येह जीवितम् ॥ ६९॥

नैष जम्बुकवाक्येन पुनः प्राप्स्यति जीवितम् ।
मृतस्योत्सृष्टदेहस्य पुनर्देहो न विद्यते ॥ ७०॥

न वै मूर्तिप्रदानेन जम्बुकानां शतैरपि ।
बालस्य जीवश्शक्योऽयम् अथ वर्षशतैरपि ॥ ७१॥

अथ रुद्रः कुमारो वा ब्रह्मा वा विष्णुरेव च ।
वरमस्मै प्रयच्छन्ति ततो जीवेदयं पुनः ॥ ७२॥

नैव बाष्पविमोक्षेण न च श्वासकृतेन वै ।
न दीर्घरुदितेनेह पुनर्जीवं गमिष्यति ॥ ७३॥

अहं च क्रोष्टुकश्चैव यूयं चैवास्य बान्धवाः ।

धर्माधर्मौ गृहीत्वैव सर्वे वर्तामहेऽध्वनि ॥ ७४॥

अप्रियं परुषं चापि परद्रोहं परस्त्रियम् ।
अधर्ममनृतं चैव दूरात् प्राज्ञो विवर्जयेत् ॥ ७५॥

धर्मं सत्यं शुभं न्याय्यं महतीं प्राणिनां दयाम् ।
अजिह्ममशठत्वं च यत्नतः परिमार्गत ॥ ७६॥

मातरं पितरं चैव बान्धवान् सुहृदस्तथा ।
जीवन्तो ये न पश्यन्ति तेषां धर्मविपर्ययः ॥ ७७॥

यो न पश्यति चक्षुर्भ्यां नेङ्गते च कथञ्चन ।
तस्य निष्ठावसानान्ते रुदन्तः किं करिष्यथ ॥ ७८॥

भीष्मः—

इत्युक्तास्तं सुतं त्यक्त्वा भूमौ शोकपरिप्लुताः ।
दह्यमानास्सुतस्नेहात् प्रययुर्बान्धवा गृहान् ॥ ७९॥

जम्बुकः—

दारुणो मर्त्यलोकोऽयं सर्वप्राणिविनाशनः ।
इष्टबन्धुवियोगश्च तथैवाल्पं च जीवितम् ॥ ८०॥

बह्वलीकमसत्यं वाऽप्यतिवादात् प्रियंवदम् ।
इमं प्राप्य पुनर्भावं दुःखशोकविवर्धनम् ॥ ८१॥

न मे मानुषलोकोऽयं मुहूर्तमपि रोचते ॥ ८२

अहो धिग्गृध्रवाक्येन सन्निवर्तेत मानुषाः ।

प्रदीप्ताः पुत्रशोकेन यथैवाबुद्धयस्तथा ॥ ८३

कथं गच्छत निरस्नेहास् सुतस्नेहं विसृज्य वै ।
श्रुत्वा गृध्रस्य वचनं पापस्येहाकृतात्मनः ॥ ८४

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
सुखदुःखान्विते लोके नास्ति सौख्यमनन्तकम् ॥ ८५

इमं क्षितितले त्यक्त्वा बालं रूपसमन्वितम् ॥
कुलशोकहरं त्यक्त्वा मूढाः पुत्रं क्व यास्यथ ॥ ८६

रूपयौवनसम्पन्नं द्योतमानमिव श्रिया ।
जीवन्तमिव पश्यामि मनसा नात्र संशयः ॥ ८७

विनाशेनास्य न हि वै सुखं प्राप्स्यथ बालिशाः ।
पुत्रशोकाग्निदग्धानां मृतमप्यद्य वः क्षमम् ॥ ८८

दुःखसम्भावनां कृत्वा धारयित्वा सुखं स्वयम् ।
त्यक्त्वा गमिष्यथ क्वाद्य समुत्सृज्याल्पबुद्धयः ॥ ८९

भीष्मः—

तथा धर्मविरोधेन प्रियमिथ्याभिधायिना ।
श्मशानवासिना नित्यं रात्रिं मृगयता तदा ॥ ९०

ततो मध्यस्थतां नीता वचनैरमृतोपमैः ।
जम्बुकेन स्वकार्यार्थं बान्धवास्तत्र वारिताः ॥ ९१

गृध्रः—

अयं प्रेतसमाकीर्णो यक्षराक्षससेवितः ।
दारुणः काननोद्देशः कौशिकैरभिनादितः ॥ १२

भीमस्सुघोरश्च तथा नीलमेघसमप्रभः ।
अस्मिञ् शवं परित्यज्य प्रेतकार्याण्युपासत ॥ १३

भानुर्यावन्न यात्यस्तं यावच्च विमला दिशः ।
तावदेनं परित्यज्य प्रेतकार्याण्युपासत ॥ १४

नदन्ति परुषं श्येनाश् शिवाः क्रोशन्ति दारुणम् ।
मृगेन्द्राः प्रतिनर्दन्ते रविरस्तं च गच्छति ॥ १५

चिता धूमेन नीलेन संरज्यन्ते च पादपाः ।
श्मशाने च निराहाराः प्रतिबुध्यन्ति देहिनः ॥ १६

सर्वे विक्रान्तवीराश्चाप्यस्मिन् देशे सुदारुणे ।
युष्मान् प्रधर्षयिष्यन्ति विकृता मांसभोजिनः ॥ १७

दूरश्चायं वनोद्देशो भयमत्र भविष्यति ।
त्यज्यतां काष्ठभूतोऽयं मुच्यतां जाम्बुकं वचः ॥ १८

यदि जम्बुकवाक्यानि निष्फलान्यनृतानि च ।
श्रोष्यथ भ्रष्टविज्ञानास् ततस्सर्वे नशिष्यथ ॥ १९

जम्बुकः—

श्रूयतां वो न भेतव्यं यावत्तपति भास्करः ।

तावदस्मिन् सुते स्नेहाद् अनिर्वेदेन वर्तत ॥ १००

स्वैरं [1]कुरुत विस्रब्धास् स्वैरं स्नेहेन पश्यत ।
दारुणेऽस्मिन् वनोद्देशे भयं वो न भविष्यति ॥ १०१

अयं सौम्यो वनोद्देशः पितृणां निधनाकरः ।
स्थीयतां यावदादित्यः किं वः क्रव्यादभाषितैः ॥ १०२

यदि गृध्रस्य वाक्यानि तीव्राणि रभसानि च ।
गृह्णीत मोहितात्मानस् सुतो वो न भविष्यति ॥ १०३

भीष्मः—

गृध्रो नास्तमितेऽभ्येति तिष्ठेन्नक्तं च जम्बुकः ।
मृतस्य तं परिजनम् ऊचतुस्तौ क्षुधान्वितौ ॥ १०४

स्वकार्यदक्षौ तौ राजन् गृध्रो जम्बुक एव च ।
क्षुत्पिपासापरिश्रान्तौ शास्त्रमालम्ब्य जल्पतः ॥ १०५

तयोर्विज्ञानविदुषोर् द्वयोर्मृगपतत्रिणोः ।
वाक्यैरमृतकल्पैर्हि प्रतिष्ठन्ते व्रजन्ति च ॥ १०६

शोकदैन्यसमाविष्टा रुदन्तस्तस्थिरे तदा ।
स्वकार्ये चाकुलाभ्यां ते सम्भ्राम्यन्ते च नैपुणात् ॥ १०७

तथा तयोर्विवदतोर् आहारमभिकाङ्क्षिणोः ।
बान्धवानां स्थितानां चाप्युपातिष्ठत शङ्करः ॥ १०८

---

1. ख—रुदम्तं।

ततस्तानाह मनुजान् वरदोऽस्मीति शूलभृत् ।
ते प्रत्यूचुरिदं वाक्यं दुःखिताः प्रणतास्स्थिताः ॥ १०९

बालबन्धवः—

एकपुत्रविहीनानां सर्वेषां जीवनार्थिनाम् ।
पुत्रस्य नो जीवितेश जीवितं दातुमर्हसि ॥ ११०

भीष्मः—

एवमुक्तस्स भगवान् वारिपूर्णेन पाणिना ।
जीवं तस्मै कुमाराय प्रादाद्वर्षशताय वै ॥ १११

तथा गोमायुगृध्राभ्याम् अददत् क्षुद्विनाशनम् ।
वरं पिनाकी भगवान् सर्वभूतहिते रतः ॥ ११२

ततः प्रणम्य देवेशं श्रेयोहर्षसमन्विताः ।
कृतकृत्यास्सुसंहृष्टाः प्रातिष्ठन्त तदा विभो ॥ ११३

अनिर्वेदेन दीर्घेण निश्चयेन ध्रुवेण च ।
देवदेवप्रसादाच्च क्षिप्रं फलमवाप्स्यते ॥ ११४

पश्य देवस्य संयोगं बान्धवानां च तिष्ठताम् ।
कृपणानां हि रुदतां कृतमश्रुप्रमार्जनम् ॥ ११५

पश्य चाल्पेन कालेन निश्चयान्वेषणेन च ।
प्रसादं शङ्करात् प्राप्य दुःखितास्सुखमाप्नुवन् ॥ ११६

ते विस्मिताः प्रहृष्टाश्च पुत्रसञ्जीवनात् पुनः ।
बभूवुर्भरतश्रेष्ठ प्रसादाच्छङ्करस्य वै ॥ ११७

ततस्ते त्वरिता राजंस् त्यक्त्वा शोकमघोद्भवम् ।
विविशुः पुत्रमादाय नगरं हृष्टमानसाः ॥ ११८

एषा बुद्धिस्समस्तानां चातुर्वर्ण्येन दर्शिता ॥ ११८॥

धर्मार्थमोक्षसंयुक्तम् इतिहासं पुरातनम् ।
श्रुत्वा मनुष्यस्सततं प्रेत्य चेह च मोदते ॥ ११९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[ अस्मिन्नध्याये ११९॥ श्लोकाः ]

## ॥ सप्तत्रिंशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति बलवति रिपौ मोहाद्वैरमुत्पादितवता कर्तव्यविषये निदर्शनतया शाल्मलिचरितकथनोपक्रमः ॥ १ ॥ हिमवति पर्वते महाशाल्मलिं दृष्टवता नारदेन तद्वर्णनम् ॥ २ ॥ नारदेन शाल्मलिं प्रति पर्वतादिभञ्जकेनापि वायुना तदीयशाखाया अप्यभञ्जने कारणप्रश्ने तेन साधिक्षेपमात्मशाखाभञ्जने वायोरशक्तिकथनम् ॥ ३ ॥ नारदसूचितेन वायुना शाल्मलिमेत्य परेद्युस्तद्भञ्जनप्रतिज्ञानम् ॥ ४ ॥ वायुबलज्ञेन शाल्मलिना तदागमनात्प्रागेव स्वेनैव स्वीयशाखावशातनपूर्वकमवस्थानम् ॥ ५ ॥ परेद्युरागतेन वायुना तं प्रति तत्कृतशाखावशातनस्यापि स्वबलप्रयोज्यत्वोक्तिः ॥ ६ ॥

---

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
संवादं भरतश्रेष्ठ शाल्मलेः पवनस्य च ॥ १

हिमवन्तं समासाद्य महानासीद्वनस्पतिः ।
वर्षपूगाभिसंवृद्धश् शाखामूलपलाशवान् ॥ २

तत्र मत्ताश्च मातङ्गा घर्मार्ताश्श्रमकर्शिताः ।
विश्राम्यन्ति महाबाहो तथाऽन्या मृगजातयः ॥ ३

नल्वमात्रपरीणाहो घनच्छायो वनस्पतिः ।
शुकशारिकसङ्घुष्टः पुष्पवान् फलवानपि ॥ ४

सार्थका वणिजश्चैव तापसाश्च वनौकसः ।
वसन्ति तत्र मार्गस्थास् सुरम्ये तरुसत्तमे ॥ ५

तस्य ता विपुलाश्शाखा दृष्ट्वा स्कन्धं स सर्वशः ।
अभिगम्याब्रवीदेनं नारदो भरतर्षभ ॥ ६

नारदः—

अहो नु दर्शनीयस्त्वम् अहो चासि मनोरमः ।
प्रीयामहे त्वया नित्यं तरुप्रवर शाल्मले ॥ ७

तथैव शकुनास्तात मृगाश्चाथ तथा गजाः ।
वसन्तस्तव दृष्ट्वा मे मनोहरतरास्तथा ॥ ८

तव शाखा महाशाखा स्कन्धश्च विपुलास्तथा ।
न ते प्रभग्नान् पश्यामि मारुतेन कथञ्चन ॥ ९

किं नु ते पवनस्तात प्रीतिमानथ वा सुहृत् ।
केन त्वा रक्षते नित्यं वनेऽस्मिन् पवनो ध्रुवम् ॥ १०

प्रवाति च वनस्थानां वृक्षाणां च वनान्यपि ।
पर्वतानां च शिखराण्याकालयति वेगवान् ॥ ११

शोषयत्येव पातालं [1]वहन् गन्धवहश्शुचिः ।
ह्रदांश्च सरितश्चैव सागरांश्च तथैव सः ॥ १२

संरक्षते च पवनस् सखित्वेन न संशयः ।

1. क-ख—वेगाद्

तस्माद्बहुलशाखोऽसि पर्णवान् पुष्पवानपि ॥ १३
इदं च रमणीयं ते प्रतिभाति वनस्पते ।
यदि मे विहगास्तात रमन्ते मुदितास्त्वयि ॥ १४
एषां पृथक् समस्तानां श्रूयन्ते मधुरा गिरः ।
पुष्पसम्मोदने काले वाशन्ते हरियूथपाः ॥ १५
तथेमे गर्जिता नागास् स्वयूथगणशोभिताः ।
घर्मार्तास्त्वां समासाद्य सुखं विन्दन्ति शाल्मले ॥ १६
तथैव मृगजातीभिर् अन्याभिरुपशोभसे ।
तथा सार्थाधिवासैश्च शोभसे मेरुवद्द्रुम ॥ १७
ब्राह्मणैश्च तपस्सिद्धैस् तापसैराश्रमैस्तथा ।
त्रिविष्टपसमं मन्ये तवायतनमेव च ॥ १८
बन्धुत्वादथ सख्याद्व शाल्मले नात्र संशयः ।
कस्मात् त्वां रक्षते नित्यं भीमस्सर्वत्रगोऽनिलः ॥ १९
तद्भावं वा परं वायोश् शाल्मले त्वमुपागतः ।
तवाहमस्मीति सदा नूनं संरक्षति द्रुम ॥ २०
न तं पश्याम्यहं वृक्षं पर्वतं वेश्म वा दृढम् ।
यं न वायुबलाद्भग्नं पृथिव्यामिति मे मतिः ॥ २१
त्वं पुनः कारणैर्नूनं शाल्मले रक्ष्यसे सदा ।
वायुना सपरीवारस् तेन तिष्ठस्यसंशयम् ॥ २२

शाल्मलिः—

न मे वायुस्सखा ब्रह्मन् न बन्धुर्मम नारद ।
चिरं मे प्रीयते येन येन मां रक्षतेऽनिलः ॥ २३

मम तेजोबलं भीमं वायोरपि तु नारद ।
कलामष्टादशीं प्राणैर् न मे प्राप्नोति मारुतः ॥ २४

आगच्छत् परुषो वायुर् मया विष्टम्भितो बलात् ।
रुजन् द्रुमान् पर्वतांश्च यच्चान्यत् स्थाणुजङ्गमम् ॥ २५

स मया बहुशो भग्नः प्रभञ्जन् वै प्रभञ्जनः ।
तस्मान्न बिभ्ये देवर्षे क्रुद्धादपि समीरणात् ॥ २६

नारदः—

शाल्मले विपरीतं ते दर्शनं नात्र संशयः ।
न हि वायोर्बले नास्ति भूतं तुल्यबलं क्वचित् ॥ २७

इन्द्रो यमो वैश्रवणो वरुणश्च जलेश्वरः ।
नैतेऽपि तुल्या मरुतः किं पुनस्त्वं वनस्पते ॥ २८

यद्धि किञ्चिदपि प्राणी चेष्टते शाल्मले भुवि ।
सर्वत्र भगवान् वायुश् चेष्टाप्राणकरः प्रभुः ॥ २९

एष चेष्टयते सम्यक् प्राणिनस्सम्यगायतः ।
असम्यगायतो भूयश् चेष्टते विकृतं नृषु ॥ ३०

स त्वमेवंविधं वायुं सर्वसत्त्वभृतां वरम् ।

न पूजयसि पूज्यं तं किमन्यद्बुद्धिलाघवात् ॥ ३१
असारश्चापि दुर्बुद्धे केवलं बहु भाषसे ।
क्रोधादिभिरवच्छिन्नो मृषा वदसि शाल्मले ॥ ३२

मम रोषस्समुत्पन्नस् त्वय्येवं सम्प्रभाषिणि ।
ब्रवीम्यहमिदं वायोस् तव दुर्भाषितं बहु ॥ ३३

चन्दनैस्स्यन्दनैस्सालैस् सरलैर्देवदारुभिः ।
वेतसैर्धन्वनैश्चैव ये चान्ये सारवत्तराः ॥ ३४

तैश्चापि नैवं दुर्बुद्धे क्षिप्तो वायुः कृतात्मभिः ॥ ३४॥
ते हि जानन्ति वायोश्च बलमात्मानमेव च ।
तस्मात् ते नावमन्यन्ते श्वसनं द्रुमसत्तमाः ॥ ३५॥

त्वं तु मोहान्न जानीषे वायोर्बलमनुत्तमम् ॥ * ३६

भीष्मः—

एवमुक्त्वा तु राजेन्द्र शाल्मलिं ब्रह्मवित्तमः ।
नारदः पवने सर्वं शाल्मलेर्वाक्यमब्रवीत् ॥ ३७

नारदः—

हिमवत्पृष्ठतः कश्चिच् छाल्मलिः परिवारवान् ।
बृहच्छाखो बृहन्मूलस् स त्वां वायोऽवमन्यते ॥ ३८

बहूनि क्षेपयुक्तानि त्वामाह वचनानि सः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

न युक्तानि मया वायो तानि वक्तुं त्वयि प्रभो ॥ ३९

जानामि त्वामहं वायो सर्वप्राणभृतां वरम् ।
विशिष्टं च वरिष्ठं च सर्वलोकेश्वरं प्रभुम् ॥ ४०

भीष्मः—

एतत्तु वचनं श्रुत्वा नारदस्य समीरणः ।
शाल्मलिं तमुपागम्य क्रुद्धो वचनमब्रवीत् ॥ ४१

वायुः—

शाल्मले नारदे यत्तत् त्वयोक्तं मद्विगर्हणम् ।
अहं वायुः प्रभावं ते दर्शये त्वात्मनो बलात् ॥ ४२

नाहं त्वामभिजानामि विदितात्माऽसि मे द्रुम ।
पितामहः प्रजासर्गे त्वयि विश्रान्तवान् प्रभुः ॥ ४३

तस्य विश्रमणादेष प्रसादो मत्कृतस्तव ।
अभूत्तस्य प्रसादात्त्वां न भज्यामि द्रुमाधम ॥ ४४

यन्मां त्वमवजानीषे यथाऽन्यं प्राकृतं तथा ।
दर्शयाम्येनमात्मानं यथा मां नावमन्यसे ॥ ४५

भीष्मः—

एवमुक्तस्ततः प्राह शाल्मलिः प्रहसन्निव ॥ ४५॥

शाल्मलिः—

पवन त्वं वने क्रुद्धो दर्शयात्मानमात्मना ।

मयि वा मुच्यतां क्रोधः किं मे क्रुद्धः करिष्यसि ॥ ४६॥
न ते बिभेमि पवन यद्यपि त्वं स्वयं प्रभुः ॥ ४७

भीष्मः—

इत्येवमुक्तः पवनश् श्व इत्येवाब्रवीद्वचः ।
दर्शयिष्यामि ते तेजस् ततो रात्रिरुपागमत् ॥ ४८

अथ निश्चित्य मनसा शाल्मलिर्वैरधारिणम् ।
पश्यमानस्तदाऽऽत्मानम् असमं मातरिश्वना ॥ ४९

शाल्मलिः—

नारदे यन्मया प्रोक्तं पवनं तं मृषा प्रति ।
असमर्थो ह्यहं वायोर् बलेन बलवान् हि सः ॥ ५०

मारुतो बलवान् नित्यं यथैनं नारदोऽब्रवीत् ।
अहं तु दुर्बलोऽन्येभ्यो वृक्षेभ्यो नात्र संशयः ॥ ५१

[1]किं तु बुद्ध्या समो नास्ति मम कश्चिद्वनस्पतिः ।
तामहं बुद्धिमास्थाय भयं त्यक्ष्ये समीरणात् ॥ ५२

यदि तां बुद्धिमास्थाय चरेयुः प्राणिनो वने ।
अरिष्टास्स्युस्सदा क्रुद्धात् पवनान्नात्र संशयः ॥ ५३

ते तु बाला न जानन्ति तथा नैतान् समीरणः ।
समीरयेत सङ्क्रुद्धो यथा जानाम्यहं तथा ॥ ५४

1. ख—अर्धचतुष्टयं नास्ति

भीष्मः—

ततो निश्चित्य मनसा शाल्मलिः क्षुभितस्तथा ।
शाखास्कन्धान् प्रशाखाश्च स्वयमेव व्यशातयत् ॥　५५

स परित्यज्य शाखाश्च पत्राणि कुसुमानि च ।
प्रभाते वायुमायान्तं प्रेक्षते स्म वनस्पतिः ॥　५६

ततः क्रुद्धश्श्वसन् वायुः पातयन् वै महाद्रुमान् ।
आजगामाथ तं देशम् आस्ते यत्र स शाल्मलिः ॥　५७

तं हीनपर्णं पतिताग्रशाखं
विकीर्णपुष्पं प्रसमीक्ष्य वायुः ।
उवाच वाक्यं स्मयमान एवं
मुदा युक्तश्शाल्मलिं रुग्णशाखम् ॥　५८

वायुः—

अहमप्येवमेव त्वां कुर्यां वै शाल्मले [1]मृषा ।
आत्मना यत् कृतं कृच्छ्रं शाखानामपकर्षणम् ॥　५९

हीनपुष्पाग्रशाखस्त्वं विशीर्णाङ्कुरपल्लवः ।
आत्मदुर्मन्त्रितेनेह मद्वीर्यवशगो भव ॥　६०

भीष्मः—

एतच्छ्रुत्वा वचो वायोश् शाल्मलिर्व्रीडितस्तदा ।

---

1. अ—रुषा

अतप्यत च तत् स्मृत्वा नारदो यत्तदाऽब्रवीत् ॥ ६१

एवं यो राजशार्दूल दुर्बलस्सन् बलीयसा ।
वैरमासज्जते बालस् तप्यते शाल्मलिर्यथा ॥ ६२

तस्माद्वैरं न कुर्वीत दुर्बलो बलवत्तरैः ।
शोचेत वैरं कुर्वाणो यथा वै शाल्मलिस्तथा ॥ ६३

न हि वैरं महात्मानो विवृण्वन्त्यपकारिषु ।
शनैश्शनैर्महाराज दर्शयन्ति स्म ते बलम् ॥ ६४

वैरं न कुर्वीत नरो दुर्बुद्धिर्बुद्धिजीविना ।
बुद्धिर्बुद्धिमतो याति तूलेष्विव हुताशनः ॥ ६५

न हि बुद्ध्या समः कश्चिद् विद्यते पुरुषे नृप ।
तथा बलेन राजेन्द्र न समोऽस्तीति चिन्तयेत् ॥ ६६

तस्मात् क्षमेत बालाय जडाय बधिराय च ।
बलाधिकाय राजेन्द्र तद्दृष्टं त्वयि शत्रुहन् ॥ ६७

अक्षौहिण्यो महाराज सप्त चैव महाद्युते ।
बलेन न समा राजन्नर्जुनस्य महात्मनः ॥ ६८

हतास्ताश्चैव भग्नाश्च पाण्डवेन यशस्विना ।
चरता बलमास्थाय पाकशासनिना रणे ॥ ६९

उक्तास्त आपद्धर्माश्च राजधर्माश्च भारत ।
विस्तरेण महाराज किं भूयः प्रब्रवीमि ते ॥ ७०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
[ अस्मिन्नध्याये ७० श्लोकाः ]

---

## ॥ अष्टात्रिंशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति लोभादीनामनर्थहेतुत्वकथनपूर्वकं तद्वतां गर्हणम् ॥ १ ॥ तथा सत्सङ्गस्य लोभादिजयोपायत्वसूचनाय सतां प्रशंसनपूर्वकं तत्पूजाविधानम् ॥ २ ॥

---

युधिष्ठिरः—

पापस्य यदधिष्ठानं यतः पापं प्रवर्तते ।
एतदिच्छाम्यहं श्रोतुं त्वत्तो वै भरतर्षभ ॥ १

भीष्मः—

पापस्य यदधिष्ठानं तच्छृणुष्व नराधिप ।
एको लोभो महाग्राहो लोभात् पापं प्रवर्तते ॥ २

अतः पापमधर्मश्च तथा दुःखमनुत्तमम् ।
निकृत्या मूलमेतद्धि येन पापकृतो जनाः ॥ ३

लोभात् क्रोधः प्रभवति लोभात् कामः प्रवर्तते ।

लोभान्मोहश्च माया च मानस्तम्भः परासुता ॥ ४

अक्षमा ह्रीपरित्यागश् श्रीनाशो हि धनक्षयः ।
अभिध्या प्राज्ञता चैव सर्वं लोभात् प्रवर्तते ॥ ५

अत्यागश्चातितर्कश्च क्रिया चैव विकर्मसु ।
कुलविद्यामदश्चापि रूपैश्वर्यमदस्तथा ॥ ६

सर्वभूतेष्वविश्वासस् सर्वभूतेष्वसक्तता ।
हरणं परवित्तानां परदाराभिमर्शनम् ॥ ७

वाग्वेगो मनसो वेगो निन्दावेगस्तथैव च ।
उपस्थोदरयोर्वेगो मृत्युवेगश्च दारुणः ॥ ८

ईर्ष्यावेगश्च बलवान् मिथ्यावेगश्च दुस्त्यजः ।
रसवेगश्च दुर्धार्यश् श्रोत्रवेगश्च दुस्सहः ॥ ९

कुत्सा विकत्था मात्सर्यं पापं दुष्कर्मकारिता ।
साहसानां च सर्वेषाम् अकार्याणां क्रियास्तथा ॥ १०

जातो बाल्ये च कौमारे यौवने वाऽथ मानवः ।
न त्यजत्यात्मकर्मैकं यन्न जीर्येत जीर्यतः ॥ ११

यो न पूरयितुं शक्यो लोभः प्रीत्या कथञ्चन ।
नित्यं गम्भीरतोयाभिर् आपगाभिरिवोदधिः ॥ १२

न प्रहृष्यति यो लोभैः कामैश्चैव न तृप्यति ।
यो न देवैर्न गन्धर्वैर् नासुरैर्न महोरगैः ॥ १३

ज्ञायते नृप तत्त्वेन सर्वैर्भूतगणैस्तथा ।
स लोभस्सह मोहेन विजेतव्यो [1]जितात्मना ॥　　१४

दम्भो द्रोहश्च मोहश्च [2]निन्दा पैशुन्यमत्सरे ।
भवन्त्येतानि कौन्तेय लुब्धानामकृतात्मनाम् ॥　　१५

सुमहान्त्यथ शास्त्राणि धारयन्तो बहुश्रुताः ।
भेत्तारस्संशयानां च क्लिश्यन्तीहाल्पबुद्धयः ॥　　१६

द्वेषक्रोधप्रसक्ताश्च शिष्टाचारबहिष्कृताः ।
अन्तःक्षुरा वाङ्मधुराः कूपाश्छन्नास्तृणैरिव ॥　　१७

धर्मवैतंसिकाः क्षुद्रा मुष्णन्ति ध्वजिनो जगत् ।
कुर्वते च बहून् मार्गांस् तान् हेतुबलमाश्रिताः ॥　　१८

सन्मार्गान् विप्रलुम्पन्ति लोभज्ञानेष्वधिष्ठिताः ॥　　१८॥

धर्मस्य ह्रियमाणस्य लोभग्रस्तैर्दुरात्मभिः ।
या या विक्रियते संस्था ततस्साऽपि प्रपद्यते ॥　　१९॥

दर्पः क्रोधो मदस्स्वप्नो हर्षश्शोकोऽविमानिता ।
एतदेव हि कौन्तेय दृश्यन्ते लुब्धबुद्धिषु ॥　　२०॥

एतानरिष्टान् बुध्यस्व नित्यं लोभसमन्वितान् ।
शिष्टांश्च परिपृच्छेथा यान् वक्ष्यामि शुचिव्रतान् ॥　　२१॥

---

1. ख—महात्मना
2. अ—पैशुन्यं मत्सरस्तथा

येष्वावृत्तिभयं नास्ति परलोकभयं न च ।
नामिषेषु च सङ्गोऽस्ति न प्रियेष्वप्रियेषु च ॥ २२॥

शिष्टाचारः प्रियो येषु दमो येषु प्रतिष्ठितः ।
सुखं दुःखं समं येषां सत्यं येषां परायणम् ॥ २३॥

दातारो न ग्रहीतारो दयावन्तस्तथैव च ।
पितृदेवातिथेयाश्च नित्योद्युक्तास्तथैव च ॥ २४॥

सर्वोपकारिणो धीरास् सर्वधर्मानुपालकाः ।
सर्वभूतहिताश्चैव सर्वदेयाश्च भारत ॥ २५॥

न ते चालयितुं शक्या धर्मव्याहारकारिणः ।
न तेषां भिद्यते वृत्तं यत् पुरा साधुभिः कृतम् ॥ २६॥

तत्रासीना अचपला न रौद्रास्सत्पथे स्थिताः ।
ते सेव्यास्साधुभिर्नित्यम् असाधूंश्च विवर्जयेत् ॥ २७॥

कामक्रोधव्यपेता ये निर्ममा निरहङ्कृताः ।
सुवृत्तास्स्थिरमर्यादास् तानुपास्व च पृच्छ च ॥ २८॥

न वागर्थं यशोर्थं वा धर्मस्तेषां युधिष्ठिर ।
अवश्यकार्यमित्येव शरीरस्य क्रिया यथा ॥ २९॥

न भयं क्रोधचापल्यं न शोकस्तेषु विद्यते ।
न धर्मध्वजिनश्चैव न गुह्यं किञ्चिदाश्रिताः ॥ ३०॥

येष्वलोभस्तथाऽमोहो ये च सत्यार्जवे रताः ।

तेषु कौन्तेय रम्येथा येष्वतन्द्री ह्यनुत्तमा ॥ ३१॥

ये न हृष्यन्ति लाभेषु नालाभेषु व्यथन्ति च ।
निर्ममा निरहङ्कारास् सत्त्वस्थास्समदर्शिनः ॥ ३२॥

लाभालाभे सुखदुःखे च तात
प्रियाप्रिये मरणं जीवितं च ।
समानि येषां स्थिरविक्रमाणां
बुद्ध्वात्मनां सत्यपदे स्थितानाम् ॥ ३३॥

सुखप्रियांश्चापि महाप्रतापान्
युक्तोऽप्रमत्तश्च समर्थयेथाः ।
दैवात् सर्वे गुणवन्तो भवन्ति
शुभाशुभा वाक्प्रलापा यथैव ॥ ३४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टात्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
[अस्मिन्नध्याये ३४॥ श्लोकाः]

---

## ॥ एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रत्यज्ञानलक्षणादिप्रतिपादनम् ॥

युधिष्ठिरः—

अनर्थानामधिष्ठानम् उक्तो लोभः पितामह ।
अज्ञानमपि कौरव्य श्रोतुमिच्छामि तत्त्वतः ॥ १

भीष्मः—

करोति पापमज्ञानान्नात्मनो वेत्ति च क्षमम् ।
द्विषते साधुवृत्तांश्च स लोकस्यैति वाच्यताम् ॥ २

अज्ञानान्निरयं याति तथाऽज्ञानेन दुर्गतिम् ।
अज्ञानात् क्लेशमाप्नोति तथाऽऽपत्सु निमज्जति ॥ ३

युधिष्ठिरः—

प्रजानामप्रवृत्तिं च ज्ञानवृद्धिक्षयोदयान् ।
मूलं स्थानं गतिं कालं कारणं हेतुमेव च ॥ ४
श्रोतुमिच्छामि तत्त्वेन यथावदिह पार्थिव ॥ ४॥

भीष्मः—

अज्ञानप्रभवं हीदं यद्दुःखमुपलभ्यते ॥ ५

रागो द्वेषस्तथा मोहो हर्षश्शोकोऽतिमानिता ।
कामः क्रोधश्च दर्पश्च तन्द्री ह्यालस्यमेव च ॥ ६

इच्छा द्वेषस्तथा तापः परवृद्ध्युपतापिता ।
अज्ञानमेतन्निर्दिष्टं पापानां चैव या क्रिया ॥ ७

एतस्य यः प्रवृत्तिं च वृद्ध्यादीन् यांश्च पश्यति ।
विस्तरेण महाराज शृणु तच्च विशां पते ॥ ८
उभावेतौ समफलौ समदोषौ च भारत ।
अज्ञानं चापि लोभश्चाप्येवं जानीष्व [1]पार्थिव ॥ ९

लोभप्रभवमज्ञानं वृद्धेर्भूयः प्रवर्तते ।
स्थाने स्थानं क्षये क्षीणम् उपैति विविधां गतिम् ॥ १०

मूलं लोभोऽस्य हेतुश्च कारणं लोभ एव च ।
तस्याज्ञानस्य लोभो हि कामात्मा गतिरेव च ॥ ११
सर्वे दोषास्तथा लोभात् तस्माल्लोभं विवर्जयेत् ॥ ११॥

जनको युवनाश्वश्च वृषदश्वः प्रसेनजित् ।
लोभक्षयाद्दिवं प्राप्तास् तथैवान्ये जनाधिपाः ॥ १२॥
छिन्ने छिन्ने तथा लोभे दिवं प्राप्ता जनाधिप ॥ १३

प्रत्यक्षं तु नरश्रेष्ठ त्यजेल्लोभमिहात्मनः ।
त्यक्त्वा लोभं सुखी लोके प्रेत्य चेह च मोदते ॥ १४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ १३९ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
[अस्मिन्नध्याये १४ श्लोकाः]

---

1. क-घ—भारत

## ॥ चत्वारिंशदधिकशततमोऽध्यायः ॥

भीष्मेण दमप्रशंसनम् ॥

युधिष्ठिरः—

स्वाध्यायकृतयज्ञस्य ब्राह्मणस्य विशेषतः ।
धर्मकामस्य धर्मात्मन् किं नु श्रेय इहोच्यते ॥ १

बहुधा दर्शने लोके श्रेयो यदिह मन्यसे ।
अस्मिँल्लोके परे चैव तन्मे ब्रूहि पितामह ॥ २

महानयं धर्मपथो बहुशाखश्च भारत ।
किंस्विदेवेह धर्माणाम् अनुष्ठेयतमं मतम् ॥ ३

धर्मस्य महतो राजन् बहुशाखस्य तत्त्वतः ।
यन्मूलं परमं तात तत् सर्वं ब्रूह्यतन्द्रितः ॥ ४

भीष्मः—

तत्तेऽहं सम्प्रवक्ष्यामि येन श्रेयः प्रपत्स्यसे ।
पीत्वाऽमृतमिव प्राज्ञो येन तृप्तो भविष्यसि ॥ ५

धर्मस्य विधयो नैके ते ते प्रोक्ता महर्षिभिः ।
स्वं स्वं विज्ञानमाश्रित्य दमस्तेषां परायणम् ॥ ६

दमं निश्श्रेयसं प्राहुर् वृद्धानामिति दर्शनम् ।
ब्राह्मणस्य विशेषेण दमो धर्मस्सनातनः ॥ ७

नादान्तस्य क्रियासिद्धिः कथञ्चिदुपलभ्यते ।
दमो दानं तथा यज्ञा अधीतं चापि वर्तते ॥ ८

दमस्तेजो वर्धयति पवित्रं च दमः परम् ।
विपाप्मा तेजसा युक्तः पुरुषो विन्दते [1]महत् ॥ ९

दमेन सदृशं धर्मं नान्यं लोकेषु शुश्रुम ।
दमो हि परमो धर्मः प्रशस्तस्सर्वकर्मणाम् ॥ १०

प्रेत्य चापि मनुष्येन्द्र परमं विन्दते सुखम् ।
दमेन हि सदा युक्तो महान्तं धर्ममश्नुते ॥ ११

सुखं ततः प्रस्वपिति सुखं च प्रतिबुध्यते ।
सुखं पश्यति लोकांश्च मनश्चास्य प्रसीदति ॥ १२

अदान्तः पुरुषः क्लेशम् अभीक्ष्णं प्रतिपद्यते ।
अनर्थांश्च बहूनन्यान् प्रसृजत्यात्मदोषजान् ॥ १३

आश्रमेषु चतुर्ष्वाहुर् धर्ममेवोत्तमं दमम् ।
दमलिङ्गानि वक्ष्यामि येषां समुदयो दमः ॥ १४

[2]क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।
इन्द्रियाणां जयो दाक्ष्यं मार्दवं ह्रीरचापलम् ॥ १५

अकार्पण्यमसंरम्भस् सन्तोषः प्रियवादिता ।
अविहिंसाऽनसूया च येषां समुदयो दमः ॥ १६

---

1. घ—फलम्  2. ख—अर्धचतुष्टयं नास्ति

गुरुपूजा च कौरव्य सदा भूतेष्वपैशुनम् ।
जनवादमृषावादस्तुतिनिन्दाविवर्जनम् ॥ १७

कामं क्रोधं च लोभं च दर्पं दम्भं विकत्थनम् ।
मानमीर्ष्यामसूयां च नैतान् दान्तो निषेवते ॥ १८

अनिन्दितो ह्यकामात्मा स्वल्पेच्छश्चाप्यलोलुपः ।
समुद्रकल्पस्स नरो न कदाचिन्न पूर्यते ॥ १९

अहं त्वयि मयि त्वं च मयि ते तेषु चाप्यहम् ।
पूर्वसम्बन्धिसंयोगं नैतद्दान्तो निषेवते ॥ २०

सर्वा ग्राम्यास्तथाऽरण्या याश्च लोके प्रवृत्तयः ।
निन्दां चैव प्रशंसां च यो न सेवेत मुच्यते ॥ २१

मैत्रोऽथ शीलसम्पन्नस् सुसहायपरश्च यः ।
मुक्तश्च विविधैस्सङ्गैस् तस्य प्रेत्य महत् फलम् ॥ २२

सद्वृत्तश्शीलसम्पन्नः प्रसन्नात्माऽऽत्मविद्बुधः ।
प्राप्यैव लोके सत्कारं सुगतिं प्रतिपद्यते ॥ २३

कर्म यच्छुभमेवेह सद्भिराचरितं च यत् ।
तदेव ज्ञानयुक्तस्य मुनेर्वर्त्म न हीयते ॥ २४

निष्क्रम्य वनमास्थाय ज्ञानयुक्तो जितेन्द्रियः ।
कालाकाङ्क्षी चरन्नेवं ब्रह्मभूयाय कल्पते ॥ २५

अभयं सर्वभूतेभ्यो भूतानामभयं कृतम् ।
तस्य देहाद्विमुक्तस्य भयं नास्ति कथञ्चन ॥　　२६

अवाचिनोति कर्माणि न च सम्प्रचिनोति ह ।
ततस्सर्वेषु भूतेषु मैत्रायणगतिं चरेत् ॥　　२७

शकुनीनामिवाकाशे मत्स्यानामिव चोदके ।
यथा गतिर्न दृश्येत तथा तस्य न संशयः ॥　　२८

गृहानुत्सृज्य यो राजन् मोक्षमेवाभिपद्यते ।
लोकास्तेजोमयास्तस्य कल्पन्ते शाश्वतीस्समाः ॥　　२९

संन्यस्य सर्वकर्माणि संन्यस्य विपुलं तपः ।
संन्यस्य विविधा विद्यास् सर्वं संन्यस्य चैव हि ॥　　३०

कामे शुचिरनावृत्तः प्रसन्नात्माऽऽत्मविच्छुचिः ।
प्राप्यैव लोके सत्कारं स्वर्गं समधिगच्छति ॥　　३१

यच्च पैतामहं स्थानं ब्रह्मराशिसमुद्भवम् ।
गुहायां [1]निश्चितं नित्यं तद्दमेनाधिगम्यते ॥　　३२

ज्ञानारामस्य बुद्धस्य सर्वभूतानुरोधिनः ।
नावृत्तिभयमस्तीह परलोकभयं कुतः ॥　　३३

एक एव दमे दोषो द्वितीयो नोपपद्यते ।
यदेनं दमसंयुक्तम् अशक्तं मन्यते जनः ॥　　३४

---

1. ख—निहितं

एतस्य तु महाप्राज्ञ दोषस्स्यात् सुमहान् गुणः ।
क्षमया विपुला लोके दुर्लभा हि सहिष्णुता ॥ ३५

दान्तस्य किमरण्येन तथाऽदान्तस्य भारत ।
यत्रैव निवसेद्दान्तस् तदरण्यं स चाश्रमः ॥ ३६

वैशम्पायनः—

एतद्भीष्मस्य वचनं श्रुत्वा राजा युधिष्ठिरः ।
[1]अमृतेनेव सन्तृप्तः प्रहृष्टस्समपद्यत ॥ ३७

पुनश्च परिपप्रच्छ भीष्मं धर्मभृतां वरम् ।
तपः प्रति स चोवाच तस्मै सर्वं कुरूद्वह ॥ ३८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥
॥ ८७ ॥ आपद्धर्मपर्वणि विंशोऽध्यायः ॥ २० ॥
[ अस्मिन्नध्याये ३८ श्लोकाः ]

---

## ॥ एकचत्वारिंशदधिकशततमोऽध्यायः ॥

भीष्मेण तपोनिरूपणम् ॥

भीष्मः—

सर्वमेतत्तपोमूलं मुनयस्सम्प्रचक्षते ।
नानुतप्ततपा मूढः क्रियाफलमुपेयिवान् ॥ १

प्रजापतिरिदं सर्वं तपसैवासृजत् प्रभुः ।
तथैव देवा ऋषयस् तपसा प्रतिपेदिरे ॥ २

तपसो ह्यानुपूर्व्येण फलमूलानिलाशनाः ।
त्रीँल्लोकांस्तपसा सिद्धाः पश्यन्ति सुसमाहिताः ॥ ३

औषधान्यगदादीनि तिस्रो विद्याश्च संस्कृताः ।
तपसैव हि सिद्ध्यन्ते तपोमूलं च साधनम् ॥ ४

यद्दुरापं दुरानाय्यं दुराधर्षं दुरुत्सहम् ।
तत् सर्वं तपसा शक्यं तपो हि दुरतिक्रमम् ॥ ५

सुरापोऽसम्मतादायी भ्रूणहा गुरुतल्पगः ।
तपसैव सुतप्तेन नरः पापात् प्रमुच्यते ॥ ६

तपसो बहुरूपस्य तैस्तैर्द्वारैः प्रवर्ततः ।
निवृत्त्या वर्तमानस्य तपो नानशनात् परम् ॥ ७

[1]अहिंसा सत्यवचनं दानमिन्द्रियनिग्रहः ।
एतेभ्यो हि महाराज तपो नानशनात् परम् ॥ ८

न दुष्करतरं दानान्नातिदातारमाश्रमः ।
त्रैविद्येभ्यः परं नास्ति संन्यासान्नापरं तपः ॥ ९

इन्द्रियाणीह रक्षन्ति विप्रर्षिपितृदेवताः ।
तस्मादर्थे च धर्मे च तपो नानशनात् परम् ॥ १०

ऋषयः पितरो देवा मानुषाः पशुपक्षिणः ।
यानि चान्यानि भूतानि स्थावराणि चराणि च ॥ ११

तपःपरायणास्सर्वे सिध्यन्ति तपसा च ते ।
इत्येवं तपसा देवा महत्त्वं चाप्यवाप्नुवन् ॥ १२

एवमिष्टविभागानि फलानि तपसा सदा ।
तपसा शक्यते प्राप्तुं देवत्वमिति निश्चयः ॥ १३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
[ अस्मिन्नध्याये १३ श्लोकाः ]

---

1. ख—षडर्धानि न सन्ति

## ।। द्विचत्वारिंशदधिकशततमोऽध्यायः ।।

भीष्मेण सत्यप्रशंसनम् ॥

युधिष्ठिरः—

सत्यं सर्वे प्रशंसन्ति विप्रर्षिपितृदेवताः ।
सत्यमिच्छाम्यहं ज्ञातुं तन्मे ब्रूहि पितामह ।।　　१

सत्यं किं लक्षणं राजन् कथं वा तदवाप्यते ।
सत्यं चापि भवेत् किं स्वित् कथं चैव तदुच्यताम् ।।　　२

भीष्मः—

चातुर्वर्ण्यस्य धर्माणां सङ्करो न प्रशस्यते ।
धर्मस्साधारणस्सत्यं सर्ववर्णेषु भारत ।।　　३

सत्यं सत्सु सदा धर्मस् सत्यं धर्मस्सनातनः ।
सत्यमेव नमस्येत सत्यं हि परमा गतिः ।।　　४

सत्यं मोक्षतपोयोगस् सत्यं ब्रह्म सनातनम् ।
सत्यं यज्ञः परः प्रोक्तस् सत्ये [1]धर्मे प्रतिष्ठितम् ।।　　५

रूपं यदिह सत्यस्य यथावदनुपूर्वशः ।
लक्षणं च प्रवक्ष्यामि सत्यस्येह पराक्रमम् ।।　　६

प्राप्यते च यथा सत्यं तच्च वेत्तुं त्वमर्हसि ।।　　६।।

1. ख—सर्वं

सत्यं त्रयोदशविधं सर्वलोकेषु भारत ।
सत्यं च समता चैव दमश्चैव न संशयः ॥ ७॥

अमात्सर्यं क्षमा चैव ह्रीस्तितिक्षाऽनसूयता ।
त्यागो ध्यानमथार्यत्वं धृतिश्च सततं स्थिरा ॥ ८॥

अहिंसा चैव राजेन्द्र सत्याकारास्त्रयोदश ॥ ९

सत्यं नामाऽव्ययं नित्यम् अविकारि तथैव च ।
सर्वधर्माविरुद्धं च योगेनैव तदाप्यते ॥ १०

आत्मनीष्टे तथाऽनिष्टे रिपौ च समता तु या ।
इच्छाद्वेषक्षये प्राप्य कामक्रोधक्षये च सा ॥ ११

दमो नामास्पृहा नित्यं धैर्यं गाम्भीर्यमेव च ।
अशाठ्यं क्रोधदमनं ज्ञानेनैतदवाप्यते ॥ १२

अमात्सर्यं बुधाः प्राहुर् दाने धर्मे च संयमः ।
अवस्थितेन नित्यं च सत्येनामत्सरी भवेत् ॥ १३

अक्षमायाः क्षमायाश्च प्रियाणि ह्यप्रियाणि च ।
क्षमते सर्वतस्साधुस् ततः प्राप्नोति सत्यताम् ॥ १४

कल्याणं कुरुते नित्यं ह्रीमान् न श्राम्यते क्वचित् ।
प्रशान्तवाङ्मना नित्यं ह्रीस्तु धर्मादवाप्यते ॥ १५

[1]धर्मार्थहेतोः क्षमते तितिक्षा धर्म उत्तमः ।

1. ब—अर्धसयं नास्ति

लोकसङ्ग्रहणार्थं वै [1]सा तु धैर्येण लभ्यते ॥ १६
अनसूया तु गाम्भीर्यं दानेनैतदवाप्यते ॥ १६॥

त्यक्तस्नेहस्य यस्त्यागो विषयाणां तथैव च ।
रागद्वेषप्रहीणस्य त्यागो भवति नान्यथा ॥ १७॥

ध्यानं च शाठ्यमित्युक्तं मौनेनैतदवाप्यते ॥ १८

आर्यता नाम भूतानां यः करोति प्रयत्नतः ।
शुभं कर्म निराकारो वीतरागत्वमेव च ॥ १९

धृतिर्नाम सुखे दुःखे यया नाप्नोति विक्रियाम् ।
तां भजेत सदा प्राज्ञो य इच्छेद्भूतिमात्मनः ॥ २०

सर्वथा क्षमिणा भाव्यं तथा सत्यपरेण च ।
वीतहर्षभयक्रोधो धृतिमाप्नोति पण्डितः ॥ २१

अद्रोहस्सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च सतां धर्मस्सनातनः ॥ २२

सर्वदाऽहिंसता भाव्यं तथा सत्यपरेण च ।
वीतहर्षभयक्रोधस् तदवाप्नोति पण्डितः ॥ २३

एते त्रयोदशाकाराः पृथक् सत्यैकलक्षणाः ।
भजन्ते सत्यमेवेह बृंहयन्ति च भारत ॥ २४

नान्तश्शक्यो गुणानां हि वक्तुं सत्यस्य पार्थिव ।

---

1. क-ख—साधु

अतस्सत्यं प्रशंसन्ति विप्रास्सपितृदेवताः ॥ २५

नास्ति सत्यात् परो धर्मो नानृतात् पातकं परम् ।
[1]धृतिर्हि सत्यं धर्मस्य तस्मात् सत्यं न लोपयेत् ॥ २६

उपैति सत्याद्दानं वै तथा यज्ञान् सदक्षिणान् ।
त्रेताग्निहोत्रं वेदाश्च ये चान्ये धर्मनिश्चयाः ॥ २७

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
[अस्मिन्नध्याये २८ श्लोकाः]

---

## ॥ त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति लोभादिनिरूपणम् ॥ १ ॥ भीष्मेण युधिष्ठिरं प्रति नृशंसलक्षणादिकथनम् ॥ २ ॥

---

युधिष्ठिरः—

यतः प्रभवति क्रोधः कामो वा भरतर्षभ ।
शोकमोहौ विवित्सा च परासुत्वं तथा मदः ॥ १

[2]द्रोहो मात्सर्यमीर्ष्या च कुत्सासूयाकृपास्तथा ।

---

1. ख—स्थिति 2. ख—लोभो

एतत् सर्वं महाप्राज्ञ याथातथ्येन मे वद ॥　　२

भीष्मः—

उपासते महाराज समन्तात् पुरुषांस्त्विह ।
त्रयोदशैतेऽतिबलाश् शत्रवः प्राणिनां स्मृताः ॥　　३

एते प्रमत्तं पुरुषम् अप्रमत्तास्तुदन्ति च ।
वृका इव विलुम्पन्ति दृष्ट्वैव पुरुषेतरान् ॥　　४

एभ्यः प्रवर्तते दुःखम् एभ्यः पापं प्रवर्तते ।
इति मर्त्यो विजानीयात् सततं भरतर्षभ ॥　　५

एतेषामुदयं स्थानं क्षयं च पुरुषोत्तम ।
हन्त ते वर्तयिष्यामि क्षयं चोत्पत्तिमादितः ॥　　६

यथातत्त्वं क्षितिपते तन्मे निगदतश्शृणु ॥　　६॥

लोभात् क्रोधः प्रभवति परदोषैरुदीर्यते ।
क्षमया तिष्ठते राजन् क्षमया विनिवर्तते ॥　　७॥

सङ्कल्पाज्जायते कामस् सेव्यमानो विवर्धते ।
अवद्यदर्शनाद्व्येति तत्त्वज्ञानाच्च नश्यति ॥　　८॥

प्रीतेश्शोकः प्रभवति वियोगात्तस्य देहिनः ।
यदा निरर्थकं वेत्ति तदा [1]सद्यः प्रणश्यति ॥　　९॥

अज्ञानप्रभवो मोहः [2]पापाभ्यासात् प्रवर्तते ।

---

1. ख—तस्य　　2. ब—मोहात्पापं

विरुद्धानीह शास्त्राणि पश्यन्तीहाल्पबुद्धयः ॥ १०॥

विवित्सा जायते तत्र तत्त्वात् सा विनिवर्तते ।
यदा प्राज्ञेषु रमते तदा सम्यक् प्रणश्यति ॥ ११॥

परासुता क्रोधलोभाद् अभ्यासाच्च प्रवर्तते ।
[1]दयया सर्वभूतेषु निर्वेदात् सा निवर्तते ॥ १२॥

सत्यत्यागात्तु मात्सर्यम् अहितानि च मे शृणु ।
एतत्तु क्षीयते तात साधूनामुपसेवनात् ॥ १३॥

[2]कुलाज्ज्ञानात् तथैश्वर्याद् द्रोहो भवति देहिनाम् ।
एतैरेव सदा ज्ञातैर् मदस्सद्यः प्रणश्यति ॥ १४॥

ईर्ष्या कामात् प्रभवति सङ्घर्षाच्चैव भारत ।
इतरेषां तु मर्त्यानां ज्ञानात् प्राज्ञस्य नश्यति ॥ १५॥

विभ्रमाल्लोकबाह्यानां वेषैर्वाक्यैरसङ्गतैः ।
कुत्सा सञ्जायते राजन्नुपेक्षाभिः प्रशाम्यति ॥ १६॥

प्रतिकर्तुमशक्याय बलस्थायापकारिणे ।
असूया जायते तीव्रा कारुण्याद्विनिवर्तते ॥ १७॥

कृपणान् सततं दृष्ट्वा ततस्सञ्जायते कृपा ।
धर्मनिष्ठां यदा वेत्ति तदा शाम्यति सा कृपा ॥ १८॥

एतान्येव जितान्याहुः प्रशान्तेन त्रयोदश ॥ १९

---

1. ख-घ—अयथा 2. ख—अर्धद्वयं नास्ति

एते हि धार्तराष्ट्राणां सर्वे दोषास्त्रयोदश ।
त्वया सत्यात्मना नित्यं विजिता जेष्यता च ते ॥　　२०

युधिष्ठिरः—

आनृशंस्यं विजानामि दर्शनेन सतां सदा ।
नृशंसान् न विजानामि तेषां कर्म च भारत ॥　　२१

[1]कण्टकान् कूपमग्निं च वर्जयन्ति यथा नराः ।
तथा नृशंसकर्माणं वर्जयन्ति नरा नरम् ॥　　२२

नृशंसो दह्यते व्यक्तं प्रेत्य चेह च भारत ।
तस्मात् प्रब्रूहि कौरव्य तस्य धर्मविनिश्चयम् ॥　　२३

भीष्मः—

स्पृहाऽस्यान्तर्गता चैव विदितार्था च कर्मणा ।
आक्रोष्टा क्रुश्यते चैव बन्धिता बध्यते स च ॥　　२४

दत्तानुकीर्तिर्विषमः क्षुद्रो नैकृतिकश्शठः ।
असम्भोगी च मानी च तथा सङ्गी विकत्थनः ॥　　२५

सर्वातिशङ्की पुरुषो बालिशः कृपणस्तथा ।
वर्गप्रशंसी सततम् आश्रमद्वेषसङ्करी ॥　　२६

हिंसाविकारी सततम् अविशेषगुणागुणः ।
बह्वलीको मनस्वी च लुब्धोऽत्यर्थं नृशंसकृत् ॥　　२७

---

1. अ-क-घ—अर्धत्रयं नास्ति

धर्मशीलं गुणोपेतं पाप इत्यवगच्छति ।
आत्मशीलोपमानेन न विश्वसिति कस्यचित् ॥ २८

परेषां यत्र दोषस्स्यात् तद्गुह्यं सम्प्रकाशयेत् ।
समानेष्वपि दोषेषु वृत्त्यर्थमुपघातयेत् ॥ २९

तथोपकारिणं चैव मन्यते वञ्चितं परम् ।
दत्त्वाऽपि च धनं काले सन्तपत्युपकारिणे ॥ ३०

भक्ष्यं पेयमथो लेह्यं यदन्यत् साधु भोजनम् ।
प्रेक्षमाणेषु योऽश्नीयान्नृशंस इति तं विदुः ॥ ३१

ब्राह्मणेभ्यः [1]प्रदायाग्रे यस्सुहृद्भिस्सहाश्नुते ।
स प्रेत्य लभते स्वर्गम् इह चात्यन्तमश्नुते ॥ ३२

एवं ते भरतश्रेष्ठ नृशंसाः परिकीर्तिताः ।
सदा विवर्जनीया वै पुरुषेण बुभूषता ॥ ३३

**इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥**
**॥ ८७ ॥ आपद्धर्मपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥**
**[ अस्मिन्नध्याये ३३ श्लोकाः ]**

---

1. ख—प्रदायाग्रं

## ॥ चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति यज्ञाद्यर्थं सम्पादनीयद्रव्यविवेचनम् ॥ १ ॥ तथा पापविशेषाणां प्रायश्चित्तविशेषकथनम् ॥ २ ॥

---

भीष्मः—

कृतार्थो यक्ष्यमाणश्च सर्ववेदान्तगश्च यः ।
आचार्यपितृभार्यार्थं स्वाध्यायार्थमथापि वा ॥ १

एते वै साधवो दृष्टा ब्राह्मणा धर्मभिक्षवः ।
अस्वेभ्यो देयमेतेभ्यो दानं विद्या च भारत ॥ २

अन्यत्र दक्षिणायाश्च देयं भरतसत्तम ।
अन्येभ्योऽपि बहिर्वेदि [1]नाकृतान्नं विधीयते ॥ ३

सर्वरत्नानि राजेन्द्र यथार्हं प्रतिपादयेत् ।
ब्राह्मणायैव यज्ञाश्च सहान्नास्सहदक्षिणाः ॥ ४

यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये ।
अधिकं चापि विद्येत स सोमं पातुमर्हति ॥ ५

यज्ञश्चेत् प्रतिबद्धस्स्याद् अंशेनैकेन यज्वनः ।
ब्राह्मणस्य विशेषेण धार्मिके सति राजनि ॥ ६

यो वैश्यस्स्याद्बहुपशुर् हीनक्रतुरसोमपः ।

---

1. ख—न कृतान्नं घ—न कृतान्न

कुटुम्बात्तस्य तद्द्रव्यं यज्ञार्थं पार्थिवो हरेत् ॥ ७

आहरेद्यतः किञ्चित् कामं शूद्रस्य वेश्मनि ।
न हि वेश्मनि शूद्रस्य [1]कश्चिदस्ति परिग्रहः ॥ ८

योऽनाहिताग्निश्शतगुर् अयज्वा च सहस्रगुः ।
तयोरपि कुटुम्बाभ्याम् आहरेदविचारयन् ॥ ९

अदातृभ्यो हरेन्नित्यं विख्याप्य नृपतिस्सदा ।
तथा ह्याचरतो धर्मो नृपतेस्स्यादथाखिलः ॥ १०

तथैव सप्तमे भक्ते भक्तानि षडनश्नतः ।
अश्वस्तनविभागेन हर्तव्यं हीनकर्मणः ॥ ११

खलात् क्षेत्रादथागाराद् यतो वाऽप्युपपद्यते ।
आख्यातव्यं तु तस्यैतत् [2]पुरतः पृष्ठतोऽपि वा ॥ १२

न तस्मै धारयेद्दण्डं राजा धर्मेण धर्मवित् ॥ १२॥

क्षत्रियस्य तु बालिश्याद् ब्राह्मणः क्लिश्यते क्षुधा ।
श्रुतशीले समाज्ञाय वृत्तिमस्य प्रकल्पयेत् ॥ १३॥

अथैनं परिरक्षेत पिता पुत्रमिवौरसम् ॥ १४

इष्टिं वैश्वानरीं नित्यं निर्वपेद्ब्दपर्यये ।
अविकल्पः पुरा धर्मो धर्मपालैस्तु केवलः ॥ १५

---

1. घ—किञ्चिदस्ति 2. ख—परतः पृच्छतोऽपि वा

विश्वैश्च देवैस्साध्यैश्च ब्राह्मणैश्च महर्षिभिः ।
आपत्सु मरणाद्भीतैर् लिङ्गः प्रतिनिधिः कृतः ॥ १६

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
स नाप्नोति फलं तस्य प्रेत्य चेह च दुर्मतिः ॥ १७

न ब्राह्मणो वेदयीत किञ्चिद् राजनि धर्मवित् ।
अविद्यो वेदनाद्विद्यात् स्ववीर्यं वीर्यवत्तरम् ॥ १८

तस्माद्राज्ञस्सदा तेजो दुस्सहं ब्रह्मवादिनाम् ॥ १८॥

मन्ता शास्ता विधाता च ब्राह्मणो[1]वेद उच्यते ।
तस्मिन् नाकुशलं ब्रूयान्न शुष्कां गिरमीरयेत् ॥ १९॥

क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः ।
धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजातयः ॥ २०॥

नैव कन्या न युवतिर् नामन्त्रज्ञो न बालिशः ।
परिवेष्टाऽग्निहोत्रस्य भवेन्नासंस्कृतस्तथा ॥ २१॥

नरके निपतन्त्येते जुह्वानास्सवनस्य तत् ।
प्राजापत्यमदत्त्वा च अग्न्याधेयस्य दक्षिणाम् ॥ २२॥

अनाहिताग्निरिति स प्रोच्यते धर्मदर्शिभिः ॥ २३

पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः ।
अनाप्तदक्षिणैर्यज्ञैर् न यजेत कथञ्चन ॥ २४

---

1. अ—देव

प्रजाः पशूंश्च स्वर्गं च हन्ति यज्ञो ह्यदक्षिणः ।
इन्द्रियाणि यशः कीर्तिम् आयुश्चैव निकृन्तति ॥ २५

उदक्यया॓ऽऽसते ये च द्विजाः केचिदनग्नयः ।
कुलं चाश्रोत्रियं येषां सर्वे ते शूद्रकर्मिणः ॥ २६

उदपानोदके ग्रामे ब्राह्मणो वृषलीपतिः ।
उषित्वा द्वादश समाश् शौद्रं कर्मैव गच्छति ॥ २७

अनार्यां शयने बिभ्र[1]न्नोद्यन् वृद्धिं च वै द्विजः ।
अब्राह्मणं मन्यमानस् तृणेष्वासीत पृष्ठतः ॥ २८

यथा संशुध्यते राजञ् शृणु चात्र वचो मम ॥ २८॥

यदेकरात्रेण करोति पापं
कृष्णं वर्णं ब्राह्मणस्सेवमानः ।
स्थानासनाभ्यां विहरन् व्रती स
त्रिभिर्वर्षैश्शमयेदात्मपापम् ॥ २९॥

न नर्मयुक्तमनृतं हिनस्ति
न स्त्रीषु राजन्न विवाहकाले ।
प्राणात्यये सर्वधनापहारे
पञ्चानृतान्याहुरपातकानि ॥ ३०॥

श्रद्दधानश्शुभां विद्यां हीनादपि समाचरेत् । ३१

1. ख—न्नाद्यन्

सुवर्णमपि चामेध्याद् आददीतेति धारणा ॥ ३१॥

स्त्रीरत्नं दुष्कुलाच्चापि विषादप्यमृतं पिबेत् ।
अदुष्टानि स्त्रियो रत्नम् आप इत्येव धर्मतः ॥ ३२॥

गोब्राह्मणहितार्थे च वर्णानां सङ्करेषु च ।
वैश्यो गृह्णीत शस्त्राणि परित्राणाय चात्मनः ॥ ३३॥

सुरापो ब्रह्महा चैव गुरुतल्पगतस्तथा ।
अचिरेण महाराज पतिता वै भवन्त्युत ॥ ३४॥

सुवर्णहरणं स्तैन्यं विप्राणां चेति पातकम् ।
विहारो मद्यपानं चाप्यगम्यागमने तथा ॥ ३५॥

पतितैस्सम्प्रयोगश्च ब्राह्मणो योनितस्तथा ।
अनिर्देश्यानि मन्यन्ते प्राणान्तानीति धारणा ॥ ३६॥

संवत्सरेण पतति पतितेन समाचरन् ।
याजनाध्यापनाद्दानान्न तु यानासनाशनात् ॥ ३७॥

एतानि च ततोऽन्यानि निर्देश्यानीति धारणा ।
निर्देश्यकेन विधिना कालेनाव्यसनी भवेत् ॥ ३८॥

अनुत्तीर्य न होतव्यं प्रेतकर्मण्युपाश्रिते ।
त्रिष्वप्येतेषु पूर्वेषु न कुर्वीत विचारणाम् ॥ ३९॥

अमात्यान् वा गुरून् वाऽपि जह्याद्धर्मेण धार्मिकः ।

प्रायश्चित्तान्यकुर्वाणा नैते कुर्वन्ति संविदम् ॥ ४०॥

अधर्मकारी धर्मेण तपसा हन्ति किल्बिषम् ।
ब्रुवन् स्तेन इति स्तेनं तावत् प्राप्नोति किल्बिषम् ॥ ४१॥

अस्तेनं स्तेन इत्युक्त्वा द्विगुणं पापमश्नुते ।
त्रिभागं ब्रह्महत्यायाः कन्यां प्राप्नोति दूषिता ॥ ४२॥

यस्तु दूषयिता तस्याश् शेषं प्राप्नोति किल्बिषम् ॥ ४३

ब्राह्मणायापगुर्यैत स्पृष्टे गुरुतरं भवेत् ।
वर्षाणां हि शतं पापं प्रतिष्ठां नाधिगच्छति ॥ ४४

सहस्रं चैव वर्षाणां निपात्य नरके वसेत् ।
तस्मान्नैवापगुर्याद्धि नैव जातु निपातयेत् ॥ ४५

शोणितं यावतः पांसून् सङ्गृह्णाति द्विजसत्तमात् ।
तावतीस्स समा राजन् नरके परिवर्तते ॥ ४६

भ्रूणहाऽऽहवमध्ये तु वध्यते शस्त्रपातितः ।
आत्मानं जुहुयादग्नौ समिद्धे तेन शुध्यति ॥ ४७

सुरापो वारुणीमुष्णां पीत्वा पापात् प्रमुच्यते ।
तथा स काये निर्दग्धे मृत्युना प्रेत्य शुध्यति ॥ ४८

[1]लोकांश्च लभते विप्रो नान्यथा लभते हि सः ॥ ४८॥

गुरुतल्पमधिष्ठाय दुरात्मा पापचेतनः ।

---

1. अ—अर्धश्लोकं नास्ति

शिलां ज्वलन्तीमासाद्य मृत्युना स विशुद्ध्यति ॥ ४९॥

अथ वा शिश्नवृषणावादायाञ्जलिना स्वयम् ।
नैर्ऋतीं दिशमास्थाय निपतेत् स त्वजिह्मगः ॥ ५०॥

ब्राह्मणार्थेऽपि वा प्राणान् सन्त्यजंस्तेन शुध्यति ॥ ५१

अश्वमेधेन वाऽपीष्ट्वा गोसवेनाथ वा पुनः ।
मरुत्सोमेन वा सम्यग् इह प्रेत्य च पूयते ॥ ५२

तथैव द्वादशसमाः कापोतं धर्ममाचरेत् ।
एककालं चरेद्भैक्षं स्वकर्मोदाहरेज्जने ॥ ५३

एवं च तपसा युक्तो ब्रह्महा सवनी भवेत् ।
एवं गर्भमविज्ञातम् आत्रेयीं वा निपातयेत् ॥ ५४

द्विगुणा ब्रह्महत्या वै आत्रेयीं हिंसतो भवेत् ।
सुरापो नियताहारो ब्रह्मचारी क्षपाचरः ॥ ५५

ऊर्ध्वं त्रिभ्योऽथ वर्षेभ्यो यजेताग्निष्टुता परम् ।
ऋषभैकसहस्रं वा गा दत्त्वा शुद्धिमाप्नुयात् ॥ ५६

वैश्यं हत्वा तु वर्षे द्वे ऋषभैकशताश्च गाः ।
शूद्रं हत्वाऽब्दमेवैकम् ऋषभैकादशाश्च गाः ॥ ५७

श्वमार्जारखरान् हत्वा शूद्रहत्या व्रतं चरेत् ॥ ५७॥

मण्डूकचाषनकुलान् काकोलूकांश्च मूषिकान् ।

उक्तः पशुवधे दोषो राजन् प्राणिनिपातनात् ॥ ५८॥
अनस्थिकेषु गोमूत्रं प्राणमेकं प्रचक्षते ॥ ५९

प्रायश्चित्तान्यथान्यानि प्रवक्ष्याम्यनुपूर्वशः ॥ ५९॥

तल्पे चाप्यन्नचौर्ये च पृथक् संवत्सरं चरेत् ।
त्रीणि श्रोत्रियभार्यायां परदारे तु द्वे स्मृते ॥ ६०॥

काले चतुर्थे भुञ्जानो ब्रह्मचारी व्रती भवेत् ।
स्थानासनाभ्यां विहरेत् त्रिरह्णाऽभ्युपयन्नपः ॥ ६१॥
एवमेव चरन् राजंस् तस्मात् पापात् प्रमुच्यते ॥ ६२

त्यजत्यकारणं यश्च पितरं मातरं च ह ।
पतितस्स्यात् स कौरव्य यथा धर्मेषु निश्चयः ॥ ६३

ग्रासाच्छादनयानं च शयनं ह्यासनं तथा ।
ब्रह्मचारी द्विजेभ्यश्च दत्त्वा पापात् प्रमुच्यते ॥ ६४

भार्यायां व्यभिचारिण्यां निरुद्धायां विशेषतः ।
यत् पुंसां परदारेषु तदेनां चारयेद्व्रतम् ॥ ६५

श्रेयांसं शयने हित्वा पापीयांसं समृच्छति ।
श्वभिस्तमर्दयेद्राजा [1]सुस्थाने बहुसंस्थिते ॥ ६६

पुमांसं बन्धयेत् पाशैश् शयने तप्त आयसे ।
आस्ये दद्यात् स दारूणि तत्र दह्येत् स पापकृत् ॥ ६७

---

1. स्व—सं

एष दण्डो महाराज स्त्रीणां भर्तृव्यतिक्रमे ।
संवत्सरोऽभिशस्तस्य दुष्टस्य द्विगुणो भवेत् ॥　　६८

[1]तस्य त्रीणि च वर्षाणि चत्वारि सहसेविनः ।
कुमारः पञ्चवर्षाणि चरेद्भैक्षं मुनिव्रतः ॥　　६९

परिवित्तिः परीवेत्ता या चैव परिविद्यते ।
पाणिग्राहश्च धर्मेण सर्वे ते पतितास्त्रियः ॥　　७०

चरेयुस्सर्व एवैते वीरहा यद्व्रतं चरेत् ।
चान्द्रायणं चरेन्मासं कृच्छ्रं वा पापशुद्धये ॥　　७१

परिवेत्ता प्रयच्छेत परिवित्ताय तां स्नुषाम् ।
ज्येष्ठेन त्वभ्यनुज्ञातो यवीयान् प्रत्यनन्तरम् ॥　　७२

एनसो मोक्षमाप्नोति तौ च सा चैव धर्मतः ॥　　७२॥

अमानुषीषु गोवर्जम् अनादिष्टं न दुष्यति ।
अधिष्ठातारं मन्तारं पशूनां पुरुषं विदुः ॥　　७३॥

परिधायोर्ध्ववालं च पात्रमादाय मृन्मयम् ।
चरेत् सप्तगृहान् भैक्षं स्वकर्म परिकीर्तयन् ॥　　७४॥

तथैव लब्धभोजी स्याद् द्वादशाहात् स शुध्यति ।
चरेत् संवत्सरं चापि [2]तद्वृत्तं यश्चिराकृतिः ॥　　७५॥

भवेत्तु मानुषीष्वेवं प्रायश्चित्तमनुत्तमम् ॥　　७६

---

1. ख—ह्रे तस्य त्रीणि　　2. ख—तद्व्रतं

दानं वा दानसक्तेषु सर्वमेव प्रकल्पयेत् ॥ ७६॥

वराहस्य मृगाणां च कुक्कुटस्य खरस्य च ।
मांसं मूत्रं पुरीषं वा प्राश्य संस्कारमर्हति ॥ ७७॥

ब्राह्मणस्तु सुरापस्य गन्धमाघ्राय सोमपाः ।
अपस्त्र्यहं पिबेदुष्णास् संयतात्मा जितेन्द्रियः ॥ ७८॥

अपः पीत्वा तु स पुनर् वायुभक्षो भवेत् त्र्यहम् ॥ ७९

एवमेतत् समुद्दिष्टं प्रायश्चित्तनिषेवणम् ।
ब्राह्मणस्य विशेषेण यदज्ञानेन जायते ॥ ८०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
[ अस्मिन्नध्याये ८० श्लोकाः ]

---

## ॥ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥

भीष्मेण नकुलप्रश्नात् खड्गोत्पत्तिकथनम् ॥

---

वैशम्पायनः—

कथान्तरमथासाद्य खड्गयुद्धविशारदः ।
नकुलश्शरतल्पस्थम् इदमाह पितामहम् ॥ १

नकुलः—

धनुः प्रहरणं श्रेष्ठम् इति वादः पितामह ।
मतस्तु मम धर्मज्ञ खड्ग एव सुसंशितः ॥ २

छिन्ने च कार्मुके राजन् प्रक्षीणेषु शरेषु च ।
खड्गेन शक्यते योद्धुम् आत्मानं परिरक्षितुम् ॥ ३

शरासनधरां चैव गदाशक्तिधरांस्तदा ।
एकः खड्गधरो धीरस् समर्थः प्रतियोधितुम् ॥ ४

अत्र मे संशयश्चैव कौतूहलमतीव च ।
किंस्वित् प्रहरणं श्रेष्ठं सर्वयुद्धेषु पार्थिव ॥ ५

कथं चोत्पादितः खड्गः कस्मै चार्थाय केन वा ।
पूर्वाचार्यं च खड्गस्य प्रब्रवीहि पितामह ॥ ६

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा माद्रीपुत्रस्य धीमतः ।
स्वरकौशलसंयुक्तं सूक्ष्मचित्रार्थवत् सुखम् ॥ ७

ततस्तस्योत्तरं वाक्यं स्वरवर्णोपपादितम् ।
शिक्षाधर्मोपपन्नं च [1]द्रोणशिष्याय पृच्छते ॥ ८

उवाच सर्वधर्मज्ञो धनुर्वेदस्य पारगः ।
शरतल्पगतो भीष्मो नकुलाय महात्मने ॥ ९

---

1. ब—द्रौणिशिष्याय

भीष्मः—

तत्त्वं शृणुष्व माद्रेय यथैतत् परिपृच्छसि ।
प्रबोधितोऽस्मि भवता सानुमानिव पर्वतः ॥ १०

सलिलैकार्णवं तात पुरा सर्वमभूदिदम् ।
अप्रज्ञातमनाकाशम् अनिर्देश्यमहीतलम् ॥ ११

तमस्संवृतमस्पर्शम् अतिगम्भीरदर्शनम् ।
निश्शब्दं चाप्रमेयं च तत्र जज्ञे पितामहः ॥ १२

सोऽसृजद्वायुमग्निं च भास्करं चापि वीर्यवान् ।
आकाशमसृजच्चोर्ध्वम् अधो भूमिं च [1]नैर्ऋतिम् ॥ १३

ततस्सचन्द्रतारं च नक्षत्राणि ग्रहांस्तथा ।
संवत्सरानहोरात्रान् ऋतूनथ लवान् क्षणान् ॥ १४

ततश्शरीरं लोकस्थं स्थापयित्वा पितामहः ।
जनयामास भगवान् पुत्रानुत्तमतेजसः ॥ १५

मरीचिं भृगुमत्रिं च पुलस्त्यं पुलहं ऋतुम् ।
वसिष्ठाङ्गिरसौ चोभौ भरद्वाजं तथैव च ॥ १६

प्रजापतिस्तथा दक्षः कन्याष्षष्टिमजीजनत् ।
ताश्च ब्रह्मऋषीन् सर्वान् प्रजार्थं प्रतिपेदिरे ॥ १७

ताभ्यो विश्वानि भूतानि देवाः पितृगणास्तथा ।

---

1. ख—नैर्ऋतम्

गन्धर्वाप्सरसश्चैव रक्षांसि विविधानि च ॥　१८

पतत्रिमृगमीनाश्च गावश्चैव महोरगाः ।
नानाकृतिबलाश्चान्ये जलक्षितिविचारिणः ॥　१९

उद्भिज्जास्स्वेदजाश्चैव साण्डजाश्च जरायुजाः ।
जज्ञे तात जगत् सर्वं ततस्स्थावरजङ्गमम् ॥　२०

ततस्सर्गमिमं कृत्वा सर्वलोकपितामहः ।
शाश्वतं वेदपठितं धर्मं च जुजुषे पुनः ॥　२१

तस्मिन् धर्मे स्थिता देवास् सहाचार्यपुरोहिताः ।
आदित्या वसवो रुद्रास् ससाध्या मरुदश्विनः ॥　२२

भृग्वत्र्यङ्गिरसस्सिद्धाः काश्यपश्च तपोधनः ।
वसिष्ठगौतमागस्त्यास् तथा नारदपर्वतौ ॥　२३

ऋषयो वालखिल्याश्च प्रभासास्सिकतास्तथा ।
घृताच्यास्सौम्य वायव्या वैखानसमरीचिपाः ॥　२४

करूषाश्चैव हंसाश्च ऋषयोऽथाग्नियोनिजाः ।
माषप्रस्थाः पृश्नयश्च स्थिता ब्रह्मानुशासने ॥　२५

दानवेन्द्रास्त्वतिक्रम्य तत् पितामहशासनम् ।
धर्मस्यापनयं चक्रुः क्रोधलोभसमन्विताः ॥　२६

हिरण्यकशिपुश्चैव हिरण्याक्षो विरोचनः ।
शम्बरो विप्रचित्तिश्च प्रह्लादो नमुचिर्बलिः ॥　२७

एते चान्ये च बहवस् सगणा दैत्यदानवाः ।
धर्मसेतुमतिक्रम्य रेमिरेऽधर्मनिश्चयाः ॥ २८

सर्वे स्म तुल्यजातीया यथा देवास्तथा वयम् ।
इत्येवं हेतुमास्थाय स्पर्धमाना महर्षिभिः ॥ २९

न प्रियं नाप्यनुक्रोशं चक्रुर्भूतेषु भारत ।
त्रीनुपायानतिक्रम्य दण्डेन रुरुधुः प्रजाः ॥ ३०

न जग्मुस्संविदं तैश्च दर्पयुक्ता महासुराः ॥ ३०॥

अथ वै भगवान् ब्रह्मा सर्वलोकनमस्कृतः ।
ततो हिमवतः पृष्ठे सुरम्ये पद्मतारके ॥ ३१॥

शतयोजनविस्तारे मणिमुक्ताचयान्विते ।
तस्मिन् गिरिवरे पुत्र पुष्पितद्रुमकानने ॥ ३२॥

तस्थौ स विबुधश्रेष्ठो ब्रह्मा लोकार्थसिद्धये ॥ ३३

ततो वर्षसहस्रान्ते वितानमकरोत् प्रभुः ।
विधिना कल्पदृष्टेन यथोक्तेनोपपादितम् ॥ ३४

ऋषिभिर्यज्ञ[1]पटुभिर् यथावत् कर्मकर्तृभिः ।
मरुद्भिः परिसङ्कीर्णे दीप्यमानैश्च पावकैः ॥ ३५

काञ्चनैर्यज्ञभाण्डैश्च भ्राजिष्णुभिरलङ्कृतम् ।
वृतं देवगणैश्चैव प्रबभौ यज्ञमण्डलम् ॥ ३६

1. व—पतिभिर्

तथा ब्रह्मर्षिभिश्चैव सदस्यैरुपशोभितम् ।
तत्र घोरतरं वृत्तम् ऋषीणां मे परिश्रुतम् ॥ ३७

चन्द्रमोविमलं व्योम यथाऽभ्युदिततारकम् ।
विदार्याग्निं तथाभूतम् उत्थितं श्रूयते ततः ॥ ३८

नीलोत्पलसवर्णाभं तीक्ष्णदंष्ट्रं निरूदरम् ।
प्रांशुमुद्धर्षणं चापि तथैवाप्रमितौजसम् ॥ ३९

अस्मिन्नुत्पद्यमाने च प्रचचाल वसुन्धरा ।
महोर्मिसलिलावर्तश्च चुक्षुभे च महोदधिः ॥ ४०

पेतुश्चोल्का महोत्पाताश्च शाखाश्च ममृदुर्द्रुमाः ।
अप्रसन्ना दिशस्सर्वाः पवनश्चाशिवो ववौ ॥ ४१
मुहुर्मुहुश्च भूतानि प्राव्यथन्त भयात्तथा ॥ ४१॥

ततस्तु तुमुलं दृष्ट्वा तद्भूतं समुपस्थितम् ।
महर्षिसुरगन्धर्वान् उवाचेदं पितामहः ॥ ४२॥

ब्रह्मा—

मयैतच्च चिन्तितं भूतम् असिर्नामैष वीर्यवान् ।
रक्षणार्थं च लोकस्य वधाय च सुरद्विषाम् ॥ ४३॥

भीष्मः—

ततस्तद्रूपमुत्सृज्य बभौ निस्त्रिंश एव सः ।
विमलं तीक्ष्णधारं च कालान्तक इवोद्यतम् ॥ ४४॥

ततस्तं नीलकण्ठाय रुद्रायर्षभकेतवे ।

ब्रह्मा ददावसिं दीप्तम् अधर्मप्रतिवारणम् ॥ ४५॥
ततस्स भगवान् क्रुद्धो ब्रह्मर्षिगणपूजितः ।
प्रगृह्यासिममेयात्मा रूपमन्यच्चकार ह ॥ ४६॥
चतुर्बाहुस्स्पृशन् मूर्ध्ना भूमिष्ठोऽपि दिशो दश ।
ऊर्ध्वदृष्टिर्महाबाहुर् मुखाज्ज्वालास्समुत्सृजन् ॥ ४७॥
विकुर्वन् बहुधा कीर्णान् नीलपाण्डुरलोहितान् ।
बिभ्रत् कृष्णाजिनं वासो हेमप्रवरतारकम् ॥ ४८॥
नेत्रं चैकं ललाटस्थं भास्करप्रतिमं महत् ।
शुशुभाते सुविमले द्वे नेत्रे कृष्णपिङ्गले ॥ ४९॥
ततो देवो महादेवश् शूलपाणिर्भगाक्षिहा ।
सम्प्रगृह्य स निस्त्रिंशं कालार्कानलवर्चसम् ॥ ५०॥
त्रिकूटं चर्म चोद्यम्य सविद्युतमिवाम्बुदम् ।
चचार विविधान् मार्गान् दानवान्तचिकीर्षया ॥ ५१॥
विधुन्वन्नसिमाकाशे तदा युद्धचिकीर्षया ॥ ५२
तस्य नादान् विनदतो महाहासं च मुञ्चतः ।
बभौ प्रतिभयं रूपं तदा रुद्रस्य भारत ॥ ५३
तद्रूपधारिणं रुद्रं रौद्रकर्मचिकीर्षया ।
निशाम्य दानवास्सर्वे हृष्टास्समभिदुद्रुवुः ॥ ५४
अश्मभिश्चाभ्यवर्षन्त सम्प्रदीप्तैस्तथोल्मुकैः ।

घोरैः प्रहरणैश्चान्यैः क्षुरधारैरयस्मयैः ॥　　५५

तत्र तद् दानवानीकं सम्प्रणेतृकमच्युत ।
रुद्रखड्गबलाधूतं प्रचचाल मुमोह च ॥　　५६

चित्रं शीघ्रपदत्वाच्च चरन्तमसिपाणिनम् ।
तमेकमसुरास्सर्वे सहस्रमिति मेनिरे ॥　　५७

छिन्दन् भिन्दन् रुजन् कृन्तन् दारयन् प्रमथन्नपि ।
अचरद्दैत्यसङ्घेषु [1]ग्रीष्माग्निरिव कक्षगः ॥　　५८

असिवेगप्ररुग्णास्ते [2]छिन्नबाहूरुवक्षसः ।
उत्तमाङ्गप्रकृत्ताश्च पेतुरुर्व्यां महासुराः ॥　　५९

अपरे दानवा भग्नाः खड्गधारावपीडिताः ।
अन्योन्यमभिनर्दन्तो दिशस्सम्प्रतिपेदिरे ॥　　६०

भूमौ केचित् प्रविविशुः पर्वतानां गुहास्तथा ।
अपरे जग्मुराकाशम् अपरेऽम्भस्समाविशन् ॥　　६१

तस्मिन् महति निर्वृत्ते समरे भृशदारुणे ।
बभौ भूमिः [3]प्रतिभयात् तदा रुधिरकर्दमा ॥　　६२

दानवानां शरीरैश्च महद्भिश्शोणितोक्षितैः ।
समाकीर्णा महाबाहो शैलैरिव सकिंशुकैः ॥　　६३

---

1. ख—कक्षेऽग्निरिव　　घ—रुद्रोऽग्निरिव
2. क-ख-घ—भिन्न　　3. ख—प्रतिभया तदा

रुधिरेण परिक्लिन्ना प्रबभौ वसुधा तदा ।
रक्तार्द्रवसना श्यामा नारीव मदविह्वला ॥ ६४

स रुद्रो दानवान् हत्वा कृत्वा धर्मोत्तरं जगत् ।
रौद्रं रूपमथाक्षिप्य चक्रे रूपं शिवं शिवः ॥ ६५

ततो महर्षयस्सर्वे सर्वे देवगणास्तदा ।
जयेनाद्भुतकल्पेन देवदेवमथास्तुवन् ॥ ६६

ततस्स भगवान् रुद्रो दानवक्षतजोक्षितम् ।
असिं धर्मस्य गोप्तारं ददौ सत्कृत्य विष्णवे ॥ ६७

विष्णुर्मरीचये प्रादान्मरीचिर्भार्गवाय तम् ।
महर्षिभ्यो ददौ खड्गम् ऋषयो वासवाय च ॥ ६८

महेन्द्रो लोकपालेभ्यो लोकपालास्तु पुत्रक ।
मनवे सूर्यपुत्राय ददुः खड्गं सुविस्तरम् ॥ ६९

ऊचुश्चैनं तथा वाक्यं मानुषाणां त्वमीश्वरः ।
असिना धर्मगर्भेण पालयस्व प्रजा [1]इति ॥ ७०

धर्मसेतुमतिक्रान्तास् स्थूलसूक्ष्मार्थकारणात् ।
विभज्य दण्डं रक्ष्यास्स्युर् धर्मतो न यदृच्छया ॥ ७१

दुर्वाचा निग्रहो दण्डो हिरण्यबहुलस्तथा ।
व्यङ्गता च शरीरस्य वधो नाल्पस्य कारणात् ॥ ७२

---

1. अ-क-घ—पते

असेरेतानि रूपाणि दुर्वागादीनि निर्दिशेत् ।
असेरेवं प्रमाणानि परमाण्यभ्यतिक्रमात् ॥　　७३

अभिषिच्याथ पुत्रं स्वं प्रजानामधिपं ततः ।
मनुः प्रजानां रक्षार्थं क्षुपाय प्रददावसिम् ॥　　७४

क्षुपाज्जग्राह चेक्ष्वाकुर् इक्ष्वाकोश्च पुरूरवाः ।
आयुश्च तस्मात्तं लेभे नहुषश्च ततो विभुः ॥　　७५

ययातिर्नहुषाच्चापि पूरुस्तस्माच्च लब्धवान् ।
आधूर्तश्च गयस्तस्मात् ततो [1]भूमिशयो नृपः ॥　　७६

भरतश्चापि दौष्यन्तिर् लेभे भूमिशयादसिम् ।
तस्माल्लेभे च धर्मज्ञो राजन्नैलबिलस्ततः ॥　　७७

ततस्त्वैलबिलाल्लेभे धुन्धुमारो जनेश्वरः ।
धुन्धुमाराच्च काम्भोजो मुचुकुन्दस्तथाऽभजत् ॥　　७८

मुचुकुन्दान्मरुत्तश्च मरुत्तादपि रैवतः ।
रैवताद्युवनाश्वश्च युवनाश्वात् तथा रघुः ॥　　७९

इक्ष्वाकुवंशजस्तस्माद्धरिणाश्वो महारथः ।
हरिणाश्वात्ततो लेभे शुनकश्शुनकादपि ॥　　८०

उशीनरोऽपि धर्मात्मा तस्माद्भोजास्सयादवाः ।
यदुभ्यश्च शिबिर्लेभे शिबेश्चापि प्रतर्दनः ॥　　८१

1. घ—भूमिश्रयो

प्रतर्दनादुष्ट्रकस्तु रुशदश्वोष्ट्रकादपि ।
रुशदश्वाद्भरद्वाजो द्रोणस्तस्मात् कृपस्ततः ॥ ८२

ततस्त्वं भ्रातृभिस्सार्धं परं चासिमवाप्तवान् ॥ ८२॥

कृत्तिका ह्यस्य नक्षत्रम् असेरग्निश्च दैवतम् ।
रोहिण्यो गोत्रमस्याथ रुद्राश्च गुरुसत्तमाः ॥ ८३॥

असेरष्टौ च नामानि रहस्यानि निबोध मे ।
पाण्डवेय सदा यानि कीर्तयँल्लभते जयम् ॥ ८४॥

असिर्विशसनः खड्गस् तीक्ष्णचर्मा दुरासदः ।
श्रीगर्भो विजयश्चैव धर्मपालस्तथैव च ॥ ८५॥

अग्र्यः प्रहरणानां च खड्गो भुवि परिश्रुतः ।
महेश्वरप्रणीतश्च पुराणे निश्चयं गतः ॥ ८६॥

एतानि चैव नामानि पुराणे निश्चितानि वै ॥ ८७

पृथुस्तूत्पादयामास धनुराद्यमरिन्दम ।
तेनेयं पृथिवी पूर्वं वैन्येन परिरक्षिता ॥ ८८

[1]तदेतदेवं माद्रेय प्रमाणं कर्तुमर्हसि ।
असेश्च पूजा कर्तव्या सदा युद्धविशारदैः ॥ ८९

इत्येष प्रथमः कल्पो मया ते कथितः पुनः ।
एवमेवासिसर्गोऽयं यथावद्भरतर्षभ ॥ ९०

---

1. ख-घ—तदेतदार्षं

सर्वथा तमिह श्रुत्वा खड्गस्यागममुत्तमम् ।
लभते पुरुषः कीर्तिं प्रेत्य [1]चानन्दमश्नुते ॥　　९१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
॥ अस्मिन्नध्याये ९१ श्लोकाः ॥

---

## ॥ षट्चत्वारिंशदधिकशततमोऽध्यायः ॥

स्वस्वाभिमतार्थकथनाय चोदितैर्विदुरार्जुनभीमसेनैः क्रमेण धर्मार्थकामेषु अभिष्टुतेषु युधिष्ठिरेण मोक्षप्रशंसनम् ॥

---

वैशम्पायनः—

इत्युक्तवति भीष्मे तु तूष्णीम्भूतो युधिष्ठिरः ।
पप्रच्छावसथं गत्वा भ्रातॄन् विदुरपञ्चमान् ॥　　१

युधिष्ठिरः—

धर्मे चार्थे च कामे च लोकवृत्तिस्समाहिता ।
तेषां गरीयान् कतमो मध्यमः को लघुश्च कः ॥　　२

कस्मिंश्चात्मा नियन्तव्यस् त्रिवर्गविजयाय वै ।
सम्पृष्टा नैष्ठिकं वाक्यं यथावद्वक्तुमर्हथ ॥　　३

---

1. ख—चानन्त्य

वैशम्पायनः—

ततोऽर्थगतितत्त्वज्ञः प्रथमं प्रतिभानवान् ।
जगाद विदुरो वाक्यं धर्मशास्त्रमनुस्मरन् ॥ ४

विदुरः—

बहुश्रुतं तपस्त्यागश्‌ श्रद्धा यज्ञक्रिया क्षमा ।
भावशुद्धिर्दया सत्यं संयमश्चात्मसम्पदः ॥ ५

एतदेवाभिपद्यस्व मा ते भूच्चलितं मनः ।
एतन्मूलौ हि धर्मार्थावेतदेकपदं हितम् ॥ ६

धर्मेणैवर्षयस्तीर्णा धर्मे लोकाः प्रतिष्ठिताः ।
धर्मेण देवा दिवि च धर्मे चार्थस्समाहितः ॥ ७

धर्मो राजन् कुरुश्रेष्ठ मध्यमो ह्यर्थ उच्यते ।
कामो यवीयानिति च प्रवदन्ति मनीषिणः ॥ ८

तस्माद्धर्मप्रधानेन भवितव्यं यतात्मना ।
तथा च सर्वभूतेषु वर्तितव्यं यतात्मना ॥ ९

वैशम्पायनः—

समाप्तवचने तस्मिन् भीमकर्मा धनञ्जयः ।
ततोऽर्थगतितत्त्वज्ञो जगौ वाक्यं प्रचोदितः ॥ १०

अर्जुनः—

अर्थस्यावयवावेतौ धर्मकामाविति स्मृतिः ।

अर्थसिद्ध्या ऽभिनिर्वृत्तावुभावेतौ भविष्यतः ॥ ११

उद्भूतार्थं हि पुरुषं विशिष्टतरयोनयः ।
ब्रह्मणामिव भूतानि सततं पर्युपासते ॥ १२

जटाजिनधरा दान्ताः पङ्कदिग्धा जितेन्द्रियाः ।
मुण्डा निस्तन्तवश्चापि वसन्त्यर्थार्थिनः पृथक् ॥ १३

काषायवसनाश्चान्ये श्मश्रुला हि सुसंयताः ।
विद्वांसश्चैव दान्ताश्च मुक्तास्सर्वपरिग्रहैः ॥ १४

अर्थार्थिनस्सन्ति नित्यं परितप्यन्ति कर्मभिः ।
कर्मभूमिरियं राजन्निह वार्ता प्रशस्यते ॥ १५

कृषिवाणिज्यगोरक्ष्यं शिल्पानि विविधानि च ।
अर्थ इत्येव सर्वेषां कर्मणामभ्युपक्रमः ॥ १६

निर्वृतेऽर्थे निवर्तेते धर्मकामाविति श्रुतिः ।
विषहेतार्थवान् धर्मम् आराधयितुमुत्तमम् ॥ १७

कामं च चरितुं शक्तो दुष्प्रापमकृतात्मभिः ।
[1]अर्थार्थिनस्सन्ति केचिद् अपरे स्वर्गकाङ्क्षिणः ॥ १८

कुलप्रत्यागताश्चैके स्वं स्वं धर्ममनुष्ठिताः ॥ १८॥

आस्तिका नास्तिकाश्चैव नियतास्संयमे परे ।
अप्रज्ञानं तमोभूतं प्रज्ञानं तु प्रकाशता ॥ १९॥

---

1. अ—अर्धद्वयं नास्ति

भृत्यान् भोगैर्द्विषो दण्डैर् यो जयति सोऽर्थवान् ॥ २०

एतन्मतिमतां श्रेष्ठ मतं मम यथातथम् ।
अनयोस्तु निबोध त्वं वचनं शुक्रकण्वयोः ॥ २१

वैशम्पायनः—

तथा धर्मार्थकुशलौ माद्रीपुत्रावनन्तरम् ।
नकुलस्सहदेवश्च वाक्यमूचतुरुत्तमम् ॥ २२

नकुलसहदेवौ—

आसीनश्च शयानश्च विचरन्नपि च स्थितः ।
अर्थयोगं दृढं कुर्याद् योगैरुच्चावचैरपि ॥ २३

तस्मिंस्तु वै सुनिर्वृत्ते दुर्लभे परमप्रिये ।
इह कामानवाप्नोति प्रत्यक्षं नात्र संशयः ॥ २४

योऽर्थो धर्मेण संयुक्तो धर्मो यश्चार्थसंयुतः ।
मध्विवामृतसंसृष्टं तस्मादेतौ मताविह ॥ २५

अनर्थस्य न कामोऽस्ति तथाऽर्थोऽधर्मिणः कुतः ।
तस्मादुद्विजते लोको धर्मार्थाभ्यां बहिष्कृतात् ॥ २६

तस्माद्धर्मप्रधानेन सेव्योऽर्थस्संयतात्मना ।
विश्वस्तेषु च भूतेषु कल्प्यन्ते सर्व एव च ॥ २७

धर्मं समाचरेत् पूर्वं ततोऽर्थं धर्मसंहितम् ।
ततः कामं चरेत् पश्चात् सिद्धार्थस्य हि तत् फलम् ॥ २८

वैशम्पायनः—

विरेमतुस्तु तद्वाक्यम् उक्त्वा तावश्विनोस्सुतौ ।
भीमसेनस्ततो वाक्यम् इदं वक्तुं प्रचक्रमे ॥ २९

भीष्मः—

नाकामः कामयत्यर्थं नाकामो धर्ममिच्छति ।
नाकामः कामयानोऽस्ति तस्मात् कामो विशिष्यते ॥ ३०

कामेन युक्ता ऋषयस् तपस्येव समाहिताः ।
पलाशाश्शाकमूलाशा वायुभक्षास्सुसंयताः ॥ ३१

वेदोपवेदेष्वपरे युक्तास्स्वाध्यायपारगाः ।
श्राद्धे यज्ञक्रियायां च तथा दानप्रतिग्रहे ॥ ३२

वणिजः कर्षका गोपाः कारवश्शिल्पिनस्तथा ।
देशधर्मकृतश्चैव युक्ताः कामेन कर्मसु ॥ ३३

समुद्रं चाविशन्त्यन्ये नराः कामेन संयुताः ।
कामो हि विविधाकारस् सर्वं कामेन सन्ततम् ॥ ३४

नास्ति नासीन्न भविता भूतं काममृते परम् ।
एतत् सारं महाराज धर्मार्थावत्र संश्रितौ ॥ ३५

नवनीतं यथा दध्नस् तथा कामोऽर्थधर्मतः ।
श्रेयस्तैलं न पिण्याको घृतं श्रेयोऽप्युदश्वितः ॥ ३६

श्रेयः पुष्पफलं काष्ठात् कामो धर्मार्थयोर्वरः ।
पुष्पतो मध्विव परं कामात् सञ्जायते सुखम् ॥ ३७

सुचारुवेषाभिरलङ्कृताभिर्
मदोत्कटाभिः प्रियवादिनीभिः ।
रमस्व योषिद्भिरुपेत्य कामं
कामो हि राजन् परमाभिरामः ॥ ३८

माभूद्विरामस्तव राजपुत्र
[1]सान्त्वाहितस्सद्भिरफल्गुसारम् ।
समस्तवाक्यं परमानृशंस्यम्
धर्मार्थकामा[2]स्सममेव सेव्याः ॥ ३९

यो ह्येकभक्तस्स नरो जघन्यो
द्वयोस्तु सक्तं प्रवदन्ति मध्यमम् ।
स उत्तमो यो निरतस्त्रिवर्गे
विभज्य कालं परिसेवमानः ॥ ४०

वैशम्पायनः—

प्राज्ञस्सुहृच्चन्दनसारलिप्तो
विचित्रमाल्याभरणैरुपेतः ।
ततो वचस्सङ्ग्रहविग्रहेण
प्रोक्त्वा स भूमौ विरराम राजन् ॥ ४१

1. ख—सान्त्वं हि तत्सद्भि
2. क-ख-घ—परमेव

ततो मुहूर्तादथ धर्मराजो
वाक्यानि तेषामनुचिन्त्य सम्यक् ।
उवाच वाचाऽ[1]वितथं स्मयन् वै
बहुश्रुतो धर्मभृतां वरिष्ठः ॥　　४२

युधिष्ठिरः—

निस्संशयं निश्चित[2]सर्वशास्त्रास्
सर्वे भवन्तो विदितप्रमाणाः ।
विज्ञातुकामस्य ममेह वाक्यम्
उक्तं यद्वो नैष्ठिकं तच्छ्रुतं मे ॥　　४३

इहानुवंशं गदतो ममापि
वाक्यं निबोधध्वमनन्यभावाः ।
भूतानि जातीमरणान्वितानि
जराविकारैश्च समन्वितानि ॥　　४४

भूयश्च तैस्तैरुपसेवितानि
मोक्षं प्रशंसन्ति ततश्च विद्मः ॥　　४४॥

यो वै न पापे निरतो न पुण्ये
नार्थे न धर्मे निरतो न कामे ।

1. घ—विततः　　2. अ-क-घ—धर्मं

विमुक्तदोषस्समफल्गुसारो
विमुच्यते दुःखसुखात् ससिद्धः ॥ ४५॥

स्नेहेन बद्धस्य न सन्ति तानि
चैवं स्वयम्भूर्भगवानुवाच ।
बोधाय निर्वाणपरा भवन्ति
तस्मान्न कुर्यात् प्रियमप्रियं वा ॥ ४६॥

एतच्च मुख्यं न तु कामकारो
यथा नियुक्तोऽस्मि तथा करोमि ।
भूतानि सर्वाणि विधिर्नियुङ्क्याद्
विधिर्बलीयानिति विद्ध सर्वे ॥ ४७॥

न कर्मणाऽऽप्नोत्यनवाप्यमर्थं
यद्भावि सर्वं भवतीति विद्धः ।
त्रिवर्गहीनोऽपि हि प्राप्नुतेऽर्थं
तस्मादिदं लोकहिताय गुह्यम् ॥ ४८॥

वैशम्पायनः—

तदग्र्यबुद्धेर्वचनं मनोनुगं
समस्तमाज्ञाय तथा हि हेतुमत् ।
तदा प्रणेमुर्जहृषुस्तथैव
कुरुप्रवीराय च चक्रिरेऽञ्जलिम् ॥ ४९॥

सुचारुवर्णाक्षरशब्दभूषितां
मनोनुगां निर्गतवाक्यकण्टकाम् ।
निशम्य तां पार्थिवभाषितां गिरं
पार्थस्य सर्वे प्रणता बभूवुः ॥ ५०॥

तथैव राजा प्रशशंस वीर्यवान्
पुनश्च पप्रच्छ सरिद्वरासुतम् ।
धर्मार्थकामेषु विनिश्चयज्ञं
ततः परं धर्ममहीन[1]सत्त्वम् ॥ ५१ ॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
[ अस्मिन्नध्याये ५१॥ श्लोकाः ]

---

1. ख—सत्त्वः

## ॥ सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति सन्धेयासन्धेयपुरुषलक्षणकथनम् ॥

युधिष्ठिरः—

पितामह महाप्राज्ञ कुरूणां [1]प्रीतिवर्धन ।
प्रश्नं कञ्चित् प्रवक्ष्यामि तन्मे व्याख्यातुमर्हसि ॥ १

कीदृशा मानवास्सेव्याः कैः प्रीतिः परमा भवेत् ।
आयत्यां च तदात्वे च क्षमांस्तान् प्रब्रवीहि मे ॥ २

न हि तत्र धनं स्फीतं न च सम्बन्धिबान्धवाः ।
तिष्ठन्ति यत्र सुहृदस् तिष्ठन्तीति मतिर्मम ॥ ३

दुर्लभो हि सुहृच्छ्रोता दुर्लभश्च [2]हि यस्सुहृत् ।
एतद्धर्मभृतां श्रेष्ठ सर्वं व्याख्यातुमर्हसि ॥ ४

भीष्मः—

सन्धेयान् पुरुषान् राजन्नसन्धेयांश्च तत्त्वतः ।
वदतो मे निबोध त्वं निखिलेन युधिष्ठिर ॥ ५

लुब्धः क्रूरो ह्यधर्मिष्ठो निकृतश्शठ एव च ।
क्षुद्रः पापसमाचारस् सर्वशङ्की तथाऽलसः ॥ ६

1. ख—कीर्ति 2. ख—हितः

दीर्घसूत्रोऽनृजुः कष्टो गुरुदारप्रधर्षकः ।
व्यसने यः परित्यागी दुरात्मा निरपत्रपः ॥ ७

सर्वतः पापदर्शी च नास्तिको वेदनिन्दकः ।
सम्प्रकीर्णेन्द्रियो लोके यः कामनिरतश्चरेत् ॥ ८

[1]असौम्यो लोकविद्विष्टस् समये चानवस्थितः ।
पिशुनोऽथाकृतप्रज्ञो मत्सरी पापनिश्चयः ॥ ९

दुःखशीलोऽनृतात्मा च नृशंसः कितवस्तथा ।
मित्रैरर्थकृती नित्यम् आदत्तेऽर्थं धनेप्सया ॥ १०

दत्तेन च यथाशक्ति यो न तुष्यति मन्दधीः ।
अधुर्यमपि यो युङ्क्ते सदा मित्रं नराधमः ॥ ११

अस्थानक्रोधनो यश्च अकस्माच्च विरज्यते ।
सुहृदश्चैव कल्याणानाशु त्यजति किल्बिषी ॥ १२

अल्पेऽप्यपकृते चैव संस्मरति यत् कृतम् ।
समेत्य चैव रिपुषु मित्रद्वेषी नराधिप ॥ १३

शत्रुर्मित्रमुखो यश्च जिह्मप्रेक्षविलोचनः ।
न तुष्यति च कल्याणे यस्त्यजेत्तादृशं नरम् ॥ १४

पानपो द्वेषणः क्रूरो निर्घृणः परुषस्तथा ।
[2]परापकारी विप्रद्विट् तथा प्राणिवधे रतः ॥ १५

---

1. क-ख—असभ्यो	2. ख-घ—परोपतापी

कृतघ्नश्चाधमो लोके न सन्धेयः कथञ्चन ।
मित्रद्वेषी न सन्धेयस् सन्धेयानपि मे शृणु ॥ १६

कुलीना वाक्यसम्पन्ना ज्ञानविज्ञानकोविदाः ।
मित्रज्ञाश्च कृतज्ञाश्च धर्मज्ञा लोभवर्जिताः ॥ १७

माधुर्यगुणसम्पन्नास् सर्वलक्षणपूजिताः ।
व्यायामशीलास्सततं भृत्यपुत्राः कुलोद्गताः ॥ १८

कृपावन्तो गुणोपेतास् तथा विद्यासमन्विताः ।
दोषैर्विमुक्ताः प्रथितास् ते ग्राह्याः पार्थिवेन ह ॥ १९

यथाशक्तिसमाचारास् सन्तस्तुष्यन्ति च प्रभो ॥ १९॥

नास्थाने कोपवन्तश्च न चाकस्माद्विरागिणः ।
विरक्ताश्च न दूष्यन्ते मनसाऽप्यर्थकोविदाः ॥ २०॥

आत्मानं पीडयित्वाऽपि सुहृत्कार्यपरायणाः ।
न विरज्यन्ति मित्रेभ्यो वासो रक्तमिवाधिकम् ॥ २१॥

दोषांश्च लोभमोहादीन् अर्थेषु युवतीषु च ।
न दर्शयन्ति सुहृदो विश्वस्ता बन्धुवत्सलाः ॥ २२॥

लोष्टकाञ्चनतुल्यार्थास् सुहृत्स्वशठबुद्धयः ।
ये चरन्त्यनभीमाना निसृष्टार्थविभूषणाः ॥ २३॥

सङ्गृह्णन्तः परिजनं भवन्त्युत्तमपूरुषाः ॥ २४

ईदृशैः पुरुषश्रेष्ठैस् सन्धिं स्म कुरुते नृपः ।

तस्य विस्तीर्यते राज्यं ज्योत्स्ना ग्रहपतेरिव ॥ २५

सत्त्ववन्तो जितक्रोधा बलवन्तो रणप्रियाः ।
क्षान्ताश्शीलगुणोपेतास् सन्धेयाः पुरुषोत्तमाः ॥ २६

ये च दोषसमायुक्ता नराः प्रोक्ता मयाऽनघ ।
तेषामप्यधमो राजन् कृतघ्नो मित्रघातकः ॥ २७

त्यक्तव्यास्सुदुराचारास् सर्वेषामिति निश्चयः ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥
॥ ८७ ॥ आपद्धर्मपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
[अस्मिन्नध्याये २७॥ श्लोकाः]

## ॥ अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥

कृतघ्नोपाख्यानम्—भीष्मेण युधिष्ठिरं प्रति कृतघ्नमित्रद्रोहिलक्षणकथनाय दृष्टान्ततया गौतमकथाकथनारम्भः ॥ १ ॥ ब्राह्मणाधमेन केनचिद्गौतमकुलजेन धनार्जनाय दस्युग्रामप्रवेशः ॥ २ ॥ तत्र केनचिद्दस्युवरेण भर्तृविरहितनारीसमर्पणादिना सत्कृतेन गौतमेन दस्युवृत्त्योपजीवनम् ॥ ३ ॥ कदाचन धनार्जनाय प्रस्थितवता गौतमेन समुद्रं प्रति गच्छता वणिक्सार्थेन सहगमनम् ॥ ४ ॥ वनगजोपद्रुतवणिक्सार्थपरिभ्रष्टेन गौतमेन किञ्चिन्न्यग्रोधमूले विश्रान्त्यै प्रस्वापः ॥ ५ ॥ तत्र सायमागतेन राजधर्मनाम्ना बकराजेन तस्य सत्कारः ॥ ६ ॥ बकसत्कृतेन गौतमेन तच्चोदनया तत्सुहृदो विरूपाक्षनाम्नो राक्षसस्य नगरं प्रति गमनम् ॥ ७ ॥ गौतमेन स्वस्यानर्हत्वं जानताऽपि विरूपाक्षेण बकराजगौरवात्प्रदत्तं धनभारमुदूह्य सायं पुनर्बकालयं प्रत्यागमनम् ॥ ८ ॥ तत्र परेद्युः स्वभवनं जिगमिषुणा गौतमेन पाथेयार्थं रात्रौ बकवधनिर्धारणम् ॥ ९ ॥ गौतमेन रात्रौ सुप्तं बकं हत्वाऽग्नौ पक्वतन्मांसमुपगृह्य स्वग्रामं प्रति प्रस्थानम् ॥ १० ॥ परेद्युर्बकस्यानागमनेन तस्य विवादशङ्किना विरूपाक्षेण तद्वृत्तान्तजिज्ञासया स्वपुत्रस्य नियोजनम् ॥ ११ ॥ पितृनियोगात्सपरिवारेण विरूपाक्षसुतेन गौतमहननम् ॥ १२ ॥ विरूपाक्षभटैर्बकशरीरस्य चितारोपणम् ॥ १३ ॥ ततो वाय्वानीतधेनुमुखस्रुतफेनपातेन चितास्थबकोज्जीवनम् ॥ १४ ॥ ततो बकप्रार्थनया इन्द्रेण पुनरुज्जीवितस्य गौतमस्य स्वग्रामगमनम् ॥ १५ ॥

---

युधिष्ठिरः—

विस्तरेणार्थसम्बन्धं श्रोतुमिच्छामि पार्थिव ।
मित्रद्रोही कृतघ्नश्च यः प्रोक्तस्तं च मे वद ॥ १

भीष्मः—

हन्त ते वर्तयिष्येऽहम् इतिहासं पुरातनम् ।
उदीच्यां दिशि यद्वृत्तं म्लेच्छेषु मनुजाधिप ॥ २

ब्राह्मणो मध्यदेशीयः कृष्णाङ्गो ब्रह्मवर्जितः ।
ग्रामं दस्युगणाकीर्णं प्राविशद्धनतृष्णया ॥ ३

तत्र दस्युर्धनयुतस् सर्ववर्णविशेषवित् ।
ब्रह्मण्यस्सत्यसन्धश्च दाने च निरतोऽभवत् ॥ ४

तस्य क्षयमुपागम्य ततो भिक्षामयाचत ।
प्रतिश्रयं च वासार्थं भिक्षां चैवाथ [1]वार्षिकीम् ॥ ५

तस्मै स भिक्षामददाद् वस्त्रं च सुदृढं नवम् ।
नारीं च यौवनोपेतां भर्त्रा विरहितां तदा ॥ ६

एतत् सम्प्राप्य हृष्टात्मा गौतमोऽथ द्विजस्तथा ।
तस्मिन् गृहवरे राजंस् तया रेमे स गौतमः ॥ ७

कुटुम्बार्थे च दस्योश्च साहाय्यमकरोद्द्विजः ।
सोऽवसद्वर्षमेकं वै समृद्धे शबरालये ॥ ८

बाणवेधे परं यत्नं अकरोद् गौतमो नृप ॥ ८॥

[2]वक्राङ्गहारहस्तस्तु सर्वतो बाणगोचरे ।

---

1. क—वार्षिकम्　　ख-घ—ऽति वार्षिकम्

2. ख—वराहान्सतु-नित्यं वै　　घ—वक्राङ्गांस्तु सुनित्यं वै

जघान गौतमो राजन् यथा दस्युजनस्तथा ॥ ९॥

हिंसापरो घृणाहीनस् सदा प्राणिवधे रतः ।
गौतमस्सन्निकर्षेण दस्यूनां ससमोऽभवत् ॥ १०॥

तत्रैव वसतस्तस्य दस्युग्रामे सुखं तदा ।
अगच्छन् बहवो मासा निघ्नतः पक्षिणो बहून् ॥ ११॥

ततः कदाचिदपरो द्विजस्तं देशमागमत् ।
जटाचीराजिनधरस् स्वाध्यायनिरतश्शुचिः ॥ १२॥

विनीतो वेदशास्त्रेषु वेदान्तानां च पारगः ।
अदृश्यत ततस्तस्य सखा तस्यैव तु द्विजः ॥ १३॥
तं दस्युग्राममगमद् यत्रासौ गौतमोऽभवत् ॥ १४

स तु दस्युगृहान्वेषी शूद्रान्नपरिवर्जनः ।
ग्रामे दस्युसमाकीर्णे व्यचरत् सर्वतो द्विजः ॥ १५

ततस्स गौतमगृहं प्रविवेश द्विजोत्तमः ।
गौतमश्चापि सम्प्राप्तस् तावन्योऽन्यं समागतौ ॥ १६

[1]वक्राङ्गहारहस्तं तं धनुष्पाणिमवस्थितम् ।
रुधिरेणावसिक्ताङ्गं गृहद्वारमुपस्थितम् ॥ १७

तं दृष्ट्वा पुरुषादाभम् अपध्वस्तं क्षयागतम् ।
अभिज्ञाय द्विजो व्रीलाम् अगमद्वाक्यमाह च ॥ १८

1. ख—चक्रा

द्विजः—

किमिदं कुरुषे मूढ विप्रस्त्वं हि कुलोद्भवः ।
मध्यदेशपरिज्ञातो दस्युभावं गतः कथम् ॥ १९

पूर्वान् स्मर द्विजाग्र्यांस्तान् प्रख्यातान् वेदपारगान् ।
येषां वंशेऽभिजातस्त्वम् ईदृशः कुलपांसनः ॥ २०

अवबुध्यात्मनाऽऽत्मानं सत्त्वं शीलं दमं [1]शमम् ।
अनुक्रोशं च संस्मृत्य त्यज वासमिमं द्विज ॥ २१

भीष्मः—

एवमुक्तस्स सुहृदा [2]तेन तत्र हितैषिणा ।
प्रत्युवाच ततो राजन् विनिश्वस्य तदाऽऽर्तवत् ॥ २२

गौतमः—

[3]अधनोऽस्मि द्विजश्रेष्ठ न च वेदविदप्यहम् ।
वृत्त्यर्थमिह सम्प्राप्तं विद्धि मां द्विजसत्तम ॥ २३

त्वद्दर्शनात्तु विप्रर्षे कृतार्थश्चास्म्यहं द्विज ।
अध्वानं सह यास्यावश् श्वो वसेश्चाद्य शर्वरीम् ॥ २४

भीष्मः—

तस्यां [4]रजन्यां व्युष्टायां गते तस्मिन् द्विजर्षभे ।
निष्क्रम्य गौतमोऽगच्छद् धनार्थी विचचार ह ॥ २५

---

1. ख—श्रुतम् 2. ख—तदाऽनेन
3. अ—निर्धं 4. ख—निशायां

समुद्रगान् स वणिजस् ततोऽपश्यद्द्विजः पथि ।
स तेन सह सार्थेन प्रययौ सागरं प्रति ॥ २६

स तु सार्थो महाराज कस्मिंश्चिद्गिरिगह्वरे ।
मत्तेन द्विरदेनाथ निहतः प्रायशोऽभवत् ॥ २७

स कथञ्चित्तथा तस्मात् ततो मुक्तो द्विजस्तदा ।
कान्दिग्भूतो जीवितार्थी प्रदुद्रावोत्तरां दिशम् ॥ २८

ततस्तु स परिभ्रष्टस् सार्थात्तस्मात् तथाऽर्थतः ।
एकाकी व्यभ्रमत्तत्र वने कापुरुषो यथा ॥ २९

स पन्थानं समासाद्य समुद्राभिमुखस्तथा ।
आससाद वनं रम्यं महत् पुष्पितपादपम् ॥ ३०

सर्वर्तुकैराम्रवणैः पुष्पितैरुपशोभितम् ।
नन्दनोद्देशसमितं यक्षकिन्नरसेवितम् ॥ ३१

सालतालधवाश्वत्थप्लक्षागुरुवनैस्तथा ।
चन्दनस्य च मुख्यस्य पादपैरुपशोभितम् ॥ ३२

गिरिप्रस्थेषु सर्वेषु सुखेषु ससुगन्धिषु ।
समन्ततो द्विजश्रेष्ठा वल्गु कूजन्ति तत्र वै ॥ ३३

मनुष्यवदनाश्चान्ये भारुण्डा इति विश्रुताः ।
उद्गताश्शकुनाश्चान्ये सामुद्रास्सर्वतोऽभवन् ॥ ३४

स तान्यतिमनोज्ञानि विहगानां रुतानि वै ।

श्रृण्वन् सुरमणीयानि विप्रोऽगच्छत गौतमः ॥ ३५

ततोऽपश्यत् सुरम्ये तु सुवर्णसिकताचिते ।
देशभागे समे चित्रे स्वर्गोद्देशसमप्रभे ॥ ३६

श्रिया युक्तं महावृक्षं न्यग्रोधं परिमण्डलम् ।
शाखाभिरनु[1]कूलाभिस् संवृतं छत्रसन्निभैः ॥ ३७

तस्य मूलं च संसिक्तं वरचन्दनवारिणा ।
दिव्यपुष्पान्वितं श्रीमत् पितामहसदोपमम् ॥ ३८

तं दृष्ट्वा गौतमः प्रीतो मनःकान्तमनुत्तमम् ।
मेध्यं सुरगृहप्रख्यं पुष्पितैः पादपैर्वृतम् ॥ ३९

तमासाद्य मुदा युक्तस् तस्याधस्तादुपाविशत् ॥ ३९॥

तत्रासीनस्य कौरव्य गौतमस्य नराधिप ।
पुष्पाणि समुपस्पृश्य प्रववावनिलश्शुचिः ॥ ४०॥

ह्लादयंस्तस्य गात्राणि गौतमस्य तदा नृप ॥ ४१

स तु स्पृष्टः परिश्रान्तो विप्रः पुण्येन वायुना ।
सुखमासाद्य सुष्वाप भास्करश्चास्तमभ्ययात् ॥ ४२

ततोऽस्तं भास्करे प्राप्ते सन्ध्याकाल उपस्थिते ।
आजगाम स्वभवनं ब्रह्मलोकात् खगोत्तमः ॥ ४३

नालीजङ्घ इति ख्यातो दयितो ब्रह्मणस्सदा ।

---

1. ख—रूपाभिः + संनिभम्

कुरुराज महाप्राज्ञः काश्यपस्यात्मसम्भवः ॥ ४४

राजधर्मेति विख्यातो बभूवाप्रतिमो भुवि ।
देवकन्यासुतश्श्रीमान् विद्वान् देवसमप्रभः ॥ ४५

मृष्टहाटकसञ्छन्नो भूषणैरर्कसन्निभैः ।
भूषितस्सर्वगात्रेषु देवगर्भश्श्रिया ज्वलन् ॥ ४६

तमागतं खगं दृष्ट्वा विस्मितो गौतमोऽभवत् ।
क्षुत्पिपासापरीतात्मा हिंसार्थे चैनमैक्षत ॥ ४७

बकः—

स्वागतं भवतो विप्र दिष्ट्या प्राप्तोऽसि मे गृहान् ।
अस्तं च सविता यातस् सन्ध्येयं समुपस्थिता ॥ ४८

मम त्वं निलयं प्राप्तः प्रियातिथिरनुत्तमः ।
पूजितो यास्यसि सुखं विधिदृष्टेन कर्मणा ॥* ४९

भीष्मः—

गिरं तां मधुरां श्रुत्वा विस्मितो गौतमस्तदा ।
कौतूहलान्वितो राजन् राजधर्माणमैक्षत ॥ ५०

राजधर्मा—

भोः काश्यपस्य पुत्रोऽहं माता दाक्षायणी मम ।
[1]सखित्वाच्च गुणोपेतस् स्वागतं ते द्विजर्षभ ॥ ५१

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. ख—सति त्वं च

भीष्मः—

तस्मै दत्त्वा स सत्कारं विधिदृष्टेन कर्मणा ।
सालपुष्पमयीं दिव्यां बृसीं समुपकल्पयत् ॥ ५२

भगीरथरथाक्रान्तदेशान् गङ्गानिषेवितान् ।
ये चरन्ति महामीनास् तांश्च तस्योपकल्पयत् ॥ ५३

वह्निं चैव सुसन्दीप्तं मीनांश्चैव सुपीवरान् ।
स गौतमायातिथये तदाऽन्नमुपकल्पयत् ॥ ५४

ततस्तृप्तं च तं विप्रं प्रीतात्मानं महामनाः ।
श्रमापनयनार्थं [1]स पक्षाभ्यामभ्यवीजयत् ॥ ५५

ततो विश्रान्तमासीनं गोत्रवृत्तमपृच्छत ।
सोऽब्रवीद्गौतमोऽस्मीति ब्राह्मणोऽस्मीत्युदाहरत् ॥ ५६

तस्मै पर्णमयं दिव्यं दिव्यपुष्पाधिवासितम् ।
गन्धाढ्यं शयनं प्रादात् स शिश्ये तत्र वै सुखम् ॥ ५७

अथोपविष्टं शयने गौतमं वाक्यवित्तमः ।
पप्रच्छ काश्यपो वाग्मी किमागमनमित्युत ॥ ५८

ततोऽब्रवीद्गौतमस्तं दरिद्रोऽहं महामते ।
समुद्रगमनाकाङ्क्षी द्रव्यार्थमिति भारत ॥ ५९

तं काश्यपोऽब्रवीत् प्रीत्या नोत्कण्ठां कर्तुमर्हसि ।

---

1. ख—हि

कृतकार्यो द्विजश्रेष्ठ सद्रव्यो यास्यसे गृहान् ॥ ६०

चतुर्विधा ह्यर्थगतिर् बृहस्पतिमतं यथा ।
मित्रं विद्या हिरण्यं च बुद्धिश्चेति बुधेप्सिता ॥ ६१

प्रादुर्भूतोऽस्मि ते मित्रं सुहृत्त्वं च महत्तरम् ।
सोऽहं तथा यतिष्यामि भविष्यसि यथाऽर्थवान् ॥ ६२

ततः प्रभातसमये सुखं पृष्ट्वाऽब्रवीदिदम् ॥ ६२॥

बकः—

गच्छ सौम्य पथाऽनेन कृतकृत्यो भविष्यसि ॥ ६३

इतस्त्रियोजनं गत्वा राक्षसाधिपतिर्महान् ।
विरूपाक्ष इति ख्यातस् सखा मम महाबलः ॥ ६४

तं गच्छ द्विजमुख्य त्वं मम वाक्यप्रचोदितः ।
कामानभीप्सितांस्तुभ्यं दाता नास्त्यत्र संशयः ॥ ६५

भीष्मः—

इत्युक्तः प्रययौ राजन् गौतमो विगतक्लमः ।
फलान्यमृतकल्पानि भक्षयानो यथेष्टतः ॥ ६६

चन्दनागरुमुख्यानि यत्र क च वनानि च ।
तस्मिन् पथि महाराज सेवमानो द्रुतं ययौ ॥ ६७

ततो मनुव्रजं नाम नगरं शैलतोरणम् ।
शैलप्राकारवप्रं च शैलयन्त्रार्गलं तदा ॥ ६८

विदितश्चाभवत्तत्र राक्षसेन्द्रस्य धीमतः ।
प्रहितस्सुहृदा राजन् प्रीयतां वः प्रियोऽतिथिः ॥ ६९

ततस्तु राक्षसेन्द्रश्च सहायान् वै युधिष्ठिर ।
गौतमो नगरद्वाराच्छीघ्रमानीयतामिति ॥ ७०

तस्मात् पुरवरात्तूर्णं पुरुषाश्श्वेतवेष्टनाः ।
गौतमेत्यभिभाषन्तः पुरद्वारमथागमन् ॥ ७१

ते तमूचुर्महाराज राजप्रेष्यास्तदा द्विजम् ॥ ७१॥

राजप्रेष्याः—

त्वरस्व तूर्णमागच्छ राजा त्वां द्रष्टुमिच्छति ॥

राक्षसाधिपतिश्श्रीमान् राजधर्मेण प्रेषितः ॥ ७२॥

यदर्थमिह मां द्रष्टुं तत् क्षिप्रं संविधीयताम् ॥ ७३

भीष्मः—

ततस्स प्राद्रवद्विप्रो विस्मयाद्विगतक्लमः ।
गौतमः परमर्द्धिं तां पश्यन् परमविस्मितः ॥ ७४

तैरेव सहितो राज्ञो वेश्म तूर्णमुपाद्रवत् ।
दर्शनं राक्षसेन्द्रस्य काङ्क्षमाणो द्विजस्तदा* ॥ ७५

ततस्स विदितो राज्ञः प्रविश्य गृहमुत्तमम् ।
पूजितो राक्षसेन्द्रेण निषसादासनोत्तमे ॥ ७६

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

पृष्टश्च गोत्रचरणं स्वाध्यायं ब्रह्मचारिकम् ।
पृष्टो राज्ञा स नाज्ञासीद् गोत्रमात्रमथाब्रवीत् ॥ ७७

ततस्तं व्याजहारान्यद् गोत्रमात्रं तदा द्विजः ॥ ७७॥

ब्रह्मवर्चसहीनस्य स्वाध्यायाद्विगतस्य च ।
गोत्रमात्रविदो राजा निवासं समपृच्छत ॥ ७८॥

राक्षसः—

क्व ते निवासः कल्याण किं गोत्रा ब्राह्मणी च ते ।
तत्त्वं ब्रूहि न भीः कार्या विश्रमस्व यथासुखम् ॥ ७९॥

गौतमः—

मध्यदेशप्रसूतोऽहं वासो मे शबरालये ।
शूद्रा पुनर्भूर्भार्या मे सत्यमेतद्ब्रवीमि ते ॥ ८०॥

भीष्मः—

ततो राजा विममृशे कथं कार्यमिदं भवेत् ।
कथं वा सुकृतं मे स्याद् इति बुद्ध्याऽन्वचिन्तयत् ॥ ८१॥

राक्षसः—

अयं वै जन्मना विप्रस् सुहृत्तस्य महात्मनः ।
सम्प्रेषितश्च तेनायं काश्यपेन महात्मना ॥ ८२॥

तस्य प्रियं करिष्यामि स हि मामाश्रितस्सदा ।
भ्राता मे बान्धवश्चासौ सखा चैव प्रियो मम ॥ ८३॥

कार्तिक्यामथ भोक्तारस् सहस्रं मे द्विजोत्तमाः ।
तत्रायमपि भोक्ता तु देयमस्मै च मे धनम् ॥ ८४॥

भीष्मः—

ततस्सहस्रं विप्राणां विदुषां समलङ्कृतम् ।
स्नातानामनुलिप्तानाम् अहतक्षौमवाससाम् ॥ ८५॥

तानागतान् द्विजश्रेष्ठान् विरूपाक्षो विशां पते ।
यथार्हं प्रतिजग्राह विधिदृष्टेन कर्मणा ॥ ८६॥

बृस्यस्तेषां तु संन्यस्ता राक्षसेन्द्रस्य शासनात् ।
भूमौ वरकुशास्तीर्णाः प्रेष्यैर्भरतसत्तम ॥ ८७॥

तासु ते पूजिता राज्ञा निषण्णा द्विज[1]पुङ्गवाः ।
व्यराजन्त महाराज नक्षत्रपतयो यथा ॥ ८८॥

ततो जाम्बूनदाः पात्रीर् वज्राङ्का विमलाश्शुभाः ।
वरान्नपूर्णा विप्रेभ्यः प्रादाद्दधिघृताप्लुताः ॥ ८९॥

तस्य नित्यं ह्यमावास्यां आषाढ्यां बहवो द्विजाः ।
ईप्सितं भोजनं श्रेष्ठं लभन्ते सत्कृतं तथा ॥ ९०॥

विशेषतस्तु कार्तिक्यां द्विजेभ्यस्सम्प्रयच्छति ।
शरद्व्यपाये रत्नानि पौर्णमास्यामिति श्रुतिः ॥ ९१॥

सुवर्णं रजतं चैव मणीनथ च मौक्तिकम् ।

1. ख—सत्तमाः

वस्त्रान् महाधनांश्चैव वैडूर्याजिनराङ्कवान् ॥ १२॥
रत्नवन्ति च पात्राणि दक्षिणार्थं महायशाः ।
दत्त्वा प्राह द्विजश्रेष्ठान् विरूपाक्षो महायशाः ॥ १३॥
गृह्णीत रत्नान्येतानि [1]यथोत्साहं यथेष्टतः ॥ १४
येषु येषु च भाण्डेषु भुक्तवन्तो द्विजोत्तमाः ।
तान्येवादाय गच्छध्वं स्ववेश्मानीति भारत ॥ १५
इत्युक्तवचने तस्मिन् राक्षसेन्द्रे महात्मनि ।
यथेष्टं तानि रत्नानि जगृहुर्ब्राह्मणास्तदा ॥ १६
ततो महार्हैस्तैस्तेन रत्नैरभ्यर्चिताश्शुभैः ।
ब्राह्मणा मृष्टवसनास् सुप्रीतास्समुदोऽभवन् ॥ १७
ततस्तान् राक्षसेन्द्रस्तु द्विजानाह पुनर्वचः ।
नानादेशागतान् राजा ब्राह्मणाननुमान्य वै ॥ १८

विरूपाक्षः—

अद्यैकं दिवसं [2]विप्रा न वोऽस्तीह भयं क्वचित् ।
राक्षसेभ्यः प्रमोदध्वम् इष्टतो यात मा चिरम् ॥ १९

भीष्मः—

ततः प्रदुद्रुवुस्सर्वे विप्रसङ्घास्समन्ततः ॥ १९॥
गौतमोऽपि सुवर्णस्य भारमादाय सत्वरः ।

---

1. ख—इतः अष्टौ पादा न सन्ति 2. ख-घ—प्राप्तौ

कृच्छ्रात् समुद्वहन् [1]भारं न्यग्रोधं समुपागमत् ॥ १००॥
न्यषीदच्च परिश्रान्तः क्लान्तश्च क्षुधितश्च ह ॥ १०१

ततस्तमभ्यगाद्राजन् राजधर्मा खगोत्तमः ।
स्वागतेनाभ्यनन्दच्च गौतमं मित्रवत्सलः ॥ १०२

तस्य पक्षाग्रविक्षेपैः क्लमं व्यपनयद्बकः ।
पूजां चैवाकरोद्धीमान् भोजनं च यथाविधि ॥ १०३

ततस्तौ संविदं कृत्वा खगेन्द्रद्विजसत्तमौ ।
गौतमश्चिन्तयामास रात्रौ तस्य समीपतः ॥ १०४

हाटकस्याभिरूपस्य भारोऽयं सुमहान् मया ।
गृहीतो लोभमोहाद्वै दूरं च गमनं मम ॥ १०५

न चास्ति पथि भोक्तव्यं प्राणसन्धारणं क्वचित् ।
किं कृत्वा सुकृतं हि स्याद् इति चिन्तापरोऽभवत् ॥ १०६

ततस्स पथि भोक्तव्यं पश्यमानो न किञ्चन ।
कृतघ्नः पुरुषव्याघ्र मनसेदमचिन्तयत् ॥ १०७

गौतमः—

अयं बकपतिः पार्श्वे मांसराशिचितो महान् ।
इमं हत्वा गृहीत्वाऽस्य यास्ये मांसमिति प्रभो ॥* १०८

---

1. ख-घ—धीरो
* सर्वेषु कोशेषु अलैवाध्यायसमाप्तिर्दृश्यते

भीष्मः—

अथ तत्र महार्चिष्मान् अनलो वायुसारथिः ।
तस्याविदूरे रक्षार्थं खगेन्द्रेण कृतोऽभवत् ॥ १०९

स चापि पार्श्वे सुष्वाप विश्वस्तो बकराट् तदा ।
कृतघ्नस्तु स दुष्टात्मा तं जिघांसुरजागरत् ॥ ११०

ततोऽलातेन दीप्तेन स सुप्तं निजघान तम् ।
निहत्य च मुदा युक्तस् सोऽनुबन्धं न दृष्टवान् ॥ १११

स तं विपक्षरोमाणं कृत्वाऽग्नावपचत् तदा ।
तं गृहीत्वा सुवर्णं च ययौ दूरतरं द्विजः ॥ ११२

ततो दाक्षायणीपुत्रं नागतं तं तु भारत ।
विरूपाक्षश्चिन्तयन् वै हृदयेन विदूयता ॥ ११३
ततोऽन्यस्मिन् गतेऽप्यह्नि विरूपाक्षोऽब्रवीत् सुतम् ॥ ११३॥

राक्षसः—

न पश्ये राजधर्माणम् अद्य पुत्र खगोत्तमम् ।
स पूर्वसन्ध्यां ब्रह्माणं वन्दितुं याति नित्यदा ॥ ११४॥

मां चादृष्ट्वा कदाचित् स न गच्छति खगोत्तमः ।
द्विरात्रमुभयोस्सन्ध्योर् नाभ्यगच्छन्ममालयम् ॥ ११५॥
तस्मान्न शुद्ध्यते भावो मम स ज्ञायतां सुहृत् ॥ ११६

स्वाध्यायेन वियुक्तो हि ब्रह्मवर्चसवर्जितः ।

स गतस्तत्र मे शङ्का हन्यात् तं स द्विजाधमः ॥　११७

दुराचारस्स दुर्बुद्धिर् इङ्गितैर्लक्षितो मया ।
निष्क्रियो दारुणाकारः कृष्णो दस्युरिवाधमः ॥　११८

गौतमस्स गतस्तत्र तेनोद्विग्नं मनो मम ॥　११८॥

पुत्र शीघ्रमितो गत्वा राजधर्मनिवेशनम् ।
ज्ञायतां स विशुद्धात्मा यदि जीवति वा चिरम् ॥　११९॥

भीष्मः—

स एवमुक्तस्त्वरितो रक्षोभिस्सहितो ययौ ।
न्यग्रोधे राजधर्माणम् अपश्यन्निहतं ततः ॥　१२०॥

रुदित्वा बहुशस्तस्मै विलप्य च स राक्षसः ।
ततो रोषसमाविष्टो गौतमग्रहणाय वै ॥　१२१॥

गृहीतो गौतमः पापो [1]रक्षोभिः क्रोधमूर्च्छितैः ।
राजधर्मशरीरस्य कङ्कालं चाप्यथोद्धृतम् ॥　१२२॥

मनुव्रजं तु नगरं यातुधानास्ततो गताः ।
क्रोधरक्तेक्षणा घोरा गौतमस्य वधे धृताः ॥　१२३॥

पार्थिवस्याग्रतो न्यस्तः कङ्कालो राजधर्मणः ।
तं दृष्ट्वा विमना राजा सामात्यस्सगणोऽभवत् ॥　१२४॥

आर्तनादो महानासीद् गृहे तस्य महात्मनः ।
स्त्रीसङ्घस्य तदा राजन् निहते काश्यपात्मजे ॥　१२५॥

---

1. ख—राक्षसैः

राजा चैवाब्रवीत् पुत्रं पापोऽयं वध्यतामिति ॥ १२६

राक्षसाः—

अस्य मांसं वयं सर्वे खादिष्यामस्समागताः ।
पापकृत् पापकर्मा च पापात्मा पापमास्थितः ॥ १२७

हत एव हि पापात्मा कृतघ्नो [1]नात्र संशयः ॥ १२७॥

विरूपाक्षः—

कृतघ्नं पापकर्माणं न भक्षयितुमुत्सहे ।
दासेभ्यो दीयतामेव मित्रध्रुक् पुरुषाधमः ॥ १२८॥

भीष्मः—

दासास्सर्वे समाहूता यातुधानास्तथा परे ।
नेच्छन्ति स्म कृतघ्नं तं खादितुं पुरुषोत्तम ॥ १२९॥

शिरोभिश्च गता भूमिं महाराज न नो बलात् ।
मानार्थं जातु निर्बन्धं किल्बिषं दातुमर्हसि ॥ १३०॥

यातुधाना नृपेणोक्ताः पापकर्मा विशस्यताम् ।
भक्ष्यतां त्यज्यतां वाऽयं दर्शनान्मेऽपनीयताम् ॥ १३१॥

ततस्ते रुषिता दासाश् शूलपट्टसपाणयः ।
खण्डशो विकृतं हत्वा क्रव्याद्भ्यो [2]ह्यददंस्तदा ॥ १३२॥

क्रव्यादास्त्वपि राजेन्द्र नेच्छन्ति पिशिताशनाः ।
मृतानपि हि क्रव्यादाः कृतघ्नान् नोपभुञ्जते ॥ १३३॥

---

1. ख—नास्ति 2. घ—ह्यददुस्तदा

ब्रह्मस्वहरणे चोरे ब्रह्मघ्ने गुरुतल्पगे ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ १३४॥
मित्रद्रुहं कृतघ्नं च नृशंसं च नराधमम् ।
क्रव्यादाः क्रिमयश्चैव न खादन्ति [1]कदाचन ॥* १३५॥
विद्वान् संस्कारयामास पार्थिवो राजधर्मिणम् ।
गन्धैर्बहुभिरव्यग्रो दाहयामास तं द्विजम् ॥ १३६॥
दग्धे राक्षसराजेन खगराजे प्रतापिना ।
चितायाः पार्श्वतो दोग्ध्री सुरभिर्जीवयच्च तम् ॥ १३७॥
तस्या वक्त्राच्च्युतः फेनो दुग्धमात्रस्तदाऽनघ ।
समीरणाहृतो यातश् चितां तां राजधर्मणः ॥ १३८॥
देवराजस्ततः प्राप्तो विरूपाक्षपुरं तदा ॥ १३९
विरूपाक्षोऽपि तं शक्रम् अयाचत पुनः पुनः ।
काश्यपस्य सुतो देव भ्राता मे जीवतामिति ॥ १४०
कौशिकस्त्वब्रवीत् सर्वं प्रीयमाणः पुनः पुनः ॥ १४०॥

इन्द्रः—

ब्रह्मणा व्याहृतो रोषाद् राजधर्मा कदाचन ॥ १४१

ब्रह्मा—

यस्मात्त्वं नागतो द्रष्टुं मम नित्यं सभामिमाम् ।
तस्माद्बक गृहे हन्ता ब्राह्मणः पापबन्धनः ॥ १४२

---

1. ख—कथञ्चन

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

बद्धो भवतु घोरैश्च पाशैर्नागमयैर्भृशम् ॥ १४२॥

इन्द्रः—

एतच्छ्रुत्वा सभामध्ये तद्वाक्यं नारदेरितम् ।

मयाऽपि तव राजेन्द्र यथावदनुवर्णितम् ॥ १४३॥

तस्य देवस्य वचनाद् खगोऽयं बकराडिह ।

[1]तेनैवामृतसिक्तश्च पुनस्सञ्जीवितां बकः ॥ १४४॥

भीष्मः—

राजधर्मोऽपि तं प्राह सहस्राक्षमरिन्दम ॥ १४५

बकः—

गौरवाद्ब्राह्मणश्चासौ मुच्यतां मत्प्रियस्सखा ॥ १४५॥

भीष्मः—

तस्य वाक्यं समाज्ञाय कौशिकस्सुरसत्तमः ।

गौतमं त्वभ्यनुज्ञाय प्रीतोऽथ गमनोत्सुकः ॥ १४६॥

प्रीतितस्स गतस्सौम्य राजधर्मा स्वमालयम् ॥ १४७

नृशंसो गौतमो मुक्तो मित्रध्रुक् पुरुषाधमः ।

स भाण्डोपस्करो यातस् तत्तदा शबरालयम् ॥ १४८

तत्रासौ शबरीगेहे प्रसूतो निरयोपमे ॥ १४८॥

एष [2]शापो महांस्तत्र मुक्तस्सुरगणैस्तथा ।

विरूपाक्षमुवाचेदम् ईश्वरः पाकशासनः ॥ १४९॥

---

1. ख—अर्धषट्कं नास्ति 2. ख—सोऽपि

इन्द्रः—

ब्रह्मणा व्याहृतो रोषाद् राजधर्मा कदाचन ॥　　१५०

ब्रह्मा—

यस्मात्त्वं नागतो द्रष्टुं मम नित्यमिमां सभाम् ।
तस्माद्वको भवान् भावी धर्मशीलः परात्मवित् ॥　　१५१

आगमिष्यति ते वासं कदाचित् पापकर्मकृत् ।
शबरावासगो विप्रः कृतघ्नो वृषलीपतिः ॥　　१५२
[1]निहन्ता गौतमो मोक्षस् तदा भावीत्युवाच तम् ॥　　१५२॥

इन्द्रः—

तस्मादेव गतो लोकं ब्रह्मणः परमेष्ठिनः ।
स चापि निरयं प्राप्तो दुष्कृती कुलपांसनः ॥　　१५३॥

भीष्मः—

एतच्छ्रुत्वा महद्वाक्यं तन्मध्ये नारदेरितम् ।
मयाऽपि तव राजेन्द्र यथावदनुवर्णितम् ॥　　१५४॥

ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ।
निष्कृतिर्विहिता [2]सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥　　१५५॥

[3]कुतः कृतघ्नस्य यशः कुतस्स्थानं कुतस्सुखम् ।
अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः ॥　　१५६॥

मित्रद्रोहो न कर्तव्यः पुरुषेण विशेषतः ।

---

1. ख—यदा निहन्ता मोक्षं ते
2. ख—राजन्　　3. अ-क-घ—अर्धद्वयं नास्ति

मित्रध्रुङ् निरयं घोरं अनन्तं प्रतिपद्यते ॥ १५७॥

[1]कृतज्ञमनसा भाव्यं मित्रभावेन चानघ ।
मित्रं तत्प्रभवे सर्वं मित्रमन्यदिति स्मृतम् ॥ १५८॥

अर्थाद्वा मित्रलाभाद्वा मित्रलाभो विशिष्यते ।
[2]सुलभो मित्रतोऽर्थस्तु मित्रेण यतितुं क्षमम् ॥ १५९॥

मित्रं चाभिमतं स्निग्धं फलं चापि सतां फलम् ।
सत्कारैस्स्वजनोपेतैः पूजयेत विचक्षणः ॥ १६०॥

परित्याज्यो बुधैः पापः कदर्यः कुलपांसनः ।
मित्रद्रोही कुलाङ्गारः पापकर्मा नराधिपः ॥ १६१॥

यथावच्च सभामध्ये प्रज्ञा प्रोक्ता मयाऽनघ ।
मित्रद्रुहि कृतघ्ने च किं भूयश्श्रोतुमिच्छसि ॥ १६२॥

**वैशम्पायनः—**

एतच्छ्रुत्वा ततो वाक्यं भीष्मेणोक्तं महात्मना ।
युधिष्ठिरः प्रीतमना बभूव जनमेजय ॥ १६३॥

**इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥**
**॥ ८७ ॥ आपद्धर्मपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥**
**[ अस्मिन्नध्याये १६३॥ श्लोकाः ]**
**॥ आपद्धर्मपर्व समाप्तम् ॥**

---

1. अ-क—नास्तीदमर्धम्  2. अ-क—नास्तीदमर्धम्

## ॥ एकोनपञ्चाशदधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति उञ्छवृत्त्युपाख्यानोपोद्घातकथनम् ॥

(मोक्षधर्मपर्व)

युधिष्ठिरः—

धर्माः पितामहेनोक्ता राजधर्माश्रिताश्शुभाः ।
धर्ममाश्रमिणां श्रेष्ठं वक्तुमर्हसि [1]भारत ॥ १

भीष्मः—

सर्वत्र विहितो धर्मस् स्वर्ग्यस्सत्यफलोदयः ।
बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ॥ २

यस्मिन् यस्मिंस्तु विषये यो यो याति विनिश्चयम् ।
स तमेवाभिजानाति नान्यं भरतसत्तम ॥ ३

[2]यथा यथा च पर्येति लोकतन्त्रमसारवत् ।
तथा तथा विरागोऽत्र जायते मनुजाधिप ॥ ४

एवं व्यवस्थिते लोके बहुदोषे युधिष्ठिर ।
आत्ममोक्षनिमित्तं यद् यतेत मतिमान् नरः ॥ ५

अपि च त्वं नरव्याघ्र श्रोतुमर्हसि मे कथाम् ।
पुरा शक्रस्य कथितो नारदेन महर्षिणा ॥ ६

---

1. ख—मेऽनघ
2. ख—अर्धचतुष्टयं नास्ति　घ—चतुस्त्रिंशदर्धानि न सन्ति

सुरर्षिर्नारदो राजन् सिद्धस्त्रैलोक्यसम्मतः ।
पर्येति क्रमशो लोकान् [1]स कदाचिन्महामुनिः ॥ ७
[2]देवराजालयं गत्वा प्रत्यासन्नगतोऽभवत् ।
[3]तं कृतक्षणमासीनं पर्यपृच्छच्छचीपतिः ॥ ८

इन्द्रः—

ब्रह्मर्षे किञ्चिदाश्चर्यम् अस्ति दृष्टं त्वयाऽनघ ॥ ८॥
वद त्वमपि ब्रह्मर्षे त्रैलोक्यं सचराचरम् ।
जातकौतूहलो नित्यं सिद्धश्चरसि साक्षिवत् ॥ ९॥
न ह्यस्त्यविदितं लोके देवर्षे तव किञ्चन ।
श्रुतं वाऽप्यनुभूतं वा दृष्टं वा कथयस्व मे ॥ १०॥

भीष्मः—

तस्मै राजन् सुरेन्द्राय नारदो वदतां वरः ।
आसीनायोपसन्नाय प्रोक्तवान् विपुलां कथाम् ॥ ११॥
यथा येन च तत्त्वेन स तस्मै द्विजसत्तम ।
कथां कथितवान् पृष्टस् तथा त्वमपि मे शृणु ॥ १२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये १२॥ श्लोकाः ]

---

1. ख—वायुरव्याहतो यथा 2. ख—नास्तीदमधेम्
3. ख—स कदाचिन्महेष्वास देवराजालयङ्गतः ।
सत्कृतश्च महेन्द्रेण प्रत्यासन्नगतोऽभवत् ॥ [अधिकः पाठः]

## ॥ पञ्चाशदधिकशततमोऽध्यायः ॥

महापद्मपुरवासिना विप्रेणातिथिं प्रति सत्कारपूर्वकं प्रश्नारम्भः ॥

भीष्मः—

आसीत् किल कुरुश्रेष्ठ महापद्मे पुरोत्तमे ।
गङ्गाया दक्षिणे कूले कश्चिद्विप्रस्समाहितः ॥ १

सौम्य[1]स्सोमान्वयो वेदे गताध्वा छिन्नसंशयः ।
धर्मनित्यो जितक्रोधो नित्यतृप्तो जितेन्द्रियः ॥ २

अहिंसानिरतो नित्यं [2]सत्यस्सज्जनवत्सलः ।
न्यायप्राप्तेन वित्तेन स्वेन शीलेन चान्वितः ॥ ३

ज्ञातिसम्बन्धिविपुले पुत्रपौत्रसमन्विते ।
कुले महति विख्याते विशिष्टां वृत्तिमास्थितः ॥ ४

स पुत्रान् बहुलान् दृष्ट्वा विपुले कर्मणि स्थितः ।
[3]कुलधर्माश्रितो राजन् धर्मचर्यामना भवत् ॥ ५

ततस्स्वधर्मं वेदोक्तं धर्मशास्त्रोक्तमेव च ।
शिष्टाचीर्णं च धर्मात्मा त्रिविधं धत्त चेतसा ॥ ६

---

1. ग—सौम्यान्वये जातो जितात्मा गोत्रतो भृगुः । [ पाठान्तरम् ]
2. ग—सेव्यस्सज्जनसम्मतः
3. ग—कुले धर्मान्विते राजन् धर्मचर्यारतोऽभवत् । [ पाठान्तरम् ]

किं नु मे स्याच्छुभं कृत्वा किं क्षमं किं परायणम् ।
इत्येवं भिद्यते नित्यं न च याति विनिश्चयम् ॥ ७

तस्यैवं विद्यमानस्य [1]धर्मे परमके स्थितः ।
कदाचिदतिथिः प्राप्तो ब्राह्मणस्सुसमाहितः ॥ ८

स तस्मै सत्क्रियां चक्रे क्रियायुक्तेन हेतुना ।
विश्रान्तं चैनमासीनम् इदं वचनमब्रवीत् ॥ ९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये ९ श्लोकाः ]

---

## ॥ एकपञ्चाशदधिकशततमोऽध्यायः ॥

श्रेयस्साधनं पृष्टेनातिथिना ब्राह्मणं प्रति नानामार्गप्रदर्शनपूर्वकं स्वस्यापि संशयोत्कीर्तनम् ॥

---

ब्राह्मणः—

[2]समुत्पन्नाभिमानोऽस्मि वाङ्माधुर्येण तेऽनघ ।
मित्रतामभिपन्नस्त्वा किञ्चिद्वक्ष्यामि तच्छृणु ॥ १

गृहस्थधर्मं विप्रेन्द्र कृत्वा धर्मं गतस्त्वहम् ।

---

1. ग—धर्मं परममीप्सितः
2. ग—समुत्पन्नविधानेऽस्मिन्

धर्मं परमकं कुर्यां को हि मार्गो भवेद्द्विज ॥ २

अहमात्मानमात्मस्थम् एक [1]एवात्मनि स्थितः ।
[2]द्रष्टुमिच्छन् न पश्यामि बद्धस्साधारणैर्गुणैः ॥ ३

यावदेवानतीतं मे वयः पुत्रफलाश्रितम् ।
तावदिच्छामि पाथेयम् आदातुं पारलौकिकम् ॥ ४

तस्मिन् हि लोकसत्कारे परं पारमभीप्सतः ।
उत्पन्ना मे मतिरियं कुतो धर्ममयः प्लवः ॥ ५

समूह्यमानानि निशाम्य लोके
निरुच्यमानानि च साधकानि ।
दृष्ट्वा च धर्मध्वजकेतुमालां
प्रकीर्यमाणामुपरि प्रजानाम् ॥ ६

न मे मनो रज्जति भोगरागैर्
दृष्ट्वा गतिं प्रार्थयतः परत्र ।
तेनातिथेर्बुद्धिबलाश्रयेण
धर्मेण धर्मान् विनियुङ्क्ष्व मा त्वम् ॥ ७

भीष्मः—

सोऽतिथिर्वचनं तस्य श्रुत्वा धर्माभिलाषिणः ।
प्रोवाच वचनं श्लक्ष्णं प्राज्ञो मधुरया गिरा ॥ ८

---

1. अ-क-ख-घ--एकार्थे पथि निष्ठितम्
2. अ-क-ख-घ—कर्तुं काङ्क्षामि नेच्छामि

अतिथिः—

अहमप्यत्र मुह्यामि ममाप्येष मनोरथः ।
[1]कथं वा निश्चयं यामि बहुद्वारे[2]ऽत्र तिष्ठति ॥ ९

केचिन्मोक्षं प्रशंसन्ति केचिद्यज्ञफलं द्विजाः ।
[3]वानप्रस्थाश्रमं केचिद् गार्हस्थ्यं केचिदाश्रिताः ॥ १०

राजधर्माश्रयाः केचित् केचिदात्मफलाश्रयाः ।
गुरुचर्याश्रयाः केचित् केचि[4]द्वाक्यसमाश्रयाः ॥ ११

मातरं पितरं केचिच् छुश्रूषन्तो दिवं गताः ।
अहिंसया परे स्वर्गं सत्येन च तथाऽपरे ॥ १२

आहवेऽभिमुखाः केचिन्निहतास्त्रिदिवं गताः ।
[5]केचिदुञ्छव्रतैस्सिद्धास् स्वर्गमार्गं व्यपाश्रिताः ॥ १३

केचिदध्ययने युक्ता वेदव्रतपराश्शुभाः ।
बुद्धिमन्तो गतास्स्वर्गं तुष्टात्मानो जितेन्द्रियाः ॥ १४

आर्जवेनापरे युक्ता निहता नार्जवैर्जनैः ।
ऋजवो नाकपृष्ठे वै शुद्धात्मानः प्रतिष्ठिताः ॥ १५

---

1. अ-क-ख-घ—न च सन्निश्रयं
2. क-ज-ख-घ—त्रिविष्टपे
3. ग—बुद्धिमन्तो गतास्स्वर्गं गार्हस्थ्यं
4. ग—वाक्यं यज्ञयमाश्रितम्
5. ग—नास्तीदमर्धम्

एवं बहुविधैर्लोके धर्मद्वारैरनावृतैः ।
ममापि मतिराविद्धा [1]मेघलेखेव वायुना ॥ १६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये १६ श्लोकाः]

## ॥ द्विपञ्चाशदधिकशततमोऽध्यायः ॥



अतिथिना ब्राह्मणं प्रति श्रेयस्साधनावगमनाय पद्माख्यनाग-समीपगमनचोदना ॥

अतिथिः—

उपदेशं तु विप्रर्षे करिष्येऽहं यथागमम् ।
गुरुणा मे यथाख्यातम् अर्थतस्तच्च मे शृणु ॥ १

यत्र पूर्वातिसर्गेण धर्मे चक्रं प्रतिष्ठितम् ।
नैमिशे गोमतीतीरे तत्र नागालयं महत् ॥ २

समग्रैस्त्रिदशैर्यत्र इष्टमासीद् द्विजर्षभ ।
यत्रेन्द्रातिक्रमं चक्रे मान्धाता राजसत्तमः ॥ ३

कृताधिवासो धर्मात्मा तत्र चक्षुश्श्रवा महान् ।

1. ग—धूमरेखेव

महापद्मो महाभागः पद्म इत्येव विश्रुतः ॥ ४

स वाचा कर्मणा चैव मनसा च द्विजर्षभ ।
प्रसादयति भूतानि त्रिविधे वर्त्मनि स्थितः ॥ ५

साम्ना दानेन भेदेन दण्डेनेति चतुर्विधे ।
विषयस्थं जनं स्वं च यथा न्यायेन रक्षति ॥ ६

तमुपाक्रम्य विधिना प्रष्टुमर्हसि काङ्क्षितम् ॥ ६॥

स ते परमकान् धर्मान् न मिथ्या दर्शयिष्यति ।
स हि सर्वातिथिर्नागो बुद्धिशास्त्रविशारदः ॥ ७॥

गुणैरनवमैर्युक्तस् समस्तैराभिकामिकैः ।
प्रकृत्या नित्यसफलो नित्यमध्ययने रतः ॥ ८॥

तपोदमाभ्यां संयुक्तो वृत्तेनानुपमेन च ।
यज्वा दानरुचिः क्षान्तो वृत्ते च परमे स्थितः ॥ ९॥

सत्यवागनसूयुश्च शीलवानिति विश्रुतः ॥ १०

शेषान्नभोक्ता वचनानुकूलो
हितो जवोत्सृष्टकृताकृतज्ञः ।
अवैरकृद्भूतहितेऽभियुक्तो
गङ्गाह्रदाम्भोऽभिजनोपपन्नः ॥ ११

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[अस्मिन्नध्याये ११ श्लोकाः]

## ॥ त्रिपञ्चाशदधिकशततमोऽध्यायः ॥

ब्राह्मणेन धर्मावगतये नागगृहं प्रति गमनम् ॥

ब्राह्मणः—

अतिभारोद्यतस्येव भारापनयनं महत् ।
पर्याश्वासकरं वाक्यम् इदं मे भवतश्श्रुतम् ॥ १

अध्वक्लान्तस्य शयनं स्थानक्लान्तस्य चासनम् ।
तृषितस्येव पानीयं क्षुधितस्येव भोजनम् ॥ २

ईप्सितस्येव सम्प्राप्तिर् अर्थस्य समयेऽतिथेः ।
[1]एषितस्यात्मजे काले वृद्धस्येव सुतोद्भवः ॥ ३

मनसा चिन्तितस्येव प्रीतिस्निग्धस्य दर्शनम् ।
प्रह्लादयति मे वाक्यं भवता यदुदीरितम् ॥ ४

दत्तचक्षुरिवाकाशे पश्यामि विमृशामि च ।
प्रज्ञानवचनाद्योऽयम् उपदेशो हि मे कृतः ॥ ५

बाढमेवं करिष्यामि यथा मा भाषते भवान् ।
इहेमां रजनीं साधो निवसस्व मया सह ॥ ६

प्रभाते यास्यति भवान् पर्याश्वस्तस्सुखोषितः ।
असौ हि भगवान् सूर्यो मन्दरश्मिरवाङ्मुखः ॥ ७

1. ग—शोकदग्धात्मनः काले वृद्धस्येव सुतो यथा । [ पाठान्तरम् ]

भीष्मः—

ततस्तेन कृतातिथ्यस् सोऽतिथिश्शत्रुसूदन ।
उवास किल तां रात्रिं सह तेन द्विजेन वै ॥ ८

तत्तच्च धर्मसंयुक्तं तयोः कथयतोस्तदा ।
व्यतीता सा निशा कृत्स्ना सुखेन दिवसोपमा ॥ ९

ततः प्रभाते प्रययावतिथिस्तेन पूजितः ।
ब्राह्मणेन यथाशक्त्या स्वधर्ममभिकाङ्क्षता ॥ १०

ततस्स विप्रः कृतधर्मनिश्चयः
कृताभ्यनुज्ञस्स्वजनेन धर्मवित् ।
यथोपदिष्टं भुजगेन्द्रसंश्रयं
जगाम काले सुकृतैकनिश्चयः ॥ ११

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये ११ श्लोकाः]

---

## ॥ चतुःपञ्चाशदधिकशततमोऽध्यायः ॥

ब्राह्मणेन नागीं प्रति प्रवासिनो नागाय स्वागमननिवेदननिदेशपूर्वकं नदीपुलिनं प्रति गमनम् ॥

भीष्मः—

स वनानि विचित्राणि तीर्थानि च सरांसि च ।
अभिगच्छन् क्रमेणाथ कञ्चिन्मुनिमुपस्थितः ॥ १

तं स तेन यथोद्दिष्टं नागं विप्रेण वै द्विजः ।
पर्यपृच्छद्यथान्यायं श्रुत्वैव च जगाम सः ॥ २

सोऽभिगम्य यथाख्यातं नागायतनमर्थवित् ।
प्रोक्तवानहमस्मीति भोश्शब्दालङ्कृतं वचः ॥ ३

ततस्तस्य वचश्श्रुत्वा रूपिणी धर्मवत्सला ।
दर्शयामास तं विप्रं नागपत्नी पतिव्रता ॥ ४

सा तस्मै विधिवत् पूजां चक्रे धर्मपरायणा ।
स्वागतेनासनं दत्त्वा किं करोमीति चाब्रवीत् ॥ ५

ब्राह्मणः—

विश्रान्तोऽभ्यर्चितश्चास्मि भवत्या श्लक्ष्णया गिरा ।
द्रष्टुमिच्छामि भवति तदेवं नागसत्तमम् ॥ ६

एतद्धि परमं कार्यम् एतन्मे फलमीप्सितम् ।

अनेनार्थेन चास्म्यद्य सम्प्राप्तः पन्नगालयम् ॥ ७

नागभार्या—

आर्ये सूर्यरथं वोढुं गतोऽर्यो मे सदारकः ।
सप्ताष्टभिर्दिनैर्विप्र दर्शयिष्यत्यसंशयम् ॥ ८

एतद्विदितमार्यस्य विवासे कारणं मम ।
भर्तुर्भवति किञ्चान्यत् क्रियतां तद्वदस्व मे ॥ ९

ब्राह्मणः—

अनेन निश्चयेनाहं साध्वि सम्प्राप्तवानिह ।
प्रतीक्षन्नागमं देवि वत्स्याम्यस्मिन् महावने ॥ १०

सम्प्राप्तस्यैव चाव्यग्रम् आवेद्योऽहमिहाग्रतः ।
ममाभिगमनं प्राप्तो वाच्यश्च वचनं त्वया ॥ ११

अहमप्यत्र वत्स्यामि गोमत्याः पुलिने शुभे ।
कालं परिमिताहारो यथोक्तं परिपालयन् ॥ १२

भीष्मः—

ततस्स विप्रस्तां नागीं समाधाय पुनः पुनः ।
तदेव पुलिनं नद्याः प्रययौ ब्राह्मणर्षभः ॥ १३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये १३ श्लोकाः]

## ॥ पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥



पुलिनवासिना ब्राह्मणेन स्वस्य फलाद्याहारं प्रार्थयतां नागीयानामवधिनिर्देशपूर्वकं प्रतिनिवर्तनम् ॥

भीष्मः—

अथ तेन नरश्रेष्ठ ब्राह्मणेन तपस्विना ।
निराहारेण वसता दुःखितास्ते भुजङ्गमाः ॥ १

सर्वे सम्भूय सहितास् तस्य नागस्य बान्धवाः ।
भ्रातरस्तनया भार्या ययुस्तं ब्राह्मणं प्रति ॥ २

तेऽपश्यन् पुलिने तत्र विविक्ते नियतव्रतम् ।
तमासीनं निराहारं द्विजं जप्यपरायणम् ॥ ३

ते सर्वे समभिक्रम्य विप्रमभ्यर्च्य चासकृत् ।
ऊचुर्वाक्यमसन्दिग्धम् आतिथेयस्य बान्धवाः ॥ ४

नागाः—

षष्ठो हि दिवसस्तेऽद्य प्राप्तस्येह तपोधन ।
न चाभिलषसे किञ्चिद् आहारं धर्मवत्सल ॥ ५

अस्मानभिगतश्चासि वयं च त्वामुपस्थिताः ।
कार्यं चातिथ्यमस्माभिर् वयं सर्वे कुटुम्बिनः ॥ ६

मूलं फलं वा पर्णं वा [1]पयो वा द्विजसत्तम ।
आहारहेतोरन्नं वा भोक्तुमर्हसि ब्राह्मण ॥ ७

---

1. ग—यद्वान्यद्वि

त्यक्ताहारेण भवता वने निवसता सता ।
बालवृद्धमिदं सर्वं पीड्यते धर्मसङ्करात् ॥ ८

[1]अनुग्रहार्थमस्माकम् आहारं कर्तुमर्हसि ।
अनश्नति त्वयि ब्रह्मन् गच्छेम नरकं वयम् ॥ ९

न हि नो भ्रूणहा कश्चिद् राजवध्योऽनृतोऽपि वा ।
पूर्वाशी वा कुले ह्यस्मिन् देवतातिथिबन्धुषु ॥ १०

ब्राह्मणः—

उपदेशेन युष्माकम् आहारोऽयं मया वृतः ।
द्विरूनं दशरात्रं वै नागस्यागमनं प्रति ॥ ११

यद्यष्टरात्रे निर्याते नागमिष्यति पन्नगः ।
तदाऽऽहारं करिष्यामि तन्निमित्तमिह व्रतम् ॥ १२

कर्तव्यो न च सन्तापो गम्यतां च यथागतम् ।
तन्निमित्तं व्रतं बद्धं नैत[2]द्भेत्तुमिहार्हथ ॥ १३

भीष्मः—

तेन ते समनुज्ञाता ब्राह्मणेन भुजङ्गमाः ।
स्वमेव भवनं जग्मुर् अकृतार्था नरर्षभ ॥ १४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[ अस्मिन्नध्याये १४ श्लोकाः ]

---

1. घ—नास्तीदमर्धम् 2. ग—च्छेत्तु

## ॥ षट्पञ्चाशदधिकशततमोऽध्यायः ॥

नागपत्न्या प्रवासादागतं स्वभर्तारं प्रति ब्राह्मणवचननिवेदनम् ॥

भीष्मः—

अथ काले बहुतिथे पूर्णे प्राप्तो भुजङ्गमः ।
दत्ताभ्यनुज्ञस्स्वं वेश्म कृतकर्मा विवस्वतः ॥ १

तं भार्या समभिक्रामत् पादशौचादिभिर्गुणैः ।
उपासीनां च तां साध्वीं पन्नगः पर्यपृच्छत ॥ २

नागः—

अपि त्वमसि कल्याणि देवतातिथिभोजने ।
पूर्वयुक्तेन विधिना युक्ता युक्तेन मत्समम् ॥ ३

[1]अपि त्वमसि सुश्रोणि स्त्रीबुद्ध्या मार्दवीकृता ।
मद्वियोगेन सुश्रोणि वियुक्ता धर्मसेतुना ॥ ४

नागी—

शिष्याणां गुरुशुश्रूषा विप्राणां वेदधारणम् ।
भृत्यानां स्वामिवचनं राज्ञां लोकानुपालनम् ॥ ५

सर्वभूतपरित्राणं [2]क्षत्रधर्म इहोच्यते ।
[3]वैश्यानां यज्ञसंवृत्तिर् आतिथेयसमन्विता ॥ ६

---

1. अ-क-ख-घ—न खल्वसि कृतार्थे वः

2. ग—क्षत्रियाणां प्रशस्यते 3. ग—सर्वेषां चैव वर्णानामाति

विप्रक्षत्रियवैश्यानां शुश्रूषा शूद्रकर्म तत् ।
गृहस्थधर्मो नागेन्द्र सर्वभूतहितैषिता ॥ ७

नियताहारता नित्यं व्रतचर्या यथाक्रमम् ।
धर्मो हि धर्मसम्बन्धाद् इन्द्रियाणां विशोषणात् ॥ ८

अहं कस्य कुतो वाऽहं कः किं मम भवेदिति ।
प्रयोजनमतिर्नित्यम् एवं मोक्षाश्रमो भवेत् ॥ ९

पतिव्रतात्वं भार्यायाः परमो धर्म उच्यते ।
तवोपदेशान्नागेन्द्र तच्च तत्त्वेन वेद्मि वै ॥ १०

साऽहं धर्मं विजानन्ती धर्मनित्ये त्वयि स्थिते ।
सत्पथं कथमुत्सृज्य यास्यामि विपथेन वै ॥ ११

देवानतु महाभाग धर्मचर्या न हीयते ।
अतिथीनां च सत्कारे नित्ययुक्ताऽस्म्यतन्द्रिता ॥ १२

सप्ताष्टदिवसास्त्वद्य विप्रस्येहागतस्य वै ।
स च कार्यं न मे ख्याति दर्शनं तव काङ्क्षते ॥ १३

गोमत्यास्त्वेष पुलिने त्वद्दर्शनसमुत्सुकः ।
आसीनो वर्तयन् ब्रह्म ब्राह्मणस्संशितव्रतः ॥ १४

अहं त्वनेन नागेन्द्र सामपूर्वं समाहिता ।
प्रस्थाप्यो मत्सकाशं स सम्प्राप्तो भुजगोत्तमः ॥ १५

एतच्छ्रुत्वा महाप्राज्ञ तत्र वा गन्तुमर्हसि ।
दातुमर्हसि वा तस्य दर्शनं दर्शनार्थिनः ॥ १६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥
॥ ८८ ॥मोक्षधर्मपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये १६ श्लोकाः]

---

## ॥ सप्तपञ्चाशदधिकशततमोऽध्यायः ॥

ब्राह्मणसन्देशश्रवणरुष्टेन नागेन पत्नीसुवाक्येन रोषत्यागपूर्वकं ब्राह्मणं प्रति प्रस्थानम् ॥

---

नागः—

अथ ब्राह्मणरूपेण कं तं समनुपश्यसि ।
मानुषं केवलं विप्रं देवं वाऽथ शुचिस्मिते ॥ १

को हि मां मानुषश्शक्तो द्रष्टुकामो यशस्विनि ।
सन्दर्शनरुचिर्वाक्यम् आज्ञापूर्वं वदिष्यति ॥ २

सुरासुरगणानां च देवर्षीणां च भामिनि ।
ननु नागा महावीर्यास् सौरसेयास्तरस्विनः ॥ ३

वन्दनीयाश्च वरदा वयमप्यनपायिनः ।
मानुषाणां विशेषेण धनाध्यक्षा इति श्रुतिः ॥ ४

नागी—

आर्जवेनाभिजानामि नासौ देवोऽनिलाशन ।

[1]एकं त्वस्य विजानामि भक्तिमान् न च रोषणः ॥ ५

[2]स हि कार्यान्तराकाङ्क्षी जलेप्सुश्चातको यथा ।

वर्षं वर्षप्रियः पक्षी दर्शनं तव काङ्क्षते ॥ ६

न हि त्वा दैवतं किञ्चिद् विघ्नितुं प्रतिपालयेत् ।

तुल्येऽप्यभिजने जातो न कश्चित् पर्युपासते ॥ ७

तद्रोषं सहजं त्यक्त्वा त्वमेनं द्रष्टुमर्हसि ।

आशाच्छेदेन तस्यार्य नात्मानं दग्धुमर्हसि ॥ ८

आशया ह्यभिपन्नानाम् [3]अकृत्वाऽश्रुप्रमार्जनम् ।

राजा वा राजपुत्रो वा भ्रूणहत्यैव युज्यते ॥ ९

[4]सङ्कल्पविहितं त्वर्थं पूरयित्वाऽनिलाशन ।

अर्थिनां परमं लोकं यशश्चाग्र्यं समश्नुते ॥ १०

प्रार्थितार्थाभिहन्ता ते मा भूत् कश्चित् कुलेऽनघ ।

सामर्थ्ये सति नागेन्द्र नरके स हि मज्जति ॥ ११

[5]मौनेनाज्ञाफलावाप्तिर् दानेन च यशो महत् ।

---

1. ग—द्विजानामिह भक्तश्च कालवित् कलिरोषणः । [ पाठान्तरम् ]
2. ग—.....................भक्तिमानचिरेक्षणे [ अधिकः पाठः ]
3. ग—अकृत्वा तु प्रयोजनम्
4. ग—अर्धचतुष्टयं नास्ति
5. ग—मौनज्ञानफलावाप्तिर्दानेनाध्ययनेन च । [ पाठान्तरम् ]

वाग्मित्वं सत्यवाक्येन परत्र च महीयते ॥ १२

भूमिप्रदानेन [1]महीं लभत्याश्रयसम्मिताम् ।
नष्टस्यार्थस्य सम्प्राप्तिं कृत्वा [2]लाभमुपाश्नुते ॥ १३

अभिप्रेतामसङ्क्लिष्टां कृत्वा कामवतः क्रियाम् ।
न याति नरकं कश्चिद् इति धर्मविदो विदुः ॥ १४

पत्न्युः—

अभिमानेन मानो मे ज्ञातिदोषो हि मे महान् ।
रोषस्सङ्कल्पितस्साध्वि दग्धो वागग्निना त्वया ॥ १५

न च रोपादहं साध्वि पश्येयमधिकं तमः ।
यस्य वै सक्ततां यान्ति विशेषेण भुजङ्गमाः ॥ १६

रोषस्य हि वशं गत्वा दशग्रीवः प्रतापवान् ।
तथा शक्रप्रतिस्पर्धी हतो रामेण संयुगे ॥ १७

अन्तःपुरगतं वत्सं श्रुत्वा रामेण निर्हृतम् ।
[3]धर्षणाद्रोषदिग्धेन कार्तवीर्यसुता हताः ॥ १८

जामदग्न्येन रामेण सहस्रनयनोपमः ।
संयुगे निहतो रोषात् कार्तवीर्यो महाबलः ॥ १९

[4]तथा शक्रप्रतिस्पर्धी रोषस्य वशमागतः ।

---

1. ग—गतिं लभत्याश्रमसम्पदा　　2. ग—फलमुपाश्नुते
3. ग—दर्पेण रोषसंविग्नाः　　4. ग—अर्धत्रयं नास्ति

मान्धाता निहतो युद्धे [1]लवणेन तु रक्षसा ॥ २०

तदेष तपसां शत्रुश्श्रेयसां विनिपातकः ।
[2]निगृहीतो मया रोषश्श्रुत्वैव वचनं तव ॥ २१

आत्मानं च विशेषेण प्रशंसाम्यनपायिनि ॥ २१॥

अस्य मे त्वं विशालाक्षि भार्या गुणसमन्विता ।
एष तत्रैव गच्छामि यत्र तिष्ठति स द्विजः ॥ २२॥

सर्वथा चोक्तवान् कार्यं नाकृतार्थः प्रयास्यति ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये २३ श्लोकाः]

---

## ॥ अष्टपञ्चाशदधिकशततमोऽध्यायः ॥

नागब्राह्मणयोस्संलापः ॥

---

भीष्मः—

स पन्नगपतिस्तत्र प्रययौ ब्राह्मणं प्रति ।
तमेव मनसा ध्यायन् [3]कार्यवत्ता विचिन्तयन् ॥ १

तमभिक्रम्य नागेन्द्रो मतिमान् स नरेश्वर ।

---

1. अ-क-ग-घ—रसनाम्ना
2. ग—करोमि भद्रे किं रोषं
3. ग—कार्यं गन्ता विचारयन्

प्रोवाच मधुरं वाक्यं प्रकृत्या धर्मवत्सलः ॥ २

नागः—

भो भो सौम्याभिभाषे त्वां न रोषं कर्तुमर्हसि ।
इह त्वमसि सम्प्राप्तः कस्यार्थे किं प्रयोजनम् ॥ ३

आभिमुख्यादभिक्रम्य स्नेहात् पृच्छामि ते द्विज ।
विविक्ते गोमतीतीरे कं वा त्वं पर्युपाससे ॥ ४

ब्राह्मणः—

धर्मारण्यं हि मां विद्धि नागं द्रष्टुमिहागतः ।
पद्मनाभं द्विजश्रेष्ठ तत्र मे कार्यमाहितम् ॥ ५

तस्य चेह न सान्निध्यं श्रुतवानस्मि तं गतम् ।
आयान्तं च प्रतीक्षामि पर्जन्यमिव कर्षकः ॥ ६

तस्य चाक्लेशकरणे स्वस्तिकार्यसमन्वितम् ।
वर्तयाम्यमृतं ब्रह्म योगयुक्तो निरामयः ॥ ७

नागः—

अहो कल्याणवृत्तस्त्वं साधु सज्जनवत्सलः ।
[1]तमद्य त्वं महाभाग परं स्नेहेन पश्यसि ॥ ८

अहं स नागो विप्रर्षे यथा मां विन्दते भवान् ।
आज्ञापय यथास्वैरं किं करोमि प्रियं तव ॥ ९

भवन्तं स्वजनादस्मि सम्प्राप्तं श्रुतवानिह ।

---

1. ग—श्रद्धाढ्य

ततस्त्वां स्वयमेवाहं द्रष्टुमभ्यागतो द्विज ॥ १०

सम्प्राप्तश्च भवानद्य कृतार्थः प्रतियास्यति ।
विस्रब्धो मां द्विजश्रेष्ठ विषये योक्तुमर्हसि ॥ ११

वयं हि भवता सर्वे गुणक्रीता विशेषतः ।
यस्त्वमात्महितं त्यक्त्वा मामेवेहानुरुन्धसे ॥ १२

ब्राह्मणः—

आगतोऽहं महाप्राज्ञ भवद्दर्शनलालसः ।
कश्चिदर्थे[1]मनर्थज्ञः प्रष्टुकामो भुजङ्गम ॥ १३

[2]अयं ह्यात्मा ममात्मस्थो मार्गते त्वसमागमम् ।
[3]वासार्थिना कृतात्मानं चलचित्तमुपासते ॥ १४

प्रकाशितस्त्वं स्वगुणैर् यशोगर्भगभस्तिभिः ।
शशाङ्ककरसंस्पर्शैर् हृद्यैरात्मप्रकाशिभिः ॥ १५

तस्य मे प्रश्नमुत्पन्नम् अद्य छिन्ध्यनिलाशन ।
पश्चात् कार्यं वदिष्यामि श्रोतुमर्हति मे भवान् ॥ १६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि दशमोऽध्यायः ॥ १० ॥
[ अस्मिन्नध्याये १६ श्लोकाः ]

---

1. ग—मभिलप्न
2. ग—अहमात्मानमात्मस्थो मार्गमाणो मनोगतम् । } [ पाठान्तरम् ]
3. ग—वासार्थिनं महाप्राज्ञ चलचित्तमुपास्महे ।

## ॥ एकोनषष्ट्यधिकशततमोऽध्यायः ॥



आश्चर्यकथनं प्रार्थितेन नागेन सूर्यमण्डले तत्तुल्यतेजोन्तरप्रवेश-दर्शनकथनम् ॥



ब्राह्मणः—

विवस्वतो गच्छतः पर्ययेण
वोढुं भवांस्तं रथमेकचक्रम् ।
आश्चर्यभूतं यदि तत्र किञ्चिद्
दृष्टं त्वया शंसितुमर्हसि त्वम् ॥ १

नागः—

[1]आश्चर्याणामनेकानां प्रतिष्ठा भगवान् रविः ।
यतो भूताः प्रजायन्ते सर्वे त्रैलोक्यसम्मताः ॥ २

यस्य रश्मिसहस्रेषु शाखास्विव विहङ्गमाः ।
वसन्त्याश्रित्य मुनयस् संसिद्धा दैवतैस्सह ॥ ३

यतो वायुर्विनिस्सृत्य सूर्यरश्म्याश्रितो महान् ।
विजृम्भत्यम्बरे विप्र किमाश्चर्यमतः परम् ॥ ४

[2-3]शुक्लो नामासितः पादो यस्य वारिधरोदरैः ।

---

1. ग—अर्धत्रयं नास्ति
2. ग—यस्य तेजोविशुष्केषु नित्यमात्मा प्रतिष्ठितः । [अधिकः पाठः]
3. ख—अर्धद्वयं नास्ति

पयस्सृजति वर्षासु किमाश्चर्यतरं ततः ॥ ५

योऽष्टमासांस्तु शुचिना वारुणेनोज्झितं पयः ।
पर्यादत्ते पुनः काले किमाश्चर्यतरं ततः ॥ ६

[1]यस्य तेजोविशुष्केषु नित्यमात्मा प्रतिष्ठितः ।
यतो बीजं मही चेयं धार्यते सचराचरम् ॥ ७

यत्र देवो महाबाहुश् शाश्वतः परमोऽक्षरः ।
अनादिनिधनो विप्र किमाश्चर्यतरं ततः ॥ ८

आश्चर्याणामिहाश्चर्यम् इदमेकं तु मे शृणु ॥ ८॥

विमले यन्मया दृष्टम् अम्बरे सूर्यसंश्रयात् ।
पुरा मध्याह्नसमये लोकं तपति भास्करे ॥ ९॥

प्रत्यादित्यप्रतीकाशस् सर्वतः प्रत्यदृश्यत ॥ १०

स लोकांस्तेजसा सर्वान् स्वभासा भासयन्निव ।
[2]हुताहुतिरिव ज्योतिर् व्याप्य तेजो मरीचिभिः ॥ ११
अनिर्देश्येन रूपेण द्वितीय इव भास्करः ॥ ११॥

तस्याभिगमनप्राप्तौ हस्तो दत्तो विवस्वता ।
तेनापि दक्षिणो हस्तो दत्तः प्रत्यर्चनार्थिना ॥ १२॥

ततो भित्त्वेव गगनं प्रविष्टो रविमण्डलम् ।

---

1. ग—इदमर्धं नास्ति
2. ग—आदित्याभिमुखोऽभ्येति गगनं पाटयन्निव । [अधिकः पाठः]

एकीभूतं च तत्तेजः क्षणेनादित्यतां गतम् ॥　　१३॥

तत्र नस्संशयो जातस् तयोस्तेजस्समागमे ।
अनयोः को भवेत् सूर्यो रथस्थो योऽयमागतः ॥　　१४॥

ते वयं जातसन्देहाः पर्यपृच्छामहे रविम् ।
क एष दिवमाक्रम्य गतस्सूर्य इवापरः ॥　　१५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[ अस्मिन्नध्याये १५॥ श्लोकाः ]

## ॥ षष्ट्यधिकशततमोऽध्यायः ॥



नागेन ब्राह्मणं प्रति सूर्येण स्वं प्रति तद्बिम्बप्रविष्टतेजस उञ्छवृत्तिमुनिस्वरूपत्वकथनकथनम् ॥



सूर्यः—

नैष देवो न गन्धर्वो नासुरो न च पन्नगः ।
उञ्छवृत्तिव्रते सिद्धो मुनिस्त्वेष दिवं गतः ॥　　१

एष मूलफलाहारश् शीर्णपर्णाशनस्तथा ।
अब्भक्षो वायुभक्षश्च आसीद्विप्रस्समाहितः ॥　　२

ऋचश्चानेन विप्रेण संहितान्तरभिष्टुताः ।

स्वर्गद्वारकृतोद्योगो येनासौ त्रिदिवं गतः ॥ ३
असन्निधिरनाकाङ्क्षी नित्यमुञ्छसिलाशनः ।
सर्वभूतहिते युक्तो ह्येष विप्रो भुजङ्गम ॥ ४
[1]एष स्वेन प्रभावेण सम्प्राप्तो निर्मलां गतिम् ।
सुकृतेनास्य यत्नेन स्पृहयन्ते भवद्विधाः ॥ ५
न हि देवा न गन्धर्वा नासुरा न च पन्नगाः ।
प्रभवन्तीह भूतानां प्राप्तानां परमां गतिम् ॥ ६

नागः—

एतदेवंविधं दृष्टम् आश्चर्यं तत्र मे द्विज ॥ ६॥
संसिद्धो मानुषः कश्चिद् योऽसौ सिद्धगतिं गतः ।
सूर्येण सहितो ब्रह्मन् पृथिवीं परिवर्तते ॥ ७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[अस्मिन्नध्याये ७॥ श्लोकाः]

---

1. ग—अर्धद्वयं नास्ति

## ॥ एकषष्ट्यधिकशततमोऽध्यायः ॥

ब्राह्मणेन नागामन्त्रणपूर्वकमिष्टदेशं प्रति प्रस्थानम् ॥

ब्राह्मणः—

आश्चर्यं नात्र सन्देहस् सुप्रीतोऽस्मि भुजङ्गम ।
अन्वर्थोपगतैर्वाक्यैः पन्थानं चास्मि दर्शितः ॥ १

स्वस्ति तेऽस्तु गमिष्यामि साधो भुजगसत्तम ।
स्मरणीयोऽस्मि भवता सम्प्रेषणनियोजनैः ॥ २

नागः—

अनुक्त्वा मद्गतं कार्यं क्वेदानीं प्रस्थितो भवान् ।
उच्यतां द्विज यत् कार्यं यदर्थं त्वमिहागतः ॥ ३

उक्तानुक्ते तु ते कार्ये समामन्त्र्य द्विजर्षभ ।
मया प्रत्यभ्यनुज्ञातस् ततो यास्यसि ब्राह्मण ॥ ४

न हि मां केवलं दृष्ट्वा त्यक्त्वा प्रणयवानिह ।
[1-2]गन्तुमर्हसि विप्रर्षे वृक्षमूलगतो यथा ॥ ५

त्वयि चाहं द्विजश्रेष्ठ भवान् मयि न संशयः ।
लोकोऽयं भवतस्सर्वः का चिन्ता मयि तेऽनघ ॥ ६

---

1. ग—नातिरिक्तस्त्वया देहस् सर्वदेव यथातथम् ।
ब्राह्मणः—
य एवाहं स एव त्वम् एवमेत्र भुजङ्गम ।   [ अधिकः पाठः ]
2. ग—अर्धद्वयं नास्ति

ब्राह्मणः—

[1]एवमेतन्महाप्राज्ञ विज्ञानार्थं भुजङ्गम ।
नातिरिक्तास्त्वया देवा सर्वथेह यथातथम् ॥ ७

एष चाहं स एव त्वम् एवमेव भुजङ्गम ।
अहं भवांश्च भूताश्च सर्वे सर्वत्रगास्सदा ॥ ८

आसीत्तु मे भोगिपते संशयः पुण्यसञ्चये ॥ ८॥

योऽहमुञ्छव्रतं साधो चरिष्ये धर्मदर्शिभिः ।
एष मे निश्चयस्साधो कृतः कारणवत्तरः ॥ ९॥
आमन्त्रयामि भद्रं ते कृतार्थोऽस्मि भुजङ्गम ॥ १०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
['अस्मिन्नध्याये १० श्लोकाः ]

---

1. अ-ग—अर्धत्रयं नास्ति

## ॥ द्विषष्टयधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रत्युञ्छवृत्त्युपाख्यानोपदेशपरम्पराक्रमकथनपूर्वकमुञ्छवृत्तिब्राह्मणस्य वनप्रवेशकथनम् ॥

भीष्मः—

समामन्त्र्योरगश्रेष्ठं ब्राह्मणः कृतनिश्चयः ।
दीक्षाकाङ्क्षी ततो राजन् भार्गवं च्यवनं श्रितः ॥ १

स तेन कृतसंस्कारो धर्ममेवावजज्ञिवान् ।
तत्रैव च कथामेतां राजन् कथितवांस्तदा ॥ २

भार्गवेणापि राजेन्द्र जनकस्य निवेशने ।
कथैषा कथिता पुण्या नारदाय महात्मने ॥ ३

नारदेनापि राजेन्द्र देवेन्द्रस्य निवेशने ।
कथिता वदतां श्रेष्ठ पृष्टेनाक्लिष्टकर्मणा ॥ ४

देवराजेन च पुरा कथैषा कथिता विभो ।
समस्तेभ्यः प्रशस्तेभ्यो [1]वसुभ्यो वसुधाधिप ॥ ५

यदा च मम रामेण युद्धमासीत् सुदारुणम् ।
वसुभिश्च तदा राजन् कथेयं कथिता मम ॥ ६

पृच्छमानाय तत्त्वेन मयाऽप्यद्य शुभा तव ।

1. ग—मनुभ्यो

कथेयं कथिता पुण्या धर्म्या धर्मभृतां वर ॥ ७

तदेष परमो धर्मो यन्मां पृच्छसि भारत ।
असन्निधिरनाकाङ्क्षी धर्मार्थकरणो नृप ॥ ८

स च किल कृतनिश्चयो द्विजातिर्
भुजगपतिप्रतिदेशितार्थकृत्यः ।
यमनियमसमाहितो वनान्तं
परिगणितोञ्छसिलाशनप्रविष्टः ॥ ९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
[अस्मिन्नध्याये ९ श्लोकाः]
(उञ्छवृत्त्युपाख्यानं समाप्तम्)

---

## ॥ त्रिषष्ट्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति विप्रसेनजित्संवादानुवादः ॥ १ ॥ विप्रेण सेनजितं प्रति पिङ्गलोपाख्यानकथनम् ॥ २ ॥

युधिष्ठिरः—

[1–2]नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।
यया बुद्ध्या नुदेच्छोकं तां मे ब्रूहि पितामह ॥ १

भीष्मः—

नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।
अहो दुःखमिति ध्यायञ् छोकस्यापचितिं चरेत् ॥ २

युधिष्ठिरः—

1. अ—धर्माः पितामहेनोक्ता राजधर्माश्रिताश्शुभाः ।
धर्ममाश्रमिणां श्रेष्ठं वक्तुमर्हसि पार्थिव ॥

भीष्मः—

सर्वत्र विहितो धर्मस्स्वर्ग्यस्सत्यफलोदयः ।
बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ॥
यस्मिन् यस्मिंस्तु विषये यो यो याति विनिश्चयम् ।
स तमेवाभिजानाति नान्यं भरतसत्तम ॥
यथा यथा विपर्येति लोकतन्त्रमसारवत् ।
तथा तथा विरागोऽत्र जायते नात्र संशयः ॥
एवं व्यवस्थिते लोके बहुदोषे युधिष्ठिर ।
आत्ममोक्षनिमित्तं वै यतेत मतिमान् नरः ॥　　[अधिकः पाठः]

2. ख—अर्धद्वयं नास्ति

[1]यथा यथा विपर्येति लोकतन्त्रमसारवत् ।
तथा तथा विरागोऽत्र जायते नात्र संशयः ॥ ३

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
यथा सेनजितं विप्रः कश्चिदित्यब्रवीत् सुहृत् ॥ ४

पुत्रशोकाभिसन्तप्तं राजानं शोकविह्वलम् ।
विषण्णवदनं दृष्ट्वा विप्रो वचनमब्रवीत् ॥ ५

विप्रः—

किं नु मुह्यसि मूढस्सन् शोच्यः किमनुशोचसि ।
यदा त्वामपि शोचन्तश् शोच्या यास्यन्ति तां गतिम् ॥ ६

त्वं चाहं चैव ये चान्ये त्वां राजन् पर्युपासते ।
सर्वे तत्र गमिष्यामो यतश्चैवागता वयम् ॥ ७

सेनजित्—

का बुद्धिः किं तपो विप्र कस्समाधिस्तपोधन ।
किं ज्ञानं किं श्रुतं वा ते यत् प्राप्य न विषीदसि ॥ ८

विप्रः—

हृष्यन्तमवसीदन्तं सुखदुःखविपर्यये ।
आत्मानमनुशोचामो ममैष हृदि संस्थितः ॥ ९

सर्वभूतानि दुःखेन व्यतिषक्तानि पश्यतः ।

---

1. ख–ग—अर्धद्वयं नास्ति

[1]अहमेको न मे कश्चिन्नाहमन्यस्य कस्यचित् ॥　　१०

न तं पश्यामि यस्याहं तं न पश्यामि यो मम ।
आत्माऽपि चायं न मम सर्वा सा पृथिवी मम ॥　　११

[2]यथा मम तथाऽन्येषाम् इति चिन्त्य न मे यथा ।
एतां बुद्धिमहं प्राप्य न प्रहृष्ये न च व्यथे ॥　　१२

[3]यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥　　१३

एवं पुत्राश्च दाराश्च ज्ञातय[4]श्चाथ बान्धवाः ।
तेषु स्नेहो न कर्तव्यो विप्रयोगश्च तैर्ध्रुवः ॥　　१४

अदर्शनादापतितः पुनश्चादर्शनं गतः ।
न त्वाऽसौ वेद न त्वं तं कस्मात् किमनुशोचसि ॥　　१५

सुखान्तप्रभवं दुःखं दुःखान्तप्रभवं सुखम् ।
सुखात् सञ्जायते दुःखं दुःखात् सञ्जायते सुखम् ॥　　१६

सुखस्यानन्तरं दुःखं दुःखास्यानन्तरं सुखम् ।
सुखान्ते दुःखमापन्नः पुनरापत्स्यते सुखम् ॥　　१७

[5]न नित्यं लभते दुःखं न नित्यं लभते सुखम् ॥　　१७॥

---

1. ग—अर्धद्वयं नास्ति　　2. क—अर्धषट्कं नास्ति
3. घ—अर्धचतुष्टयं नास्ति　　4. ख—स्सुहृदस्तथा
5. अ-क-ख-ग—नास्तीदमर्धम्

नालं सुखाय सुहृदो नालं दुःखाय [1]दुर्हृदः ।
न च प्रज्ञाऽलमर्थानां न सुखानामलं धनम् ॥ १८॥

न बुद्धिर्धनलाभाय न मौढ्यमसमृद्धये ।
[2]लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥ १९॥

बुद्धिमन्तं च मूढं च शूरं भीरुं कविं जडम् ।
दुर्बलं बलवन्तं च भागिनं भजते सुखम् ॥ २०॥

धेनुर्वत्सस्य गोपस्य स्वामिनस्तस्करस्य च ।
पयः पिबति यस्तस्या धेनुस्तस्येति निश्चयः ॥ २१॥

[3]ये च मूढतमा लोके ये च बुद्धेः परं गताः ।
ते नरास्सुखमेधन्ते क्लिश्यत्यन्तरितो जनः ॥ २२॥

अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे ।
अन्तप्राप्तिं सुखं प्राहुर् दुःखमन्तरमन्तयोः ॥ २३॥

सुखं स्वपिति दुर्मेधास् स्वानि कर्माण्यचिन्तयन् ।
अविज्ञानेन महता कम्बलेनेव संवृतः ॥ २४॥

ये तु बुद्धिं परां प्राप्ता द्वन्द्वातीता विमत्सराः ।

---

1. ग—शलघः 2. ख—नास्तीदमर्धम्

3. ख—सर्वत्र वासः परिणामबद्धो
गर्भाधाने बन्धने ज्ञातिमध्ये ।
उद्धृत्य...नधानेषु रता रतेषु
मा सन्त्वसीरागमय स्ववृत्तिम् ॥ [अधिकः पाठः]

तान् नैवार्था न चानर्था व्यथयन्ति कदाचन ॥ २५॥

अथ ये बुद्धिमप्राप्ता व्यतिक्रान्ताश्च मूढताम् ।
तेऽतिवेलं प्रहृष्यन्ति सन्तापमुपयान्ति च ॥ २६॥

नित्यं प्रमुदिता मूढास् [1]सारमेयगणा इव ।
अवलेपेन महता परितृप्ता विचेतसः ॥ २७॥

सुखं दुःखान्तमालस्यं दुःखं दाक्ष्यं सुखोदयम् ।
भूतिश्चैव श्रिया सार्धं दक्षे वसति नालसे ॥ २८॥

सुखं वा यदि वा दुःखं प्रियं वा यदि वाऽप्रियम् ।
प्राप्तं प्राप्तमुपासीत हृदयेनापराजितः ॥ २९॥

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढम् आविशन्ति न पण्डितम् ॥ ३०॥

बुद्धिमन्तं कृतप्रज्ञं शुश्रूषु[2]मनहङ्कृतम् ।
[3]शान्तं जितेन्द्रियं चापि शोको न स्पृशते नरम् ॥ ३१॥

एतां बुद्धिं समास्थाय [4]शुद्धचित्तश्चरेद्बुधः ।
[5]उदयास्तमयज्ञं हि न शोकस्स्प्रष्टुमर्हति ॥ ३२॥

यन्निमित्तो भवेच्छोकस् त्रासो वा क्रोध एव वा ।

---

1. ख—दिवि देव  2. ख—मनसूयकम्
3. ख—दान्तं  4. ग—गुह्यचित्त
5. ग—शुक्लकृष्णगतिज्ञं तं देवासुरविनिर्गतम्। [ अधिकः पाठः ]

आयासो वा यतो मूलं तदेकाङ्गमपि त्यजेत् ॥ ३३॥

यद्यत्त्यजति कामानां तत् सुखस्याभिपूर्यते ।
कामानुसारी पुरुषः कामाननुविनश्यति ॥ ३४॥

यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतष्षोडशीं कलाम् ॥ ३५॥

[1]कर्तारमार्जितं कर्म शुभं वा यदि वाऽशुभम् ।
प्राज्ञं मूढं च शूरं च भजते तादृशं नरम् ॥ ३६॥

[2]स्वकर्मणां बलेनैव प्रियाण्येवाप्रियाणि च ।
जीवेषु परिवर्तन्ते दुःखानि च सुखानि च ॥ ३७॥

एतां बुद्धिं समास्थाय नावसीदेद्गुणान्वितः ।
सर्वान् कामाञ्जुगुप्सेत [3]क्रोधं कृत्वा तु पृष्ठतः ॥ ३८॥

वृत्त एष हृदि प्रौढो मृत्युरेष मनोभवः ।
क्रोधो नाम शरीरस्थो देहिनां प्रोच्यते बुधैः ॥ ३९॥

यदा संहरते कामान् कूर्मोऽङ्गानीव सर्वशः ।
तदाऽऽत्मज्योतिरात्मश्रीर् आत्मन्येव प्रसीदति ॥ ४०॥

किञ्चिदेव ममत्वेन यदा भवति कल्पितम् ।

---

1. ख-ग—पूर्वदेहकृतं
2. ख—एवमेव किलैतानि
3. ख-ग—कोपं कुर्वीत

तदेव परितापाय [1]नाशे सम्पद्यते तदा ॥ ४१॥

[2]न बिभेति यदा चायं यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा ॥ ४२॥

उभे सत्यानृते त्यक्त्वा शोकानन्दौ भयाभये ।
प्रियाप्रिये परित्यज्य [3]प्रशान्तात्मा भविष्यति ॥ ४३॥

यदा न कुरुते धीरस् सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥ ४४॥

या दुस्त्यजा दुर्मतिभिर् या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस् तां तृष्णां त्यजतस्सुखम् ॥ ४५॥

अत्र पिङ्गलया गीता गाथा शृणु नराधिप ।
यथा सा कृच्छ्रकालेऽपि लेभे धर्मं सनातनम् ॥ ४६॥

कदाचित् पिङ्गला वेश्या कान्तेनासीद्विनाकृता ।
अथ कृच्छ्रगता शान्तां बुद्धिमास्थापयत्तदा ॥ ४७॥

[4]उवाच वचनं बुद्ध्वा सा सम्यक्कृतनिश्चया ॥ ४८

पिङ्गला—

उन्मत्ताऽहमनुन्मत्तं कान्तमन्ववसं चिरम् ।
अन्तिके रमणं यान्तं नैनमध्यगमं पुरा ॥ ४९

---

1. ख—सर्वं संस्पृश्यते तदा
2. क—अर्धद्वयं नास्ति
3. ख—प्रसन्नात्मा
4. ग—इदमर्धं नास्ति

एकस्थूणं नवद्वारम् अपिधास्याम्यगारकम् ।
का ह्यकान्तमिहायान्तं कान्त इत्यभिमंस्यते ॥ ५०

अकामाः कामरूपेण धूर्ताश्च नररूपिणः ।
न पुनर्वञ्चयिष्यन्ति प्रतिबुद्धाऽस्मि जागृमि ॥ ५१

अनर्थोऽपि भवत्यर्थो दैवात् पूर्वकृतेन वा ।
सम्बुद्धाऽहं निराकारा नाहमद्याजितेन्द्रिया ॥ ५२

विप्रः—

सुखं निराशस्स्वपिति नैराश्यं परमं सुखम् ।
आशामनाशां कृत्वा हि सुखं स्वपिति पिङ्गला ॥ ५३

भीष्मः—

एतैश्चान्यैश्च विप्रस्य हेतुमद्भिः प्रभाषितैः ।
पर्यवस्थापितो राजा सेनजिन्मुमुदे सुखम् ॥ ५४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥
॥ ८७ ॥ मोक्षधर्मपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[अस्मिन्नध्याये ५४ श्लोकाः]

---

## ॥ चतुष्षष्ट्यधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति कालस्य द्रुततरपातितया सद्यः साधनस्य सम्पादनीयत्वे प्रमाणतया पितृपुत्रसंवादानुवादः ॥



युधिष्ठिरः—

अतिक्रामति कालेऽस्मिन् सर्वभूतक्षयावहे ।
किं श्रेयः प्रतिपद्येत तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
पितुः पुत्रेण संवादं तं निबोध युधिष्ठिर ॥ २

द्विजातेः कस्यचित् पार्थ स्वाध्यायनिरतस्य वै ।
बभूव पुत्रो मेधावी मेधावी नाम नामतः ॥ ३

सोऽब्रवीत् पितरं पुत्रस् स्वाध्यायकरणे रतम् ।
मोक्षधर्मार्थकुशलो लोक[1]धर्मविचक्षणः ॥ ४

पुत्रः—

धीरः किंस्वित्तात कुर्याच्छुभार्थी
क्षिप्रं ह्यायुर्भ्रश्यते मानवानाम् ।
पितस्तदाचक्ष्व यथार्थयोगं
ममानुपूर्व्याद् येन धर्मं चरेयम् ॥ ५

---

1. ख—तत्त्व ग—तन्त्र

पिता—

वेदानधीत्य ब्रह्मचर्येण पुत्र
पुत्रानिच्छेत् पावनार्थं पितॄणाम् ।
अग्नीनाधाय विधिवच्चेष्टयज्ञो
वनं प्रविश्याथ मुनिर्बुभूषेत् ॥ ६

पुत्रः—

एवमभ्याहते लोके समन्तात् परिवारिते ।
[1]अमोघासु पतन्तीषु किं धीर इव भाषसे ॥ ७

पिता—

कथमभ्याहतो लोकः [2]केन वा परिवारितः ।
[3]अमोघाः काः पतन्तीह किं नु भीषयसीव माम् ॥ ८

पुत्रः—

[4]मृत्युनाऽभ्याहतो लोको जरया परिवारितः ।
अहोरात्राः पतन्त्येते ननु कस्मान्न बुध्यसे ॥ ९

पिता—

यथाऽहमेतज्जानामि न मृत्युस्तिष्ठतीति ह ।
सोऽहं कथं प्रतीक्षिष्ये जालेनेवावृतश्चरन् ॥ १०

---

1. ग—अमोघाः सम्पतन्तीह
2. ख-ग—कथं च परि
3. घ—नास्तीदमधर्मम्
4. क—कालेना

पुत्रः—

[1]रात्र्यां रात्र्यां व्यतीतायाम् आयुरल्पतरं यदा ।
गाधोदके मत्स्य इव धृतिं विन्देत को नरः ॥　　११

[2]यामेव रात्रिं प्रथमां गर्भो भजति मातरम् ।
तामेव रात्रिं प्रस्थाति मरणायानिवर्तकः ॥　　१२

यस्यां रात्र्यां व्यतीतायां [3]न किञ्चिच्छुभमाचरेत् ।
तदेव वन्ध्यं दिवसम् इति विद्याद्विचक्षणः ।　　१३

पुष्पाणीव विचिन्वन्तम् अन्यत्र गतमानसम् ।
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥　　१४

अद्यैव कुरु यच्छ्रेयो मा त्वां कालोऽत्यगादयम् ।
अकृतेष्वेव कार्येषु मृत्युर्वै सम्प्रकर्षति ॥　　१५

श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् ॥　　१६

को हि जानाति कस्याद्य मृत्युकालो भविष्यति ।
[4]न मृत्युरामन्त्रयते हर्तुकामो जगत्प्रभुः ॥　　१७

---

1. घ—रात्र्यां रात्र्यां पतन्त्येते ननु कस्मान्न बुध्यते ।
यथा च मेऽतीतायामायुरल्पतरं तदा ॥　　[पाठान्तरम्]
2. ख—अर्धचतुष्टयं नास्ति
3. ग—न किञ्चित् कुरुते शुभम्
4. ख—अर्धद्वयं नास्ति

अबुद्ध एवाक्रमते मीनान्मीनग्रहो यथा ॥ १७॥

युवैव धर्मशीलस्स्याद् अनित्यं खलु जीवितम् ।
कृते धर्मे भवेत् कीर्तिर् इह प्रेत्य च वै सुखम् ॥ १८॥

मोहेनाभिसमाविष्टः पुत्रदारार्थमुद्यतः ।
कृत्वा कार्यमकार्यं वा तुष्टिमेभ्यः प्रयच्छति ॥ १९॥

तं पुत्रपशुसम्मत्तं व्यासक्तमनसं नरम् ।
सुप्तं व्याघ्र इवामोघो मृत्युरादाय गच्छति ॥ २०॥

[1]सञ्चिन्वानं कामयानं कामानामवितृप्तकम् ।
व्याघ्रः पशुमिवारण्ये मृत्युरादाय गच्छति ॥ २१॥

इदं कृतमिदं कार्यम् इदमन्यत् कृताकृतम् ।
एवमीहासमायुक्तं कृतान्तः कुरुते वशे ॥ २२॥

कृतानां फलमप्राप्तं कर्मणां फलसङ्गिनाम् ।
क्षेत्रापणगृहासक्तं [2]कृतान्तः कुरुते वशे ॥ २३॥

[3]दुर्बलं बलवन्तं च शूरं भीरुं कविं जडम् ।
अप्राप्तसर्वकामार्थं मृत्युरादाय गच्छति ॥ २४॥

इदं मे स्यादिदं मे स्याद् इत्येव मनसा नरान् ।

---

1. ख—अर्धद्वयं नास्ति
2. ख—मृत्युरादाय गच्छति
3. अ-क-ख-घ—अर्धचतुष्टयं नास्ति

अनवाप्तेषु कामेषु कृतान्तः कुरुते वशे ॥ २५॥

मृत्युर्जरा च व्याधिश्च दुःखं चानेककारणम् ।
अनुषक्तं यदा देहे किं स्वस्थ इव तिष्ठसि ॥ २६॥

जातमेवान्तकोऽन्वेति जरा चान्वेति देहिनम् ।
अनुषक्ता द्वयेनैते भावास्स्थावरजङ्गमाः ॥ २७॥

मृत्योर्वै गृहमेतद्धि या ग्रामे वसतो रतिः ।
देवानामेष वै गोष्ठो यदरण्यमिति श्रुतिः ॥ २८॥

निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः ।
छित्त्वैतां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥ २९॥

[1]यो हि संयच्छति प्राणान् मनोवाक्कायहेतुभिः ।
जीवितार्थापनयनैः [2]प्राणिभिर्न स बध्यते ॥ ३०॥

न मृत्युसेनामायान्तीं जातु कश्चित् प्रबाधते ।
ऋते सत्यमसन्त्याज्यं सत्ये ह्यमृतमाहितम् ॥ ३१॥

[3]तस्मात् सत्यव्रताचारस् सत्ययोगपरायणः ।
सत्यारामस्समो दान्तस् सत्येनैवान्तकं जयेत् ॥ ३२॥

अमृतं चैव मृत्युश्च द्वयं देहे प्रतिष्ठितम् ।
मृत्युरापद्यते मोहात् सत्येनापद्यतेऽमृतम् ॥ ३३॥

---

1. ख—न हिंसयति यः प्राणीः
2. क-घ—कर्मभिर्
3. अ-क-घ—अर्धश्लयं नास्ति

सोऽहं ह्यहिंस्रस्सत्यार्थी कामक्रोधबहिष्कृतः ।
समदुःखसुखः क्षेमी मृत्युं हास्याम्यमर्त्यवत् ॥ ३४॥

शान्तियज्ञरतो दान्तो ब्रह्मयज्ञरतो मुनिः ।
वाङ्मनःकर्मयज्ञश्च भविष्याम्युदगायने ॥ ३५॥

पशुयज्ञैः कथं हिंस्रैर् मादृशो यष्टुमर्हति ।
अन्तवद्भिरिह प्राज्ञः क्षुद्रयज्ञैः पिशाचवत् ॥ ३६॥

यस्य वाङ्मनसी गुप्ते सम्यक् प्रणिहिते शुभे ।
तपस्त्यागश्च योगश्च स वै सर्वमवाप्नुयात् ॥ ३७॥

नास्ति विद्यासमं चक्षुर् नास्ति [1]सत्यसमं बलम् ।
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥ ३८॥

[2]आत्मन्येवात्मना जात आत्मनिष्ठोऽप्रजोऽपि वा ।
[3]आत्मन्येव भविष्यामि न मां तारयति प्रजा ॥ ३९॥

नैतादृशं ब्राह्मणस्यास्ति वित्तं
यथैकता समता सत्यता च ।
शीलं स्थितिर्दण्डनिधानमार्जवं
ततस्ततश्चोपरमः क्रियाभ्यः ॥ ४०॥

---

1. ग—विद्यासमं बलम्
2. ख—अर्धद्वयं नास्ति
3. घ—नास्तीदमर्धम्

किं ते धनैर्बान्धवैर्वाऽपि किं ते
　किं ते दारैर्ब्राह्मण यो मरिष्यसि ।
आत्मानमन्विच्छ गुहां प्रविष्टं
　पितामहस्ते क्व गतः पिता च ॥　४१॥

भीष्मः—

पुत्रस्यैतद्वचश्श्रुत्वा तथाऽकार्षीत् पिता नृप ।
तथा त्वमपि वर्तस्व सत्यधर्मपरायणः ॥　४२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुष्षष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[ अस्मिन्नध्याये ४२॥ श्लोकाः ]

---

## ॥ पञ्चषष्ट्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति दारिद्र्यधनिकत्वयोः क्रमेणार्थानर्थसाधनत्वे प्रमाणतया शम्याकगीताया अनुवादः ॥

---

युधिष्ठिरः—

धनिनो येऽधना ये च वर्तयन्ति स्वतन्त्रिणः ।
सुखदुःखागमस्तेषां कः कथं वा पितामह ॥　१

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।

शम्याकेन विमुक्तेन गीतं शान्तिगतेन वै ॥ २

अब्रवीन्मां पुरा कश्चिद् ब्राह्मणस्त्यागमास्थितः ।
क्लिश्यमानः कुदारेण कुचेलेन बुभुक्षया ॥ ३

उत्पन्नमिह लोके वै जन्मप्रभृति मानवम् ।
विविधान्युपवर्तन्ते दुःखानि च सुखानि च ॥ ४

तयोरेकतरो मार्गो यदेनमुपसन्नमेत् ।
न सुखं प्राप्य संहृष्येन्न दुःखं प्राप्य सञ्ज्वरेत् ॥ ५

न वै चरसि यच्छ्रेय आत्मनो वा न ईशिषे ।
अकामात्माऽपि हि यदा धुरमुद्यम्य चैव हि ॥ ६

[1]अकिञ्चनः परिपतन् सुखमास्वादयिष्यसि ।
अकिञ्चनस्सुखं शेते सुखं च प्रतिबुध्यते ॥ ७

आकिञ्चन्यं सुखं लोके पथ्यं शिवमनामयम् ।
अनमित्रमथो ह्येष दुर्लभस्सुलभस्सताम् ॥ ८

अकिञ्चनस्य शुद्धस्य उपपन्नस्य सर्वतः ।
अवेक्षमाणस्त्रीँल्लोकान् न तुल्यमुपलक्षये ॥ ९

आकिञ्चन्यं च राज्यं च तुलया समतोलयम् ।
अत्यरिच्यत दारिद्र्यं राज्यादपि गुणाधिकात् ॥ १०

आकिञ्चन्ये च राज्ये च विशेषस्सुमहानयम् ।

1. अ-क-ग-घ—अर्धद्वयं नास्ति

नित्योद्विग्नो हि धनवान् मृत्योरास्यगतो यथा ॥ ११

नैवास्याग्निर्न चादित्यो न मृत्युर्न च [1]शत्रवः ।
प्रभवन्ति धनं हर्तुम् इतरे स्युः कुतः पुनः ॥ १२

तं वै सदा कामचरम् अनुपस्तीर्णशायिनम् ।
बाहूपधानं शाम्यन्तं [2]स्पृहयन्ति दिवौकसः ॥ १३

धनवान् क्रोधलोभाभ्याम् आविष्टो नष्टचेतनः ।
तिर्यग्दृष्टिश्शुष्कमुखः पापको भ्रुकुटीमुखः ॥ १४

निर्दशंश्चाधरोष्ठं स क्रुद्धो दारुणभाषिता ।
कस्तमिच्छेत् परिद्रष्टुं दातुमिच्छति चेन्महीम् ॥ १५

श्रिया ह्यभीक्ष्णं संवासो मोहयत्यविचक्षणम् ।
सोऽस्य चित्तं विकिरति शारदाभ्रमिवानिलः ॥ १६

अथैनं रूपमानश्च धनमानश्च विन्दति ।
अभिजातोऽस्मि सिद्धोऽस्मि नास्मि केवलमानुषः ॥ १७

इत्येभिः कारणैस्तस्य त्रिभिश्चित्तं [3]प्रसिच्यते ॥ १७॥

सम्प्रसिक्तमना भोगान् विसृज्य पितृसञ्चितान् ।
परिक्षीणः परस्वानाम् आदानं बहु मन्यते ॥ १८॥

तमतिक्रान्तमर्यादम् आददानमसाम्प्रतम् ।

---

1. ख—दस्यवः　2. ख—प्रशंसन्ति
3. ख—प्रसाध्यते　घ—प्रशास्यते

प्रतिषेधन्ति राजानो लुब्धा मृगमिवेषुभिः ॥ १९॥

एवमेतानि दुःखानि तानि तानीह मानवम् ।
विविधान्युपवर्तन्ते गात्रसंस्पर्शजानि च ॥ २०॥

तेषां परमदुःखानां बुद्ध्या भैषज्यमाचरेत् ।
लोकधर्मं समाज्ञाय ध्रुवाणामध्रुवैस्सह ॥ २१॥

नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम् ।
नात्यक्त्वा निर्भयश्शेते सर्वं त्यक्त्वा सुखी भवेत् ॥ २२॥

इत्येतद्धास्तिनपुरे ब्राह्मणेनोपवर्णितम् ।
शम्याकेन पुरा मह्यं तस्मात्त्यागः परो मतः ॥ २३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
[अस्मिन्नध्याये २३॥ श्लोकाः]

---

## ॥ षट्षष्ट्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति विरक्तेः सुखसाधनतायां प्रमाणतया मङ्कि-गीताया बोध्यगीतायाश्चानुवादः ॥

युधिष्ठिरः—

ईहमानस्समारम्भान् यदि नासादयेद्धनम् ।
धनतृष्णाभिभूतश्च किं कुर्वन् सुखमाप्नुयात् ॥ १

भीष्मः—

सर्वसाम्यमनायासस् सत्यवाक्यं च भारत ।
निर्वेदश्च विवित्सा च यस्य स्यात् स सुखी नरः ॥ २

एतान्येव पदान्याहुः पञ्च वृद्धाः प्रशान्तये ।
एष स्वर्ग्यश्च धर्मश्च सुखं चानुत्तमं सताम् ॥ ३

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
निर्वेदान्मङ्किना गीतं तन्निबोध युधिष्ठिर ॥ ४

ईहमानो धनं मङ्किर् भग्नेहश्च पुनः पुनः ।
केनापि धनलेशेन क्रीतवान् दम्यगोयुगम् ॥ ५

सुसम्बद्धौ तु तौ दम्यौ [1]दमनायाभिनिस्सृतौ ।
आसीनमुष्ट्रं मध्येन सहसैवाभ्यधावताम् ॥ ६

तयोस्सम्प्राप्तयोरुष्ट्रस् स्कन्धदेशममर्षणः ।

1. ख—इतः षट् पादा न सन्ति

उत्थायोत्थाय दम्यौ तौ प्रससार महाजवः ॥ ७

ह्रियमाणौ तु तौ दम्यौ तेनोष्ट्रेण प्रमाथिना ।
म्रियमाणौ तु सम्प्रेक्ष्य मङ्किस्तत्रेदमब्रवीत् ॥ ८

मङ्किः—

न जात्वविहितं शक्यं दक्षेणाप्तुं धनं क्वचित् ।
युक्तेन श्रद्धया सम्यग् ईहां समनुतिष्ठता ॥ ९

पूर्वपुण्यैर्विहीनस्य युक्तस्याप्यनुतिष्ठतः ।
इमं पश्यत सङ्गम्य मम दैवादुपप्लवम् ॥ १०

उद्यम्योद्यम्य मे दम्यौ विषमेणैव गच्छतः ।
उत्क्षिप्य काकतालीयम् उत्पथेनैव जम्बुकः ॥ ११

मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम ।
शुद्धं हि दैवमेवेदम् अतो नैवास्ति पौरुषम् ॥ १२

यदि वाऽभ्युपपद्येत [1]पौरुषं नाम कर्हिचित् ।
अन्विष्यमाणं तदपि दैवमेवावतिष्ठते ॥ १३

तस्मान्निर्वेद एवेह गन्तव्यम्सुखमीप्सता ।
सुखं स्वपिति निर्विण्णो निराशश्चार्थसाधने ॥ १४

अहो सम्यक् शुकेनोक्तं सर्वतः परिमुच्यता ।
प्रतिष्ठमानेनारण्यं जनकस्य निवेशनात् ॥ १५

1. ग—अयं पादोऽनन्तरश्च न स्तः

शुकः—

यः कामान् प्राप्नुयात् सर्वान् यश्चैतान् केवलांस्त्यजेत् ।
प्रापणात् सर्वकामानां परित्यागो विशिष्यते ॥　　१६

नान्तं सर्वविवित्सानां गतपूर्वोऽस्ति कश्चन ।
शरीरे जीविते चैव तृष्णा मन्दस्य वर्धते ॥　　१७

मङ्किः—

निवर्तस्व विवित्साभ्यश् शाम्य निर्विद्य मामकम् ।
असकृच्चासि निकृतो न च निर्विद्यसे मनः ॥　　१८

यदि नाहं विनाश्यस्ते यद्येवं रमसे मया ।
मा मां योजय लोभेन वृथा त्वं वित्तकामुक ॥　　१९

सञ्चितं सञ्चितं [1]द्रव्यं नष्टं तव पुनः पुनः ।
कदा विमोक्ष्यसे मूढ धनेहां धनकामुक ॥　　२०

अहो नु मम बालिश्यं योऽहं क्रीडनकस्तव ।
[2]क्लेशैर्नानाविधैर्नित्यं संयोजयसि निर्घृण ॥　　२१

को न्वेवं जातु पुरुषः परेषां प्रेष्यतामियात् ॥　　२१॥

न पूर्वे नापरे जातु कामानामन्तमाप्नुवन् ।
त्यक्त्वा सर्वसमारम्भान् प्रतिबुद्धोऽस्मि जागृमि ॥　　२२॥

नूनं मे हृदयं कामं वज्रसारमयं दृढम् ।
यदनर्थशताविष्टं शतधा न विदीर्यते ॥　　२३॥

---

1. क-घ—वित्तं　　2. ख—नास्तीदमर्थेम्

त्यजामि काम त्वां चैव यच्च किञ्चित् प्रियं तव ।
तवाहं सुखमन्विच्छन् आत्मन्युपलभे सुखम् ॥ २४॥

काम जानामि ते मूलं सङ्कल्पात् किल जायसे ।
न त्वां सङ्कल्पयिष्यामि समूलो न भविष्यसि ॥ २५॥

ईहा धनस्य न सुखं लब्ध्वा चिन्ता च भूयसी ।
लब्धनाशो यथा मृत्युर् लब्धं भवति वा न वा ॥ २६॥

परित्यागे न लभते ततो दुःखतरं नु किम् ।
न च तुष्यति लब्धेन भूय एव च मार्गते ॥ २७॥

अभूतपूर्वमेवार्थं स्वादु गाङ्गमिवोदकम् ।
मद्विलापनमेतत्तु प्रतिबुद्धोऽस्मि सन्त्यज ॥ २८॥

य इमं मामकं देहं भूतग्रामस्समाश्रितः ।
स यात्वितो यथाकामं वसतां वा यथासुखम् ॥ २९॥

न च युष्मासु मे प्रीतिः कामलोभानुयायिषु ।
तस्मादुत्सृज्य वस्सर्वान् [1]सत्वमेवाश्रयाम्यहम् ॥ ३०॥

सर्वभूतान्यहं देहे पश्यन् मनसि चात्मनः ।
योगे बुद्धिं श्रुते सत्वं मनो ब्रह्मणि धारयन् ॥ ३१॥

विचरिष्याम्यनासक्तस् सुखी लोकान्निरामयः ।
यथा पुनर्न मामेवं दुःखेषु प्रणिधास्यसि ॥ ३२॥

---

1. क-ब—सत्य

त्वया हि मे प्रणुन्नस्य गतिरन्या न विद्यते ।
तृष्णाशोकश्रमाणां हि त्वं कामप्रभवस्सदा ॥ ३३॥

धननाशेऽधिकं दुःखं मन्यसे सुमहत्तरम् ।
ज्ञातयो ह्यवमन्यन्ते मित्राणि च धनाच्च्युतम् ॥ ३४॥

अवज्ञानसहस्रैस्तु दोषः कष्टतरोऽधने ।
धने सुखकला या च सा हि दुःखैर्विधीयते ॥ ३५॥

धनमस्येति पुरुषं [1]पुरा निघ्नन्ति दस्यवः ।
राजानो विविधैर्दण्डैर् नित्यमुद्वेजयन्ति च ॥ ३६॥

धनलोलुपता दुःखम् इति बुद्धं चिरान्मया ।
यद्यदालम्बसे काम तत्तदेवानुरुध्यसे ॥ ३७॥

अतत्त्वज्ञोऽसि बालश्च दुस्तोषोऽपूरणोऽनलः ।
नैव त्वं वेत्थ सुलभं नैव त्वं वेत्थ दुर्लभम् ॥ ३८॥

पाताल इव दुष्पूरो मां दुःखैर्योक्तुमिच्छसि ।
नाहमद्य समावेष्टुं शक्यः काम पुनस्त्वया ॥ ३९॥

निर्वेदमहमासाद्य द्रव्यनाशाद्यदृच्छया ।
निर्वृतिं परमां प्राप्य नाद्य कामान् विचिन्तये ॥ ४०॥

अतिक्लेशं सहामीह नाहं बुद्ध्याम्यबुद्धिमान् ।
निकृतो धननाशेन शये सर्वाङ्गविज्वरः ॥ ४१॥

---

1. ग—पुरो निन्दन्ति शत्रवः ;   अ-क—परे निघ्नन्ति लुब्धकाः

प्रतिनृत्यामि काम त्वां हित्वा सर्वं मनोगतम् ।
न त्वं पुनर्मया काम नस्योतेनेव रंस्यसे ॥ ४२॥

क्षमिष्ये क्षममाणानां न हिंसिष्ये विहिंसितः ।
द्वेष्यमुक्तः प्रियं वक्ष्याम्यनादृत्य तदप्रियम् ॥ ४३॥

तृप्तस्स्वस्थेन्द्रियो नित्यं यथालब्धेन वर्तयन् ।
न सकामं करिष्यामि त्वामहं शत्रुमात्मनः ॥ ४४॥

निर्वेदं निर्वृतिं तृप्तिं शान्तिं सत्यं दमं क्षमाम् ।
सर्वभूतदयां चैव विद्धि मां शरणागतम् ॥ ४५॥

तस्मात् कामश्च लोभश्च तृष्णा कार्पण्यमेव च ।
त्यजन्तु मां प्रतिष्ठन्तं सत्त्वस्थो ह्यस्मि साम्प्रतम् ॥ ४६॥

प्रहाय कामं लोभं च क्रोधं पारुष्यमेव च ।
नाद्य लोभवशं प्राप्तो दुःखं प्राप्स्याम्यनात्मवान् ॥ ४७॥

यद्यत् त्यजति कामानां तत्सुखस्याभिपूर्यते ।
कामस्य वशगो नित्यं दुःखमेव प्रपद्यते ॥ ४८॥

कामानपोह्य धुनुते यत् किञ्चित् पुरुषो रजः ।
कामक्रोधोद्भवं दुःखं [1]लोभो ह्यरतिरेव च ॥ ४९॥

एष ब्रह्म प्रविष्टोऽस्मि ग्रीष्मे शीतमिव ह्रदम् ।
शाम्यामि परिनिर्वामि सुखमासे च केवलम् ॥ ५०॥

---

1. ख—अश्रीररतिरेव च

यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतष्षोडशीं कलाम् ॥ ५१॥

आत्मना सप्तमं कामं हत्वा शत्रुमिवोत्तमम् ।
प्राप्यावध्यं ब्रह्मपुरं राजेव च वसाम्यहम् ॥ ५२॥

भीष्मः—

एतां बुद्धिं समास्थाय मङ्किर्निर्वेदमागतः ।
सर्वान् कामान् परित्यज्य प्राप्य ब्रह्म महत् सुखम् ॥ ५३॥

दम्यनाशकृते मङ्किर् अमृतत्वं किलागमत् ।
[1]निर्वृतिं परमां प्राप्य मङ्किः प्राप परां गतिम् ॥ ५४॥

[2]अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
गीतं विदेहराजेन जनकेन प्रशाम्यता ॥ ५५॥

जनकः—

अनन्तं बत मे वित्तं यस्य मे नास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे किञ्चन दह्यते ॥ ५६॥

भीष्मः

[3]अत्राप्युदाहरन्तीमम् [4]इतिहासं पुरातनम् ।

---

1. ख-ग—अच्छिनत् काममूलं च स प्राप परमां गतिम् ।
2. ग—अस्मिन्नर्थे पुरा गीतं शृणु राजन् पुरा मम ।
श्लोकं विदेहराजेन जनकेन प्रशाम्यता ॥ [पाठान्तरम्]
3. ग—अत्रैवोदाहरन्तीमं बोध्यस्य पदसञ्चयम् ।
4. ख—श्लोकं मोक्षोपसंहितम्

[1]नहुषस्यापि राजर्षेर् बोध्यस्य पदसञ्चयम् ॥ ५७॥

निर्वेदं प्रति विन्यस्तं तं निबोध युधिष्ठिर ॥ ५८

बोध्यं शान्तमृषिं राजा नहुषः पर्यपृच्छत ॥ ५८॥

नहुषः—

निर्वेदाच्छान्तिमापन्नं शास्त्रप्रज्ञानतर्पितम् ॥ ५९

उपदेशं महाप्राज्ञ शमस्योपदिशस्व मे ।

[2]कां विद्यां समनुप्राप्य शान्तश्चरसि निर्वृतः ॥ ६०

बोध्यः—

उपदेशेन वर्तामि नानुशास्मीह कञ्चन ।

लक्षणं तस्य वक्ष्येऽहं तत् स्वयं [3]प्रविमृश्यताम् ॥ ६१

पिङ्गला कुररस्सर्पस् सारङ्गान्वेषणं वने ।

इषुकारः कुमारी च षडेते गुरवो मम ॥ ६२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

[अस्मिन्नध्याये ६२ श्लोकाः]

---

1. ख-ग—इदमर्धं नास्ति
2. ख—बुद्धिं समनुध्याय
3. ख—प्रतिपद्यताम्

## ॥ सप्तषष्ट्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति प्रपञ्चस्यानित्यत्वादिज्ञानपूर्वकविरक्तेः सुखहेतुतायां प्रमाणतया प्रह्लादाजगरमुनिसंवादानुवादः ॥

युधिष्ठिरः—

केन वृत्तेन वृत्तज्ञ वीतशोकश्चरेन्महीम् ।
किं च कुर्वन् नरो लोके प्राप्नोति परमां गतिम् ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
प्रह्लादस्य च संवादं मुनेरजगरस्य च ॥ २

चरन्तं ब्राह्मणं कश्चित् कल्यचित्तमनामयम् ।
पप्रच्छ राजा प्रह्लादो बुद्धिमान् प्राज्ञसत्तमः ॥ ३

प्रह्लादः—

[1]स्वस्थश्शक्तो मृदुर्दान्तो निर्विवित्सोऽनसूयकः ।
सुवाग्बहुमतो लोके प्राज्ञश्चरसि बालवत् ॥ ४

नैव प्रार्थयसे लाभं नालाभेष्वनुशोचसि ।
नित्यतृप्त इव ब्रह्मन् न किञ्चिदिव मन्यसे ॥ ५

स्रोतसा ह्रियमाणासु प्रजास्वविमना इव ।

1. ग—स्वस्थचित्तो मृदुश्शान्तो; ख—स्वस्थचित्तो

धर्मकामार्थकार्येषु कूटस्थ इव लक्ष्यसे ॥ ६

नानुतिष्ठसि धर्मार्थौ न कामे चापि वर्तसे ।
इन्द्रियार्थाननादृत्य मुक्तश्चरसि साक्षिवत् ॥ ७

का नु प्रज्ञा श्रुतं वा किं वृत्तिर्वा का नु ते मुने ।
क्षिप्रमाचक्ष्व मे ब्रह्मञ् श्रेयो यदिह मन्यसे ॥ ८

भीष्मः—

अनुयुक्तस्स मेधावी लोकधर्मविधानवित् ।
उवाच श्लक्ष्णया वाचा प्रह्लाद[1]मनपार्थया ॥ ९

ब्राह्मणः—

पश्यन् प्रह्लाद भूतानाम् उत्पत्तिमनिमित्ततः ।
ह्रासं वृद्धिं विनाशं च न प्रहृष्ये न च व्यथे ॥ १०

स्वभावादेव सन्दृश्या वर्तमानाः प्रवृत्तयः ।
स्वभावनिरतास्सर्वाः प्रतिपाद्या न केनचित् ॥ ११

पश्यन् प्रह्लाद संयोगान् विप्रयोगपरायणान् ।
सञ्चयांश्च विनाशान्तान् न क्वचिद्विदधे मनः ॥ १२

अन्तवन्ति च भूतानि गुणयुक्तानि पश्यतः ।
उत्पत्तिनिधनज्ञस्य किं कार्यमवशिष्यते ॥ १३

जलजानामपि ह्यन्तं पर्यायेणोपलक्षये ।

1. अ-क—मनघार्थया

महतामपि कायानां सूक्ष्माणां च महोदधौ ॥ १४

जङ्गमस्थावराणां च भूतानामसुरोत्तम ।
पार्थिवानामपि व्यक्तं मृत्युं पश्यामि सर्वशः ॥ १५

अन्तरिक्षचराणां च दानवोत्तम पक्षिणाम् ।
उत्तिष्ठति यथाकालं मृत्युर्बलवतामपि ॥ १६

दिवि सञ्चरमाणानि ह्रस्वानि च महान्ति च ।
ज्योतींषि च यथाकालं पतमानानि लक्षये ॥ १७

इति भूतानि सम्पश्यन्ननुषक्तानि मृत्युना ।
सर्वं सामान्यतो विद्वान् कृतकृत्यस्सुखं स्वपे ॥ १८

सुमहान्तमपि ग्रासं ग्रसे लब्धं यदृच्छया ।
शये पुनरभुञ्जानो दिवसानि बहून्यपि ॥ १९

आस्रवत्यपि मामन्नं पुनर्बहुगुणं बहु ।
पुनरल्पगुणं स्तोकं पुनर्नैवोपपद्यते ॥ २०

कणान् कदाचित् खादामि पिण्याकमपि वा ग्रसे ।
भक्षये शालिमांसानि भक्षांश्चोच्चावाचान् पुनः ॥ २१

शये कदाचित् पर्यङ्के भूमावपि पुनश्शये ।
प्रासादे वाऽपि मे शय्या कदाचिदुपपद्यते ॥ २२

धारयामि च चीराणि शाणक्षौमाजिनानि च ।
महार्हाणि च वासांसि धारयाम्यहमेकदा ॥ २३

न सन्निपतितं धर्म्यम् उपभोगं यदृच्छया ।
प्रत्याचक्षे न चाप्येनम् अनुरुन्धे सुदुर्लभम् ॥ २४

अचलमनिधनं तथा विशोकं
शुचिमतुलं विदुषां मते निविष्टम् ।
अनभिमतमसेवितं च मूढैर्
व्रतमिदमाजगरं शुचिश्चरामि ॥ २५

[1]अचलितमतिरच्युतस्स्वधर्मात्
परिमितसंवरणः परावरज्ञः ।
विगतभवकषायलोभमोहो
व्रतमिदमाजगरं शुचिश्चरामि ॥ २६

अनियतफलभक्ष्यभोज्यपेयं
विधिपरिणामविभक्तदेशकालम् ।
हृदयसुखमसेवितं कदर्यैर्
व्रतमिदमाजगरं शुचिश्चरामि ॥ २७

---

1. अ-क-ब—अनियतशयनासनः प्रकृत्या
यमनियमव्रतशौचसिद्धियुक्तः ।
अवगतफलसञ्चयः प्रहृष्टो
व्रतमिदमाजगरं शुचिश्चरामि ॥ [ अधिकः पाठः ]

[1]इदमिदमिति तृष्णयाऽभिभूतं
जनमनवाप्तधनं विषीदमानम् ।
निपुणमनुनिशाम्य तत्त्वबुद्ध्या
व्रतमिदमाजगरं शुचिश्चरामि ॥ २८

बहुविधमनुदृश्य चार्थहेतोः
कृपणमिहार्यमनार्यमाश्रयं तम् ।
उपशमरुचिरात्मवान् प्रशान्तो
व्रतमिदमाजगरं शुचिश्चरामि ॥ २९

सुखमसुखम[2]नर्थमर्थलाभं
रतिमरतिं मरणं च जीवितं च ।
विधिनियतमवेक्ष्य तत्त्वबुद्ध्या
व्रतमिदमाजगरं शुचिश्चरामि ॥ ३०

अपगतभयरागमोहदर्पो
धृतिमतिबुद्धिसमन्वितः प्रशान्तः ।

---

1. अ-क-घ—अपगतभयरागमोहदर्पो
धृतिमतिबुद्धिसमन्वितः प्रशान्तः ।
उपगतसुखभोगिनो निशाम्य
व्रतमिदमाजगरं शुचिश्चरामि ॥ [ अधिकः पाठः ]

2. ख—लाभ

उपगतफलभोगिनो निशाम्य
व्रतमिदमाजगरं शुचिश्चरामि ॥ ३१

अनियतशयनासनः प्रकृत्या
दमनियमव्रतशौचसत्ययुक्तः ।
अपगत[1]फलसञ्चयः प्रहृष्टो
व्रतमिदमाजगरं शुचिश्चरामि ॥ ३२

अभिगतमसुखार्थमीहनार्थैर्
उपगतबुद्धिरवेक्ष्य चात्मसंस्थः ।
तृषितमनियतं मनो नियन्तुं
व्रतमिदमाजगरं शुचिश्चरामि ॥ ३३

न हृदयमनुरुध्यते मनो मे
प्रियसुखदुर्लभतामनित्यतां वा ।
तदुभयमुपलक्षयन्निवाहं
व्रतमिदमाजगरं शुचिश्चरामि ॥ ३४

[2]असुलभमुपलभ्य चार्थलाभं
धृतिमतिबुद्धिपराक्रमैरुपेतम् ।
बुधमनुजनिषेवितं समर्थैर्
व्रतमिदमाजगरं शुचिश्चरामि ॥ ३५

---

1. ख-घ—भय 2. ख—अर्धद्वयं नास्ति

बहु कथितमिदं हि बुद्धिमद्भिः
कविभिरपि प्रथयद्भिरात्मकीर्तिम् ।
इदमिदमिति तत्र तत्र तत्तत्
स्वपरमतैर्गहनं वितर्कयद्भिः ॥ ३६

तदहमनुनिशाम्य विप्रयातं
पृथगभिपन्नमिहाबुधैर्मनुष्यैः ।
अनवसितमनन्तदोषपारं
नृषु विहरामि विनीतदोषतृष्णः ॥ ३७

भीष्मः—

अजगरचरितं व्रतं महात्मा
य इह नरोऽनुचरेद्विनीतरागः ।
अपगतभयमन्युलोभमोहः
[1]परमसुखं विहरेदिमं विहारम् ॥ ३८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
[ अस्मिन्नध्याये ३८ श्लोकाः ]

---

1. ख—स खलु सुखी

## ।। अष्टषष्ट्यधिकशततमोऽध्यायः ।।



भीष्मेण युधिष्ठिरं प्रति इतरनिषेधपूर्वकं प्रज्ञायाः सुखसाधनतायां प्रमाणतया सृगालकाश्यपसंवादानुवादः ॥

---

युधिष्ठिरः—

बान्धवाः कर्म वित्तं वा प्रज्ञा वेह पितामह ।
नरस्य का प्रतिष्ठा स्याद् एतत् पृष्टो वदस्व मे ।। १

भीष्मः—

प्रज्ञा प्रतिष्ठा भूतानां प्रज्ञा लाभः परो मतः ।
प्रज्ञा नैश्श्रेयसी लोके प्रज्ञा [1]स्वर्ग्यमनुत्तमम् ।। २

प्रज्ञया प्रापितार्थो हि बलिरैश्वर्यसङ्क्षये ।
प्रह्लादो नमुचिर्मङ्किस् तस्याः किं विद्यते परम् ।। ३

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
इन्द्रकाश्यपसंवादं तन्निबोध युधिष्ठिर ।। ४

वैश्यः कश्चिदृषिं तात काश्यपं संशितव्रतम् ।
रथेन पातयामास श्रीमान् [2]दृप्तस्तपस्विनम् ।। ५

आर्तस्स पतितः क्रुद्धस् त्यक्त्वाऽऽत्मानमथाब्रवीत् ।। ५।।

---

1. ख—स्वर्गो मतस्सताम्
2. घ—इन्द्रस्त

काश्यपः—

मरिष्याम्यधनस्येह जीवितार्थो न विद्यते ॥ ६

भीष्मः—

तथा मुमूर्षुमासीनम् अकूजन्त[1]मचेतसम् ।
इन्द्रस्सृगालरूपेण बभाषे [2]द्विजसत्तमम् ॥ ७

इन्द्रः—

मनुष्ययोनिमिच्छन्ति सर्वभूतानि सर्वशः ।
मनुष्यत्वे च विप्रत्वं सर्व एवाभिनन्दति ॥ ८
मनुष्यो ब्राह्मणश्चासि श्रोत्रियश्चासि काश्यप ।
सुदुर्लभमवा[3]प्यैतद् अहो मर्तुं त्वमिच्छसि ॥ ९
सर्वे लाभास्साभिमाना इति सत्या परा श्रुतिः ।
सन्तोषणीयरूपोऽसि लोभाद्यन्नाभिमन्यसे ॥ १०
अहो सिद्धार्थता तेषां येषां सन्तीह पाणयः ॥ १०॥
पाणिमद्भ्यस्स्पृहाऽस्माकं धनवद्भ्यो यथा तव ।
न पाणिलाभादधिको लाभः कश्चन विद्यते ॥ ११॥
अपाणित्वाद्वयं ब्रह्मन् कण्टकं नोद्धरामहे ।
जन्तूनुच्चावचानङ्गे दशतो न कषामहे ॥ १२॥
अथ येषां पुनः पाणी देवदत्तौ दशाङ्गुली ।
उद्धरन्ति क्रिमीनङ्गाद् दशमानान् कषन्ति च ॥ १३॥

---

1. ख—मचेतनम्    2. ख—क्रुद्धमानसम्
3. ख—प्यैतद्दोषान्मर्तुमिहेच्छसि    ग—प्यैतदतोषान्मर्तुमिच्छसि

हिमवर्षातपेभ्यश्च परित्राणानि कुर्वते ।
चेलमन्नं सुखं शय्यां [1]निवातं चोपभुञ्जते ॥ १४॥

अधिष्ठाय च गां लोके भुञ्जते वाहयन्ति च ।
उपायैर्बहुभिश्चापि वश्यानात्मनि कुर्वते ॥ १५॥

ये खल्वजिह्वाः कृपणा अल्पप्राणा अपाणयः ।
सहन्ते तानि दुःखानि दिष्ट्या त्वं न तथा मुने ॥ १६॥

दिष्ट्या त्वं न सृगालो वा न क्रिमिर्न च मूषिकः ।
न सर्पो न च मण्डूको न चान्यः पापयोनिजः ॥ १७॥

एतावताऽपि लाभेन तोष्टुमर्हसि काश्यप ।
किं पुनश्चासि सत्त्वानां सर्वेषां ब्राह्मणोत्तमः ॥ १८॥

इमे मां क्रिमयोऽदन्ति तेषामुद्धरणाय मे ।
नास्ति शक्तिरपाणित्वात् पश्यावस्थामिमां मम ॥ १९॥

अकार्यमिति चैवेमं नात्मानं सन्त्यजाम्यहम् ।
नातः पापीयसीं योनिं पतेयमपरामिति ॥ २०॥

मन्ये वै पापयोनिं तां सार्गालीं यामहं गतः ।
पापीयस्यो बहुतरा इतोऽन्याः पापयोनयः ॥ २१॥

जात्या चैके सुखितरास् सन्त्यन्ये भृशदुःखिताः ।
नैकान्तं सुखमेवेह क्वचित् पश्यामि कस्यचित् ॥ २२॥

---

1. अ-क-ब—नीवारांश्चैव

मनुष्या आढ्यतां प्राप्य राज्यमिच्छन्त्यतः परम् ।
राज्याद्देवत्वमिच्छन्ति देवत्वादिन्द्रतामपि ॥ २३॥

भवेस्त्वं यद्यपि त्वाढ्यो न राजा न च दैवतम् ।
देवत्वं प्राप्य चेन्द्रत्वं नैव तुष्येस्तथा सति ॥ २४॥

न तृप्तिः प्रियलाभेऽस्ति तृष्णा लाभैर्न शाम्यति ।
सम्प्रज्वलति सा भूयस् समिद्भिरिव पावकः ॥ २५॥

अस्त्येव त्वयि शोको वै हर्षश्चास्ति तथा त्वयि ।
सुखदुःखे तथैवोभे तत्र का परिदेवना ॥ २६॥

परिच्छिद्यैव कामानां सर्वेषां चैव कर्मणाम् ।
मूलं बुद्धीन्द्रियग्रामं शकुन्तानिव पञ्जरे ॥ २७॥

न खल्वप्यरसज्ञस्य कामः क्वचन जायते ।
संस्पर्शाद्दर्शनाद्वाऽपि श्रवणाद्वाऽपि जायते ॥ २८॥

न त्वं स्मरसि वारुण्या [1]खगानां च न पक्षिणाम् ।
[2]तेभ्यश्चाभ्यधिको भक्ष्यो न कश्चिद्विद्यते क्वचित् ॥ २९॥

यानि चान्यानि भूतेषु भक्ष्यभोज्यानि काश्यप ।
येषामभुक्तपूर्वाणि तेषामस्मृतिरेव च ॥ ३०॥

अप्राशनमसंस्पर्शो ह्यसन्दर्शनमेव च ।
पुरुषस्यैष नियमो मन्ये श्रेयो न संशयः ॥ ३१॥

---

1. ख—कट्वङ्गानां च 2. ख—ताभ्यां चा

पाणिमन्तो हि धनिनो बलवन्तो न संशयः ।
मनुष्या मानुषैरेव दासत्वमुपपादिताः ॥ ३२॥

वधबन्धपरिक्लेशैः क्लिश्यन्ते च पुनः पुनः ।
ते खल्वपि रमन्ते च मोदन्ते च हसन्ति च ॥ ३३॥

अपरे बाहुबलिनः कृतविद्या मनस्विनः ।
जुगुप्सितां सुकृपणां पापां वृत्तिमुपासते ॥ ३४॥

उत्सहन्ते च ते वृत्तिम् अन्यामप्युपसेवितुम् ।
स्वकर्मणा तु नियतं भवितव्यं हि तत्तथा ॥ ३५॥

न पुल्कसो न चण्डाल आत्मानं त्यक्तुमिच्छति ।
तया तुष्टस्त्वया [1]योन्या मायां प्रेक्षस्व यादृशीम् ॥ ३६॥

दृष्ट्वा कुणीन् [2]पक्षहतान् मनुष्यानामयाविनः ।
सुसन्तुष्टस्त्वया योन्या लब्धलाभोऽसि काश्यप ॥ ३७॥

यदि ब्राह्मणदेहस्ते निरातङ्को निरामयः ।
अङ्गानि च समग्राणि न च लोकेषु धिक्कृतः ॥ ३८॥

न केनचित् प्रवादेन सत्येनैवापहारिणा ।
धर्मायोत्तिष्ठ विप्रर्षे नात्मानं त्यक्तुमर्हसि ॥ ३९॥

यदि ब्रह्मञ् शृणोष्येतच् छ्रद्दधासि च मे वचः ।

1. क-घ—वृत्या 2. ग—पङ्गुकांश्च

[1]मुख्यं फलमवाप्नासि वेदोक्तस्यैव कर्मणः ॥　४०॥

स्वाध्यायमग्निसत्कारम् अप्रमत्तोऽनुपालय ।
सत्यं दमं च दानं च स्पर्धिष्ठा मा च केनचित् ॥　४१॥

ये केचन ह्यध्ययनं प्राप्ता यजनयाजनम् ।
कथं ते तात शोचेयुर् ध्यायेयुर्वाऽप्यशोभनम् ॥　४२॥

इच्छन्तस्ते विहाराय सुखं महदवाप्नुयुः ।
येऽनुजातास्सुनक्षत्रे सुतिथौ सुमुहूर्तजाः ॥　४३॥

नक्षत्रेष्वासुरेष्वन्ये दुस्तिथौ दुर्मुहूर्तजाः ।
सम्पतन्त्यासुरीं योनिं यज्ञव्रतविवर्जिताः ॥　४४॥

अहमासं पण्डितको हैतुको वेदनिन्दकः ।
आन्वीक्षिकीं तर्कविद्याम् अनुरक्तो निरर्थिकाम् ॥　४५॥

हेतुवादान् प्रवदिता वक्ता संसत्सु हेतुमत् ।
आक्रोष्टा चातिवक्ता च ब्रह्मवाक्येषु वै द्विज ॥　४६॥

नास्तिकस्सर्वशङ्की च मूर्खः पण्डितमानिकः ।
तस्येयं फलनिर्वृत्तिस् सृगालत्वं मम द्विज ॥　४७॥

अपि जातु तथा तत् स्याद् अहोरात्रशतैरपि ।
यदहं मानुषीं योनिं सृगालः प्राप्नुयां पुनः ॥　४८॥

सन्तुष्टश्चाप्रमत्तश्च यज्ञदानतपोरतः ।

---

1. ख—अवाप्स्यसि फलं मुख्यं

ज्ञेयं ज्ञाता भवेयं वै वर्ज्यं वर्जयिता तथा ॥ ४९॥

भीष्मः—

ततस्स मुनिरुत्थाय काश्यपस्तमुवाच ह ।
अहो बतासि कुशलो बुद्धिमानिति विस्मितः ॥ ५०॥

समवैक्षत तं विप्रो ज्ञानदीप्तेन चक्षुषा ।
ददर्श चैनं देवानाम् इन्द्रं देवं शतक्रतुम् ॥ ५१॥

ततस्सम्पूजयामास काश्यपो हरिवाहनम् ।
अनुज्ञातस्तु तेनाथ प्रविवेश स्वमाश्रमम् ॥ ५२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि विंशोऽध्यायः ॥ २० ॥
[ अस्मिन्नध्याये ५२॥ श्लोकाः ]

---

## ॥ एकोनसप्तत्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति तपोदानादिसत्कर्मणामपि परम्परया सुखसाधनताकथनम् ॥

---

युधिष्ठिरः—

यद्यस्ति दत्तमिष्टं वा तपस्तप्तं कृतं तथा ।
गुरूणां वाऽपि शुश्रूषा तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

आत्मनाऽनर्थयुक्तेन पापे निविशते मनः ।
स्वकर्म कलुषं कृत्वा [1]लोके कृच्छ्रे विधीयते ॥ २

दुर्भिक्षादेव दुर्भिक्षं क्लेशात् क्लेशं भयाद्भयम् ।
[2]मृतेभ्यः प्रमृतं यान्ति दरिद्राः पापकारिणः ॥ ३

उत्सवादुत्सवं यान्ति स्वर्गात् स्वर्गं सुखात् सुखम् ।
श्रद्दधानाश्च दान्ताश्च सत्त्वस्थाश्शुभकारिणः ॥ ४

व्यालकुञ्जरदुर्गेषु सर्पचोरभयेषु च ।
हस्तावापेन गच्छन्ति नास्तिकाः किमतः परम् ॥ ५

प्रियदेवातिथेयाश्च वदान्याः प्रियसाधवः ।
क्षेम्यमात्मवतां मार्गम् आस्थिता हस्तदक्षिणम् ॥ ६

पुलाका इव धान्येषु पूत्यण्डा इव पक्षिषु ।
तद्विधास्ते मनुष्येषु येषां धर्मो न कारणम् ॥ ७

सुशीघ्रमपि धावन्तं विधानमनुधावति ।
शेते सह शयानेन येन येन यथाकृतम् ॥ ८

उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति ।
करोति कुर्वतः कर्म छायेवाऽनुविधीयते ॥ ९

---

1. ख—पितृलोके निधीयते  ग—दुःखे महति धीयते
2. घ—भृत्येभ्यः प्रभृतं

येन येन यथा यद्यत् पुरा कर्म समार्जितम् ।
तत्तदेव नरो भुङ्क्ते नित्यं विहितमात्मना ॥ १०

स्वकर्मफलनिक्षेपं विधानपरिरक्षितम् ।
भूतग्राममिमं कालस् समन्तात् परिकर्षति ॥ ११

अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वं कालं नातिवर्तन्ते तथा कर्म पुरा कृतम् ॥ १२

[1]सम्मानश्चावमानश्च लाभालाभौ क्षयोदयौ ।
प्रवृत्तानि विवर्तन्ते विधानान्ते पुनः पुनः ॥ १३

[2]आत्मना विहितं दुःखम् आत्मनैवोपभुज्यते ।
गर्भशय्यामुपादाय भुज्यते पौर्वदेहिकम् ॥ १४

बालो युवा च वृद्धश्च यत् करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां भुङ्क्ते जन्मनि जन्मनि ॥ १५

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ १६

संस्विन्नमग्रतो वस्त्रं पश्चाच्छुध्यति वारिणा ।
[3]दुष्कर्मापि तथा पश्चात् पूयते पुण्यकर्मणा ॥ १७

[4]तपसा तप्यते देहस् तपसा विन्दते महत् ।

---

1. अ-क-घ——अर्धद्वयं नास्ति 2. घ—नास्तीदमर्धम्
3. अ-ख-घ—नास्तीदमर्धम् 4. अ—अर्धद्वयं नास्ति

उपवासप्रतप्तानां दीर्घं सुखमनन्तरम् ॥ १८

दीर्घकालेन तपसा सेवितेन तपोवने ।
धर्मनिर्धूतपापानां संसिध्यन्ते मनोरथाः ॥ १९

शकुनीनामिवाकाशे मत्स्यानामिव चोदके ।
पदं यथा न दृश्येत तथा धर्मविदां गतिः ॥ २०

अलमन्यैरुपालम्भैः कीर्तितैश्च व्यतिक्रमैः ।
पेशलं चानुरूपं च कर्तव्यं हितमात्मनः ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
[अस्मिन्नध्याये २१ श्लोकाः]

---

## ॥ सप्तत्यधिकशततमोऽध्यायः ॥



युधिष्ठिरेण जगत्सृष्टिप्रकारं पृष्टेन भीष्मेण भारद्वाजाय भृगूदितसृष्टि-प्रकारकथनारम्भः ॥ १ ॥ भृगुणा भारद्वाजं प्रति महत्तत्त्वादिपद्मपर्यन्त-सृष्टिप्रकारकथनम् ॥ २ ॥ तथा पद्मकर्णिकाभूतमेरुस्थेन ब्रह्मणाकृताया-लोकसृष्टेः कथनम् ॥ ३ ॥

---

युधिष्ठिरः—

कुतस्सृष्टमिदं सर्वं जगत् स्थावरजङ्गमम् ।
प्रलये च किमभ्येति तन्मे ब्रूहि पितामह ॥ १

ससागरस्सगगनस् सशैलस्सवलाहकः ।
सभूमिस्साग्निपवनो लोकोऽयं केन निर्मितः ॥ २

कथं सृष्टानि भूतानि कथं वर्णविभक्तयः ।
शौचाशौचं कथं तेषां धर्माधर्मावथो कथम् ॥ ३

कीदृशो जीवतां जीवः क्व वा गच्छन्ति ये मृताः ।
अमुं लोकमिमं चापि सर्वं शंसतु नो भवान् ॥ ४

भीष्मः—

[1]अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
भृगुणाऽभिहितं श्रेष्ठं भारद्वाजाय पृच्छते ॥ ५

कैलासशिखरे दृष्ट्वा दीप्यमानमिवौजसा ।
भृगुं महर्षिमासीनं भारद्वाजोऽन्वपृच्छत ॥ ६

भारद्वाजः—

कुतस्सृष्टमिदं सर्वं जगत् स्थावरजङ्गमम् ।
प्रलये च किमभ्येति तन्मे ब्रूहि द्विजोत्तम ॥ ७

ससागरस्सगगनस् सशैलस्सवलाहकः ।
सभूमिस्साग्निपवनो लोकोऽयं केन निर्मितः ॥ ८

[2]कथं सृष्टानि भूतानि कथं वर्णविभक्तयः ।
शौचाशौचं कथं तेषां धर्माधर्मावथो कथम् ॥ ९

1. ख—अर्धपञ्चदशकं नास्ति
2. अ-क-घ—अर्धत्रयं नास्ति

कीदृशो जीवतां जीवः क्व वा गच्छन्ति ये मृताः ।
अमुं लोकमिमं चापि सर्वं शंसतु नो भवान् ॥ १०

भीष्मः—

एवं स भगवान् पृष्टो भारद्वाजेन संशयम् ।
ब्रह्मर्षिर्ब्रह्मसङ्काशस् सर्वं तस्मै ततोऽब्रवीत् ॥ ११

भृगुः—

नारायणो जगन्मूर्तिर् अन्तरात्मा सनातनः ।
कूटस्थोऽक्षर अव्यक्तो निर्लेपो व्यापकः प्रभुः ॥ १२

प्रकृतेः परतो नित्यम् इन्द्रियैरप्यगोचरः ।
स सिसृक्षुस्सहस्रांशाद् असृजत् पुरुषं प्रभुः ॥ १३

[1]मानसो नाम विख्यातश् श्रुतपूर्वो महर्षिभिः ।
[2]अनादिनिधनो देवस् तथाऽभेद्योऽजरामरः ॥ १४

अव्यक्त इति विख्यातश् शाश्वतोऽथाक्षयोऽव्ययः ।
यतस्सृष्टानि भूतानि तिष्ठन्ति च म्रियन्ति च ॥ १५

सोऽसृजत् प्रथमं देवो महान्तं नाम नामतः ।
आकाशमिति विख्यातं सर्वभूतधरः प्रभुः ॥ १६

---

1. ख—एवं स भगवान् पृष्टो भारद्वाजेन संशयम् ।
महर्षिर्ब्रह्मसङ्काशस् सर्वं तस्मै ततोऽब्रवीत् ॥ [अधिकः पाठः]
भृगुः—

2. अ-क-घ—नास्तीदमर्धम्

आकाशादभवद्वारि सलिलादग्निमारुतौ ।
अग्निमारुतसंयोगात् ततस्समभवन्मही ॥ १७

ततस्तेजोमयं दिव्यं पद्मं सृष्टं स्वयम्भुवा ।
तस्मात् पद्मात् समभवद् ब्रह्मा वेदमयो निधिः ॥ १८

अहङ्कार इति ख्यातस् सर्वभूतात्मभूतकृत् ।
ब्रह्मा वै सुमहातेजा य एते पञ्च धातवः ॥ १९

शैलास्तस्यास्थिसंज्ञास्तु मेदो मांसं च मेदिनी ।
समुद्रास्तस्य रुधिरम् आकाशमुदरं तथा ॥ २०

पवनश्चैव निश्श्वासस् तेजोऽग्निर्निम्नगास्सिराः ।
दिवाकरश्च सोमश्च [1]नयने तस्य विश्रुते ॥ २१

नभश्चोर्ध्वं शिरस्तस्य क्षितिः पादौ भुजौ दिशः ।
दुर्विज्ञेयो ह्यनन्तत्वात् सिद्धैरपि न संशयः ॥ २२

स एष भगवान् विष्णुर् अनन्त इति विश्रुतः ।
सर्वभूतात्मभूतस्थो दुर्विज्ञेयोऽकृतात्मभिः ॥ २३

अहङ्कारस्य यस्स्रष्टा सर्वभूतोद्भवाय वै ।
ततस्समभवद्विश्वं पृष्टोऽहं यदिह त्वया ॥ २४

भारद्वाजः—

गगनस्य [2]दिशश्चैव भूजलस्यानिलस्य च ।

---

1. अ-क-घ—इतः चत्वारः पादा न सन्ति
2 ख—दिशां चैव भूतलस्य

कान्यत्र परिमाणानि संशयं छिन्धि मेऽर्थतः ॥ २५

भृगुः—

अनन्तमेतदाकाशं सिद्धचारणसेवितम् ।
रम्यं नानाश्रयाकीर्णं यस्यान्तो नाधिगम्यते ॥ २६

ऊर्ध्वं गतेरधस्तात्तु [1]दृश्येते नेन्दुभास्करौ ।
तत्र देवास्स्वयं दीप्तास् सूर्यभासोऽग्निवर्चसः ॥ २७

[2]ते चाप्यन्तं न पश्यन्ति नभसः प्रथितौजसः ।
दुर्गमत्वादनन्तत्वाद् इति वै विद्धि मानद ॥ २८

उपर्युपरि तैर्देवैः प्रज्वलद्भिस्स्वयम्प्रभैः ।
निरुद्धमेतदाकाशम् अप्रमेयं सुरैरपि ॥ २९

पृथिव्यन्ते समुद्रास्तु समुद्रान्ते तमस्स्मृतम् ।
तमसोऽन्ते जलं प्राहुर् जलस्यान्तेऽग्निरेव च ॥ ३०

[3]रसातलान्ते सलिलं जलान्ते पन्नगाधिपाः ।
तदन्ते पुनराकाशम् आकाशान्ते पुनर्जलम् ॥ ३१

एवमन्तं हि [4]नभसः प्रमाणं सलिलस्य च ।
अग्निमारुतयोश्चैव दुर्ज्ञेयं दैवतैरपि ॥ ३२

---

1. ख—चन्द्रादित्यौ न दृश्यतः
2. अ-क-घ—तेषामन्तं न पश्यन्ति ; ग—ते चाप्यन्तं न गच्छन्ति
3. ख-घ—अधैतयं नास्ति
4. ग—न भुवः प्र

अग्निमारुततोयानां वर्णाः क्षितितलस्य च ।
आकाशसदृशा ह्येते भिद्यन्तेऽतत्त्वदर्शनात् ॥ ३३

पठन्ति चैव मुनयश् शास्त्रेषु विविधेषु च ।
त्रैलोक्ये सागरे चैव प्रमाणं विहितं यथा ॥ ३४

अदृश्याय त्वगम्याय कः प्रमाणमुदाहरेत् ॥ ३४॥
सिद्धानां देवतानां च यदा परिमिता गतिः ।
अतो गौणमनन्तस्य नामानन्तेति विश्रुतम् ॥ ३५॥
नामधेयानुरूपस्य मानसस्य महात्मनः ।
यस्य दिव्यं हि तद्रूपं हीयते वर्धते न च ॥ ३६॥
कोऽन्यस्तद्वेदितुं शक्तो यो न स्यात् तद्विधोऽपरः ॥ ३७

ततः पुष्करतस्सृष्टस् सर्वज्ञो मूर्तिमान् प्रभुः ।
ब्रह्मा धर्ममयः पूर्वं प्रजापतिरनुत्तमः ॥ ३८

भारद्वाजः—

पुष्कराद्यदि सम्भूतो ज्येष्ठं भवति पुष्करम् ।
ब्रह्माणं पूर्वजं चाह भवान् सन्देह एव मे ॥ ३९

भृगुः—

मानसस्येह या मूर्तिर् ब्रह्मत्वं समुपागता ।
तस्यासनविधानार्थं पृथिवी पद्ममुच्यते ॥ ४०

कर्णिका तस्य पद्मस्य मेरुर्गगनमुच्छ्रितः ।
तस्य मध्ये स्थितो लोकान् सृजते जगतः प्रभुः ॥　　४१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
[अस्मिन्नध्याये ४१ श्लोकाः]

---

## ॥ एकसप्तत्यधिकशततमोऽध्यायः ॥

भारद्वाजं प्रति भृगुणा मेरुस्थब्रह्मणा जलादिभूम्यन्तसृष्टिप्रकार-कथनम् ॥

---

भारद्वाजः—

मेरुमध्ये स्थितो ब्रह्मा कथं स ससृजे प्रजाः ।
एतन्मे सर्वमाचक्ष्व याथातथ्येन पृच्छतः ॥　　१

भृगुः—

प्रजाविसर्गं [1]पूर्वं हि मानसो मनसाऽसृजत् ।
संरक्षणार्थं भूतानां सृष्टं प्रथमतो जलम् ॥　　२

यः प्राणस्सर्वभूतानां वर्धन्ते येन च प्रजाः ।
परित्यक्ताश्च नश्यन्ति तेनेदं सर्वमावृतम् ॥　　३

पृथिवी पर्वता मेघा मूर्तिमन्तश्च ये परे ।

---

1. ख—विविधं

सर्वं तद्वारुणं ज्ञेयम् आपस्तस्तम्भिरे हि ताः ॥ ४

भारद्वाजः—

कथं सलिलमुत्पन्नं कथं चैवाग्निमारुतौ ।
कथं च मेदिनी सृष्टेत्यत्र मे संशयो महान् ॥ ५

भृगुः—

ब्रह्मकल्पे पुरा ब्रह्मन् ब्रह्मर्षीणां समागमे ।
लोकसम्भवसन्देहस् समुत्पन्नो महात्मनाम् ॥ ६

तेऽतिष्ठन् ध्यानमालम्ब्य मौनमास्थाय निश्चलाः ।
त्यक्ताहाराः पवनपा दिव्यं वर्षशतं द्विजाः ॥ ७

तेषां धर्ममयी वाणी सर्वेषां श्रोत्रमागमत् ।
दिव्या सरस्वती तत्र सम्बभूव नभस्थलात् ॥ ८

पुरा स्तिमितनिश्शब्दम् आकाशमचलोपमम् ।
नष्टचन्द्रार्कपवनं प्रसुप्तमिव सम्बभौ ॥ ९

ततस्सलिलमुत्पन्नं तमसीवापरं तमः ।
तस्माच्च सलिलोत्पीडात् समजायत मारुतः ॥ १०

यथा भाजनमच्छिद्रं निश्शब्दमिव लक्ष्यते ।
तच्चाम्भसा पूर्यमाणं सशब्दं कुरुतेऽनिलः ॥ ११

तथा सलिलसंरुद्धे नभसोऽन्ते निरन्तरे ।

भित्त्वाऽर्णवतलं वायुस् समुत्पतति [1]वेगवान् ॥ १२

स एष चरते वायुर् अर्णवोत्पीडसम्भवः ।
आकाशं स्थानमासाद्य प्रशान्तिं नाधिगच्छति ॥ १३

तस्मिन् वाय्वम्बुसङ्घर्षे दीप्ततेजा महाबलः ।
प्रादुर्बभूवोर्ध्वशिखः कृत्वा वितिमिरं नभः ॥ १४

अग्निः पवनसंयुक्तः खात् समुत्क्षिपते जलम् ।
अग्निमारुतसंयोगाद् घनत्वमुपपद्यते ॥ १५

तस्याकाशान्निपतितस् स्नेहस्तिष्ठति योऽपरः ।
स सङ्घातत्वमापन्नो भूमित्वमुपगच्छति ॥ १६

रसानां सर्वगन्धानां स्नेहानां प्राणिनां तथा ।
भूमिर्योनिरिह ज्ञेया यस्यां सर्वं प्रसूयते ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
॥ अस्मिन्नध्याये १७ श्लोकाः ॥

---

1. ख—घोषवान्

## ॥ द्विसप्तत्यधिकशततमोऽध्यायः ॥

भारद्वाजं प्रति भृगुणा वृक्षादीनामपि भौतिकत्वचैतन्यादिसमर्थनम् ॥

भारद्वाजः—

य एते धातवः पञ्च ब्रह्मा यानसृजत् पुरा ।
आवृता यैरिमे लोका महाभूताभिसंज्ञितैः ॥ १

यदाऽसृजत् सहस्राणि भूतानां स महामतिः ।
पञ्चानामेव भूतत्वं कथं समुपपद्यते ॥ २

भृगुः—

अमितानां महाशब्दो भूतानां याति सम्भवम् ।
ततस्तेषां महाभूतशब्दोऽयमुपपद्यते ॥ ३

चेष्टा वायुः खमाकाशम् ऊष्माऽग्निस्सलिलं द्रवः ।
पृथिवी चात्र सङ्घातश् शरीरं पाञ्चभौतिकम् ॥ ४

इत्येतैः पञ्चभिर्भूतैर् युक्तं स्थावरजङ्गमम् ।
श्रोत्रं घ्राणं रसस्पर्शौ दृष्टिश्चेन्द्रियसंज्ञिताः ॥ ५

भारद्वाजः—

पञ्चभिर्यदि भूतैस्तु युक्तास्स्थावरजङ्गमाः ।
स्थावराणां न दृश्यन्ते शरीरे पञ्च धातवः ॥ ६

अनूष्मणामचेष्टानां [1]जडानां चैव सर्वशः ।
वृक्षाणां नोपलभ्यन्ते शरीरे पञ्च धातवः ॥ ७

न शृण्वन्ति न पश्यन्ति न गन्धरसवेदिनः ।
न च स्पर्शं विजानन्ति ते कथं पाञ्चभौतिकाः ॥ ८

अद्रवत्वादनग्नित्वाद् अभूमित्वादवायुतः ।
आकाशस्याप्रमेयत्वाद् वृक्षाणां नास्ति भौतिकम् ॥ ९

भृगुः—

[2]सुखदुःखयोश्च ग्रहणाच् छिन्नस्य च विरोहणात् ।
जीवं पश्यामि वृक्षाणाम् अचैतन्यं न विद्यते ॥ १०

ऊष्मतो [3]म्लायते वर्णं त्वक्फलं पुष्पमेव वा ।
म्लायते चैव शीतेन स्पर्शस्तेनात्र विद्यते ॥ ११

वाय्वग्न्यशनिनिष्पेषैः फलं पुष्पं विशीर्यते ।
श्रोत्रेण गृह्यते शब्दस् तस्माच्छृण्वन्ति पादपाः ॥ १२

वल्ली वेष्टयते वृक्षं सर्वतश्चैव गच्छति ।
नाप्यदृष्टेश्च मार्गोऽस्ति तस्मात् पश्यन्ति पादपाः ॥ १३

पुण्यापुण्यैस्तथा गन्धैर् धूपैश्च विविधैरपि ।

---

1. ख-ग—घनानां
2. ख—घनानामपि वृक्षाणामाकाशोऽस्ति न संशयः ।
तेषां पुष्पफले व्यक्तिर्नित्यं समुपपद्यते ॥ [पाठान्तरम्]
3. क-ख—ग्लायते

[1]भवन्त्यरोगाः पुष्पाढ्यास् तस्माज्जिघ्रन्ति पादपाः ॥ १४

[2]पादैस्सलिलपानाच्च व्याधीनां चापि दर्शनात् ।
व्याधिप्रतिक्रियत्वाच्च विद्यते रसनं द्रुमे ॥ १५

वक्रेणोत्पलनालेन यथोऽर्ध्वं जलमाददेत् ।
तथा पवनसंयुक्तः पादैः पिबति पादपः ॥ १६

[3]तेन तज्जलमादत्तं जरयेदग्निमारुतौ ।
आहारपरिणामाच्च स्नेहो वृद्धिश्च जायते ॥ १७

[4]घनानामपि वृक्षाणाम् आकाशोऽस्ति न संशयः ।
तेषां पुष्पफलैर्व्यक्तिर् नित्यं समुपलभ्यते ॥ १८

जङ्गमानां च सर्वेषां शरीरे पञ्च धातवः ।
प्रत्येकशः प्रभिद्यन्ते यैश्शरीरं विचेष्टते ॥ १९

त्वक् च मांसं तथाऽस्थीनि मज्जा स्नायुश्च पञ्चमः ।
इत्येतदिह सङ्घातश् शरीरे पृथिवीमयः ॥ २०

तेजो ह्यग्निस्तथा क्रोधश् चक्षुरूष्मा तथैव च ।
अग्निर्जरयते चापि पञ्चाग्नेयाश्शरीरतः ॥ २१

---

1. ख—अरोगाः पुष्पितास्सन्ति
2. ख—अर्धचतुष्टयं नास्ति
3. ख—सुखदुःखयोश्च ग्रहणाच्छिन्नस्य च विरोहणात् ।
   जीवं पश्यामि वृक्षाणाम् अचैतन्यं न विद्यते ॥ [अधिकः पाठः]
4. ख—अर्धद्वयं नास्ति

श्रवणं घ्राणमास्यं च हृदयं कोष्ठमेव च ।
आकाशात् प्राणिनामेते शरीरे पञ्च धातवः ॥ २२

श्लेष्मा पित्तमथ स्वेदो वसा शोणितमेव च ।
इत्यापः पञ्चधा देहे वसन्ति प्राणिनां सदा ॥ २३

प्राणात् प्राणयते प्राणी व्यानाद्व्यायच्छते सदा ।
गच्छत्यपानेनार्वाक् च समानेन समास्थितः ॥ २४

उदानादुच्छ्वसिति च वृत्तिभेदाच्च भाषते ।
इत्येते वायवः पञ्च रसो गन्धश्च भूगुणः ॥ २५

[1]भूमेर्गन्धगुणान् वेत्ति रसं चाद्भ्यश्शरीरवान् ।
ज्योतिः पश्यति रूपाणि स्पर्शं वेत्ति च वायुतः ॥ २६
शब्दं शृणोति च तथैवाकाशात्तु शरीरवान् ॥ २६॥

गन्धस्स्पर्शो रसो रूपं शब्दश्चात्र गुणास्स्मृताः ।
शब्दस्स्पर्शश्च रूपं च रसो गन्धाश्च भूगुणाः ॥ २७॥
तस्य गन्धस्य वक्ष्यामि विस्तराभिहितान् गुणान् ॥ २८

इष्टश्चानिष्टगन्धश्च मधुरः कटुकस्तथा ।
निर्हारी संहतस्स्निग्धो रूक्षो विशद एव च ॥ २९
एवं नवविधो ज्ञेयः पार्थिवो गन्धविस्तरः ॥ २९॥

---

1. अ-क-ख—अर्धचतुष्टयं नास्ति

[1]शब्दस्स्पर्शश्च रूपं च रसश्चापि गुणास्स्मृताः ॥ ३०

रसज्ञानं तु वक्ष्यामि तन्मे निगदतश्शृणु ।
रसो बहुविधः प्रोक्तस् सूरिभिः प्रथितात्मभिः ॥ ३१

मधुरो लवणस्तिक्तः कषायोऽम्लः कटुस्तथा ।
एवं षड्विधविस्तारो रसो वारिमयस्स्मृतः ॥ ३२

शब्दस्स्पर्शश्च रूपं च त्रिगुणं ज्योतिरुच्यते ।
ज्योतिः पश्यति रूपाणि रूपं च बहुधा स्मृतम् ॥ ३३

ह्रस्वो दीर्घः कृशस्स्थूलश् चतुरस्रश्च वृत्तवान् ।
शुक्लः कृष्णस्तथा रक्तो नीलः पीतोऽरुणस्तथा ॥ ३४

एवं द्वादशविस्तारो ज्योतिषोऽपि गुणस्स्मृतः ॥ ३४॥

[2-3]शब्दस्स्पर्शश्च वायव्यस् स्पर्शश्च बहुधा स्मृतः ॥ ३५

उष्णश्शीतस्सुखो दुःखस् स्निग्धो विशद एव च ।
कठिनश्चिक्कणश्श्लक्ष्णः पिच्छिलो मृदुदारुणौ ॥ ३६

एवं द्वादशविस्तारो वायव्यो गुण उच्यते ॥ ३६॥

तत्रैकगुणमाकाशं शब्द इत्येव स स्मृतः ।
तस्य शब्दस्य वक्ष्यामि विस्तरं विविधं स्मृतम् ॥ ३७॥

---

1. ख—ज्योतिः पश्यति चक्षुर्भ्यां स्पर्शं वेत्ति च वायुना । [अधिकः पाठः]
2. ख—शब्दःस्पर्शस्तु विज्ञेयो द्विगुणो वायुरुच्यते । [अधिकः पाठः]
3. ख—वायव्यस्तु गुणःस्पर्शः स्पर्शश्च बहुधा स्मृतः । [पाठान्तरम्]

[1]षड्जस्त्वृषभगान्धारौ मध्यमः पञ्चमस्तथा ।
धैवतश्च निषादश्च सप्तैते शब्दजा गुणाः ॥ ३८॥

[2]एष सप्तविधः प्रोक्तश् शब्द आकाशलक्षणः ।
त्रैस्वर्येण तु सर्वत्र स्थितोऽपि पटहादिषु ॥ ३९॥

[3]आकाशजं शब्दमाहुर् एभिर्वायुगुणैर्युतम् ।
अव्याहतैश्चेतयते न वेत्ति विषमाहतैः ॥ ४०॥

आप्याय्यन्ते च ते नित्यं धातवस्तैस्तु [4]धातुभिः ।
आपोऽग्निर्मारुतश्चैव नित्यं जाग्रति देहिषु ॥ ४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
[ अस्मिन्नध्याये ४१॥ श्लोकाः ]

---

1. ख—शान्तो घोरश्च मूढश्च तारस्सङ्कर्षजस्तथा । [अधिकः पाठः]
2. अ-ख—नास्त्यर्धद्वयमिदम्
3. अ-क-ग-घ—नास्तीदमर्धद्वयम्
4. ग-घ—पञ्चभिः

## ॥ त्रिसप्तत्यधिकशततमोऽध्यायः ॥



भारद्वाजं प्रति भृगुणा शरीरे प्राणापानादीनां कार्यविशेषनिरूपणम् ॥

भारद्वाजः—

पार्थिवं धातुमाश्रित्य शारीरोऽग्निः कथं भवेत् ।
अवकाशविशेषेण कथं वर्तयतेऽनिलः ॥ १

भृगुः—

वायोर्गतिमहं ब्रह्मन् कीर्तयिष्यामि तेऽनघ ।
प्राणिनामनिलो देहान् यथा चेष्टयते बली ॥ २

श्रितो मूर्धानमग्निस्तु शरीरं परिपालयन् ।
प्राणो मूर्धनि चाग्नौ च वर्तमानो विचेष्टते ॥ ३

स जन्तुस्सर्वभूतात्मा पुरुषस्स सनातनः ।
मनो बुद्धिरहङ्कारो भूतानि विषयाश्च सः ॥ ४

एवं त्विह स सर्वत्र प्राणेन परिपाल्यते ।
कोष्ठतस्तु समानेन स्वां स्वां गतिमुपाश्रितः ॥ ५

बस्तिमूलं गुदं चैव पावकं च समाश्रितः ।
वहन् मूत्रपुरीषं चाप्यपानः परिवर्तते ॥ ६

प्रयत्ने कर्मणि बले य एकस्त्रिषु वर्तते ।

उदान इति तं प्राहुर् अध्यात्मकुशला जनाः ॥ ७

सन्धिष्वपि च सर्वेषु सन्निविष्टस्तथाऽनिलः ।
शरीरेषु मनुष्याणां व्यान इत्युपदिश्यते ॥ ८

धातुष्वग्निस्तु विततस् समानोऽग्निस्समीरितः ।
रसान् धातूंश्च दोषांश्च वर्तयन्नवतिष्ठते ॥ ९

अपानप्राणयोर्मध्ये प्राणापानसमाहितः ।
समन्वितस्समानेन सम्यक् पचति पावकः ॥ १०

आस्यं हि पायुसंयुक्तम् अन्ते स्याद्गुदसंज्ञितम् ।
स्रोतस्तस्मात् प्रजायन्ते सर्वस्रोतांसि देहिनाम् ॥ ११

प्राणानां सन्निपाताच्च सन्निपातः प्रजायते ।
ऊष्मा सोऽग्निरिति ज्ञेयो योऽन्नं पचति देहिनाम् ॥ १२

अग्निवेगवहः प्राणो गुदान्ते प्रतिहन्यते ।
स ऊर्ध्वमागम्य पुनस् समुत्क्षिपति पावकम् ॥ १३

पक्वाशयस्त्वधो नाभ्या ऊर्ध्वमामाशयस्स्मृतः ।
नाभिमध्ये शरीरस्य सर्वे प्राणास्तदाश्रिताः ॥ १४

प्रसृता हृदयात् सर्वास् तिर्यगूर्ध्वमधस्तथा ।
वहन्त्यन्नरसान् नाड्यो दशप्राणप्रचोदिताः ॥ १५

एष मार्गोऽथ योगानां येन गच्छन्ति तत् पदम् ।

जितक्लमासना धीरा मूर्धन्यात्मानमादधन् ॥ १६

एवं सर्वेषु विहितः प्राणापानेषु देहिनाम् ।
तस्मिन् योऽवस्थितो नित्यम् अग्निस्स्थाल्यामिवाहितः ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
[ अस्मिन्नध्याये १७ श्लोकाः ]

---

## ॥ चतुस्सप्तत्यधिकशततमोऽध्यायः ॥



भारद्वाजेन भृगुं प्रति सयुक्तिकं सङ्घाताभ्यजीवपक्षाक्षेपः ॥

---

भारद्वाजः—

यदि प्राणयते वायुर् वायुरेव विचेष्टते ।
श्वसते भाषते चैव तस्माज्जीवो निरर्थकः ॥ १

यदूष्मभाव आग्नेयो वह्निना पच्यते यदि ।
अग्निर्जरयते चैव तस्माज्जीवो निरर्थकः ॥ २

जन्तोः प्रम्रियमाणस्य जीवो नैवोपलभ्यते ।
वायुरेव जहात्येनम् ऊष्मभावश्च नश्यति ॥ ३

यदि वातोपमो जीवस् संश्लेषो यदि वायुना ।
वायुमण्डलवद्दृश्येद् गच्छन् सह मरुद्गणैः ॥ ४

श्लेष्मो वा यदि वातेन यदि तस्मात् प्रणश्यति ।
महार्णववियुक्तत्वाद् अन्यत् सलिलभाजनम् ॥　५

[1]यत् क्षिपेत् सलिलं कूपे प्रदीपं वा हुताशने ।
तन्नश्यत्युभयं तद्वज् जीवो वातानलात्मकः ॥　६

पञ्चसाधारणे ह्यस्मिन् शरीरे जीवितं कुतः ।
तेषामन्यतरत्यागाच् चतुर्णां नास्ति सङ्ग्रहः ॥　७

नश्यन्त्यापो ह्यनाधाराद् वायुरुच्छ्वासनिग्रहात् ।
नश्यते कोष्ठभेदात् खम् अग्निर्नश्यत्यभोजनात् ॥　८

व्याधिप्राणपरिक्लेशैर् मेदिनी चैव शीर्यते ।
पीडितेऽन्यतमे ह्येषां सङ्घातो याति पञ्चताम् ॥　९

तस्मिन् पञ्चत्वमापन्ने जीवः किमनुधावति ।
किं वा वेदयते जीवः किं शृणोति ब्रवीति वा ॥　१०

एषा गौः परलोकस्थं तारयिष्यति मामिति ।
यो दत्त्वा म्रियते जन्तुस् सा गौः कं तारयिष्यति ॥　११

गौश्च प्रतिग्रहीता च दाता चैव समं यदा ।
इहैव विलयं यान्ति कुतस्तेषां समागमः ॥　१२

विहगैरुपयुक्तस्य शैलाग्रात् पतितस्य वा ।

---

1. ख—कूपे वा सलिलं यद्वत् प्रदीपो वा हुताशने ।
क्षिप्रं प्रविष्टं नश्यन्ति यथा नश्यत्यसौ तथा ॥　[पाठान्तरम्]

अग्निना चोपयुक्तस्य कुतस्सञ्जीवनं पुनः ॥ १३

छिन्नस्य यदि वृक्षस्य न मूलं प्रतिरोहति ।
बीजान्यस्य प्ररोहन्ति [1]मृतः क्व पुनरेष्यति ॥ १४

बीजमात्रं पुरा सृष्टं यदेतत् परिवर्तते ।
मृता मृताः प्रणश्यन्ति बीजाद्बीजं प्रवर्तते ॥ १५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुस्सप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
[अस्मिन्नध्याये १५ श्लोकाः]

---

## ॥ पञ्चसप्तत्यधिकशततमोऽध्यायः ॥



भृगुणा भारद्वाजं प्रति सङ्घातातिरिक्तजीवसमर्थनपूर्वकं तन्निरूपणम्॥

---

भृगुः—

न प्रणाशोऽस्ति जीवानां दत्तस्य च कृतस्य च ।
याति देहान्तरं प्राणी शरीरं तु विशीर्यते ॥ १

न शरीराश्रितो जीवस् तस्मिन् नष्टे प्रणश्यति ।
यथा समित्सु दग्धासु न प्रणश्यति पावकः ॥ २

---

1. अ-क-घ—न मृतः

भारद्वाजः—

अग्नेर्यथा समिद्धस्य यदि नाशो न विद्यते ।
इन्धनस्योपयोगान्ते स चाग्निर्नोपलभ्यते ॥ ३

नश्यतीत्येव जानामि शान्तमग्निमनिन्धनम् ।
गतिर्ह्यस्य प्रमाणं वा संस्थानं वा न दृश्यते ॥ ४

भृगुः—

[1]जीवस्य चेन्धनाग्नेश्च सदा नाशो न विद्यते ।
समिधामुपयोगान्ते सन्नेवाग्निर्न दृश्यते ॥ ५

आकाशानुगतत्वाद्धि दुर्ग्रहस्स निराश्रयः ॥ ५॥

तथा शरीरसन्त्यागे जीवो [2]ह्याकाशमाश्रितः ।
न गृह्यते सुसूक्ष्मत्वाद् यथा ज्योतिरनिन्धनम् ॥ ६॥

प्राणान् धारयते योऽग्निस् स जीव उपधार्यताम् ।
वायुसन्धारणो ह्यग्निर् नश्यत्युच्छ्वासनिग्रहात् ॥ ७॥

तस्मिन् नष्टे शरीराग्नौ शरीरं तदचेतनम् ।
पतितं याति भूमित्वम् अयनं तस्य हि क्षितिः ॥ ८॥

जङ्गमानां च सर्वेषां स्थावराणां तथैव च ।
आकाशं पवनोऽभ्येति ज्योतिस्तमनुगच्छति ॥ ९॥

---

1. ग—इदमर्धं नास्ति
2. अ-क-ग-घ—ऽप्याकाशवत् स्थितः

तत्र त्रयाणामेकत्वं द्वयं भूमौ प्रतिष्ठितम् ॥ १०

यत्र खं तत्र पवनस् तत्राग्निर्यत्र मारुतः ।
अमूर्तयस्ते विज्ञेया आपो मूर्तास्तथा क्षितिः ॥ ११

भारद्वाजः—

यद्यग्निर्मारुतो भूमिः खमापश्च शरीरिषु ।
जीवः किंलक्षणस्तत्र एतदाचक्ष्व मेऽनघ ॥ १२

पञ्चात्मके पञ्चरतौ पञ्चविज्ञानसंयुते ।
शरीरे प्राणिनां जीवं वेत्तुमिच्छामि यादृशम् ॥ १३

मांसशोणितसङ्घाते मेदस्स्नाय्वस्थिसञ्चये ।
भिद्यमाने शरीरेऽत्र जीवो नैवोपलभ्यते ॥ १४

भृगुः—

यद्यजीवं शरीरं तु पञ्चभूतसमन्वितम् ।
शारीरे मानसे दुःखे कस्तां वेदयते रुजम् ॥ १५

[1]हृष्यति क्रुध्यति च कश् शोचत्युद्विजते च कः ।
इच्छति ध्यायति द्वेष्टि वाचमीरयते च कः ॥ १६

भारद्वाजः—

शृणोति कथितं जीवः कर्णाभ्यां न शृणोति तम् ।
महर्षे मनसि व्यग्रे तस्माज्जीवो निरर्थकः ॥ १७

1. ख—अर्धद्वयं नास्ति

सर्वं पश्यति यद्दृश्यं मनोयुक्तेन चक्षुषा ।
मनसि व्याकुले तस्मिन् पश्यन्नपि न पश्यति ॥ १८

न पश्यति न च ब्रूते न शृणोति न जिघ्रति ।
न च स्पर्शरसौ वेत्ति निद्रावशगतः पुनः ॥ १९

भृगुः—

न पञ्चसाधारणमत्र किञ्चिच्
छरीरमेको वहतेऽन्तरात्मा ।
स वेत्ति गन्धांश्च रसाञ् श्रुतिं च
स्पर्शं च रूपं च गुणाश्च येऽन्ये ॥ २०

पञ्चात्मके पञ्चगुणप्रदर्शी
स सर्वगात्रानुगतोऽन्तरात्मा ।
स वेत्ति दुःखानि सुखानि चात्र
तद्विप्रयोगात्तु न वेत्ति देहः ॥ २१

यदा न रूपं न स्पर्शो नोष्मभावश्च पञ्चके ।
तदा शान्ते शरीराग्नौ देहं त्यक्त्वा न नश्यति ॥ २२

अम्मयं सर्वमेवेदम् आपो मूर्तिश्शरीरिणाम् ।
तत्रात्मा मानसो ब्रह्मा सर्वभूतेषु लोककृत् ॥ २३

---

1. ख—हृष्यते क्रुध्यते कोऽत्र लसत्युद्विजते च कः ।
शोचते ध्यायते कश्च वाचमीरयते च कः ॥ [अधिकः पाठः]

आत्मानं तु विजानीहि तं लोकस्य विधायकम् ।
तस्मिन् स संश्रितो देवो ह्यब्बिन्दुरिव पुष्करे ॥ २४

क्षेत्रज्ञं तं विजानीहि नित्यं लोकहितात्मकम् ।
तमो रजश्च सत्त्वं च विद्धि जीवगुणानिमान् ॥ २५

सचेतनं जीवगुणं वदन्ति
स चेष्टते चेष्टयते च सर्वम् ।
ततः परं क्षेत्रविदो वदन्ति
प्रावर्तयद्यो भुवनानि सप्त ॥ २६

न जीवनाशोऽस्ति हि देहनाशे
मिथ्यैतदाहुर्मृत इत्यबुद्धाः ।
जीवस्तु देहान्तरितः प्रयाति
दशार्धतैवास्य शरीरभेदः ॥ २७

एवं सर्वेषु भूतेषु गूढश्चरति संवृतः ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया तत्त्वदर्शिभिः ॥ २८

तं पूर्वापररात्रेषु युञ्जानस्सततं बुधः ।
लघ्वाहारो विशुद्धात्मा पश्यत्यात्मानमात्मनि ॥ २९

चित्तस्य हि प्रसादेन हित्वा कर्म शुभाशुभम् ।
प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमव्ययमश्नुते ॥ ३०

मानसोऽग्निश्शरीरेषु जीव इत्यभिधीयते ।
सृष्टिः प्रजापतेरेषा भूताध्यात्मविनिश्चया ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
[ अस्मिन्नध्याये ३१ श्लोकाः ]

---

## ॥ षट्सप्तत्यधिकशततमोऽध्यायः ॥

भृगुणा भारद्वाजं प्रति सर्वेषां ब्राह्मणत्वाविशेषेऽपि क्षत्रियादिवर्णविभागस्य तत्तत्स्वैराचारनिबन्धनत्वोक्तिः ॥

---

भृगुः—

अमृजद्ब्राह्मणानेव पूर्वं ब्रह्मा प्रजापतिः ।
आत्मतेजोभिनिर्वृत्तान् भास्कराग्निसमप्रभान् ॥ १

ततस्सत्यं च धर्मं च तपो ब्रह्म च शाश्वतम् ।
आचारं चैव शौचं च सर्गादौ विदधे प्रभुः ॥ २

देवदानवगन्धर्वा दैत्यासुरमहोरगाः ।
यक्षराक्षसनागाश्च पिशाचा मानुषास्तथा ॥ ३

ब्राह्मणाः क्षत्रिया वैश्याश् शूद्राश्च द्विजसत्तम ।
ये चान्ये भूतसङ्घानां सङ्घातास्तांश्च निर्ममे ॥ ४

ब्राह्मणानां सितो वर्णः क्षत्रियाणां तु लोहितः ।

वैश्यानां पीतको वर्णश् शूद्राणामसितस्तथा ॥ ५

भारद्वाजः—

चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभज्यते ।
सर्वेषां खलु वर्णानां दृश्यते वर्णसङ्करः ॥ ६

कामः क्रोधो भयं लोभश् शोकश्चिन्ता क्षुधा श्रमः ।
सर्वेषां नः प्रभवति कस्माद्वर्णो विभज्यते ॥ ७

[1]स्वेदमूत्रपुरीषाणि श्लेष्मा पित्तं सशोणितम् ।
तनोः क्षरति सर्वेषां कस्माद्वर्णो विभज्यते ॥ ८

जङ्गमानामसङ्ख्येयास् स्थावराणां च जातयः ।
तेषां विविधवर्णानां [2]कुतो वर्णविनिश्चयः ॥ ९

भृगुः—

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् ।
ब्राह्मणाः पूर्वसृष्टा हि कर्मभिर्वर्णतां गताः ॥ १०

कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः ।
त्यक्तस्वधर्मा रक्ताङ्गास् ते द्विजाः क्षत्रतां गताः ॥ ११

[3]गोषु वृत्तिं समाधाय पीताः कृष्युपजीविनः ।
स्वधर्मान् नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः ॥ १२

हिंसानृतप्रिया लुब्धास् सर्वकर्मोपजीविनः ।

---

1. ख-ग—अर्धद्वयं नास्ति 2. ख—अयं पादोऽनन्तरश्च न स्तः
3. ख—अर्धचतुष्टयं नास्ति

कृष्णाश्शौचपरिभ्रष्टास् ते द्विजाश्शूद्रतां गताः ॥　　१३

इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः ।
[1]धर्मो यज्ञक्रिया चैषां नित्यं न प्रतिषिध्यते ॥　　१४

वर्णाश्चत्वार एते हि येषां ब्राह्मी सरस्वती ।
विहिता ब्रह्मणा पूर्वं लोभात्त्वज्ञानतां गताः ॥　　१५

ब्राह्मणा ब्रह्मतन्त्रस्थास् तपस्तेषां न नश्यति ।
ब्रह्म धारयतां नित्यं व्रतानि नियमांस्तथा ॥　　१६

ब्रह्म चैतत् पुरा सृष्टं ये तु जानन्ति ते द्विजाः ।
तेषां बहुविधास्त्वन्यास् तत्र तत्र द्विजातयः ॥　　१७

पिशाचा राक्षसाः प्रेता विविधा म्लेच्छजातयः ।
प्रनष्टज्ञानविज्ञानास् स्वच्छन्दा[2]चारचेष्टिताः ॥　　१८

प्रजा ब्राह्मणसंस्कारास् स्वकर्मकृतनिश्चयाः ।
ऋषिभिस्स्वेन तपसा सृज्यन्ते स परावरैः ॥　　१९

आदिदेवसमुद्भूता ब्रह्ममूलाऽक्षयाऽव्यया ।
सा सृष्टिर्मानसी नाम धर्मतन्त्रपरायणा ॥　　२०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
[अस्मिन्नध्याये २० श्लोकाः]

---

1. अ-क—अर्धद्वयं नास्ति　　2. क-घ—हार

## ॥ सप्तसप्तत्यधिकशततमोऽध्यायः ॥



भारद्वाजं प्रति भृगुणा ब्राह्मणादिवर्णलक्षणकथनम् । वैराग्यस्य मुक्तिसाधनताकथनं च ॥

---

भारद्वाजः—

ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम ।
वैश्यश्शूद्रश्च विप्रर्षे तद्ब्रूहि वदतां वर ॥ १

भृगुः—

जातकर्मादिभिर्यस्तु संस्कारैस्संकृतश्शुचिः ।
वेदाध्ययनसम्पन्नष् षट्सु कर्मस्ववस्थितः ॥ २

शौचाचाररतस्सम्यग् विघसाशी गुरुप्रियः ।
नित्यव्रती सत्यपरस् स वै ब्राह्मण उच्यते ॥ ३

सत्यं दानं दमोऽद्रोह आनृशंस्यं क्षमा घृणा ।
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥ ४

क्षतजं सेवते यस्तु वेदाध्ययनसम्मतः ।
दानादानरतिश्चैव स वै क्षत्रिय उच्यते ॥ ५

कृषिगोरक्षवाणिज्यं यो विशत्यनिशं शुचिः ।
वेदाध्ययनसम्पन्नस् स वैश्य इति संज्ञितः ॥ ६

सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः ।

त्यक्तवेदस्त्वनाचारस् स वै शूद्र इति स्मृतः ॥ ७

शूद्रे चैतद्भवेल्लक्ष्यं द्विजे चैतन्न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥ ८

सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः ।
एतत् पवित्रं ज्ञातव्यं तथा चैवात्मसंयमः ॥ ९

नित्यं क्रोधाच्छ्रियं रक्षेत् तपो रक्षेच्च मत्सरात् ।
विद्यां मानावमानाभ्याम् आत्मानं तु प्रमादतः ॥ १०

यस्य सर्वे समारम्भा निराशीर्बन्धनास्त्विह ।
त्यागे यस्य हुतं सर्वं स त्यागी च स बुद्धिमान् ॥ ११

अहिंस्रस्सर्वभूतानां मैत्रायणगतिश्चरेत् ।
[1]परिग्रहान् परित्यज्य भवेद्बुद्ध्या जितेन्द्रियः ॥ १२
अचलं स्थानमातिष्ठेद् इह चामुत्र चोभयोः ॥ १२॥

तपोनित्येन दान्तेन मुनिना संयतात्मना ।
अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना ॥ १३॥

इन्द्रियैर्गृह्यते यद्यत् तत्तद्व्यक्तमिति स्थितिः ।
अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् ॥ १४॥

अविस्रम्भेण गन्तव्यं विस्रम्भे धारयेन्मनः ।

---

1. अ-क-ख-घ—अविस्रम्भेण गन्तव्यं विस्रम्भे धारयेन्मनः ।
[अधिकः पाठः]

मनः प्राणेन गृह्णीयात् प्राणं ब्रह्मणि धारयेत् ॥ १५॥

निर्वाणादेव निर्वायान्न किञ्चिदपि चिन्तयेत् ।
सुखं वै ब्राह्मणो ब्रह्म स वै तेनाधिगच्छति ॥ १६॥

शौचेन सततं युक्तस् सदाचारसमन्वितः ।
सानुक्रोशश्च भूतेषु तद्द्विजातिषु लक्षणम् ॥ १७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
[ अस्मिन्नध्याये १७॥ श्लोकाः ]

---

## ॥ अष्टसप्तत्यधिकशततमोऽध्यायः ॥

भृगुणा भारद्वाजं प्रति धर्माधर्मयोः सुखदुःखसाधनत्वे प्रतिपादिते ऋष्यादीनां स्वर्गानपेक्षणाद्व्यभिचारशङ्किना भारद्वाजेन तदाक्षेपः ॥ १ ॥ भृगुणा मोक्षस्वरूपनिरूपणपूर्वकं निष्कामकर्मणस्तत्साधनत्वमक्षतमिति स्वाभिप्रायाविष्करणम् ॥ २ ॥

---

भृगुः—

सत्यं ब्रह्म तपस्सत्यं सत्यं च सृजते प्रजाः ।
सत्येन धार्यते लोकस् स्वर्गं सत्येन गच्छति ॥ १

अनृतं तमसो रूपं तमसा नीयते ह्यधः ।
तमोग्रस्ता न पश्यन्ति प्रकाशं तमसाऽऽवृतम् ॥ २

स्वर्गः प्रकाश इत्याहुर् नरकं तम एव च ।
सत्यानृताभ्यामुभयं प्राप्यते जगतीचरैः ॥　　३

तत्र त्वेवंविधा वृत्तिर् लोके सत्यानृताद् भवेत् ।
धर्माधर्मौ प्रकाशश्च तमो दुःखं सुखं तथा ॥　　४

तत्र यत् सत्यं स धर्मो यो धर्मस्स प्रकाशो यः प्रकाशस्तत्सुखमिति । तत्र यदनृतं सोऽधर्मो योऽधर्मस्तत्तमो यत्तमस्तद्दुःखमित्युच्यते ॥　　५

शारीरैर्मानसैर्दुःखैस् सुखैश्चापि सुखोदयैः ।
लोकसृष्टिं प्रपश्यन्तो न मुह्यन्ति विचक्षणाः ॥　　६

तत्र दुःखविमोक्षार्थं प्रयतेत विचक्षणः ।
सुखं ह्यनित्यं भूतानाम् इह लोके परत्र च ॥　　७

राहुग्रस्तस्य सोमस्य यथा ज्योत्स्ना न भासते ।
तथा तमोभिभूतानां भूतानां भ्रश्यते सुखम् ॥　　८

तत् खलु द्विविधं दुःखमुच्यते सुखमेव च शारीरं मानसं च ॥९॥ इह खल्वमुष्मिँल्लोके सर्वारम्भप्रवृत्तयः सुखार्था अभिधीयन्ते ॥१०॥ न ह्यतः त्रिवर्गे फलमस्ति विशिष्टतरम् ॥११॥ स एष काम्यो गुणविशेषो धर्मार्थयोरारम्भस्तद्धेतुरस्योत्पत्तिः सुखप्रयोजनार्था ॥ १२ ॥

भारद्वाजः—

यदेतद्भवताऽभिहितं सुखानां परमार्थस्थितिरिति तन्न गृह्णीमो न ह्येषामृषीणां तपस्विनामप्राप्य एष गुणविशेषो न चैनमभिलषन्ति ॥ १३ ॥ श्रूयते च भगवान् त्रिलोककृद्ब्रह्मा प्रभुरेकाकी तिष्ठति ॥ १४ ॥ ब्रह्मचारी न कामसुखेष्वात्मानं विदधाति ॥१५॥ अपिच भगवान् विश्वेश्वरः काममतिवर्तमान-मनङ्गत्वेन नाशमनयत् ॥ १६ ॥ तस्माद्ब्रूमो न तु महात्मभिः प्रतिगृहीतोऽयमर्थो नत्वेष तावद्विशिष्टो गुण इति ॥ १७ ॥ न चैतद्भगवान् प्रत्येति। भगवतोक्तं सुखानां परमार्थस्थितिरिति ॥१८॥ [1]लोकप्रवादोऽपि च—द्विविधः फलोदयस्सुकृता तु सुखमवाप्यते। दुष्कृताद्दुःखमिति ॥ १९ ॥

भृगुः—

अत्रोच्यते। अनृतात् खलु तमः प्रादुर्भूतम् ॥२०॥ तमो-ग्रस्ता अधर्ममेवानुवर्तन्ते न धर्मम् ॥२१॥ क्रोधलोभमोहमदा-दिभिरवच्छिन्ना न खल्वस्मिँल्लोके नामुत्र सुखमाप्नुवन्ति ॥२२ विविधव्याधिव्रणरुजोपतापैरवकीर्यन्ते ॥ २३ ॥ [2]वधबन्ध-निरोधपरिक्लेशादिभिश्च क्षुत्पिपासाश्रमकृतैरुपतापैरुपतप्यन्ते ॥२४॥ चण्डवातात्युष्णातिशीतकृतैश्च प्रतिभयैः शारीरदुःखै-

1. अ-क-ग-घ—नास्तीदं वाक्यम्

2. अ-क-घ—वाक्यद्वयमेतन्नास्ति

रुपतप्यन्ते ॥२५॥ बन्धुधनविनाशविप्रयोगकृतैश्च मानसैश्शोकैरभिभूयन्ते ॥ २६ ॥ जरामृत्युकृतैश्चान्यैरिति ॥ २७ ॥

[1]यदेतैश्शारीरैर्मानसैर्दुःखैर्न स्पृश्यते तत् सुखं संवेद्यं ॥२८

नचैते दोषास्स्वर्गे प्रादुर्भवन्ति ॥२९॥ तत्र खलु भवन्ति ॥३०

[2]सुसुखः पवनस्स्वर्गे गन्धश्च सुरभिस्तथा ।
क्षुत्पिपासाश्रमो नास्ति न जरा न च पापकम् ॥ ३१

नित्यमेव सुखं स्वर्गे सुखं दुःखमिहोभयम् ।
नरके दुःखमेवाहुस् सुखं तु परमं पदम् ॥ ३२

पृथिवी सर्वभूतानां जनित्री तद्विधास्स्त्रियः ।
पुमान् प्रजापतिस्तत्र शुक्रं तेजोमयं विदुः ॥ ३३

इत्येतल्लोकनिर्माणं ब्रह्मणा विहितं पुरा ।
प्रजा विपरिवर्तन्ते स्वैस्स्वैः कर्मभिरावृताः ॥ ३४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
[ अस्मिन्नध्याये ११ श्लोकाः २३ वाक्यानि ]

---

1. अ—लोके भवति द्विविधः फलोदयस्सुकृतात् सुखमवाप्यते दुष्कृताद्दुष्कृतमिति ॥ [अधिकः पाठः]

2. अ-क-घ—सुखदुःखे च न स्वर्गो

## ॥ एकोनाशीत्यधिकशततमोऽध्यायः ॥

भृगुणा भारद्वाजं प्रति चतुराश्रमधर्मनिरूपणम् ॥

भारद्वाजः—

दानस्य किं फलं प्रोक्तं धर्मस्य चरितस्य च ।
तपसश्च सुतप्तस्य स्वाध्यायस्य हुतस्य च ॥ १

भृगुः—

हुतेन शाम्यते पापं स्वाध्यायैश्शान्तिरुत्तमा ।
दानेन भोग इत्याहुस् तपसा सर्वमाप्नुयात् ॥ २

दानं तु द्विविधं प्राहुः परत्रार्थमिहैव च ।
सद्भ्यो यद्दीयते किञ्चित् तत् परत्रोपतिष्ठति ॥ ३

असद्भ्यो दीयते यत्तु तद्दानमिह भुज्यते ।
यादृशं दीयते दानं तादृशं फलमुच्यते[1] ॥ ४

स्वधर्माचरणे युक्ता ये भवन्ति मनीषिणः ।
तेषां धर्मफलावाप्तिर् योऽन्यथा [2]स तु मुह्यति ॥ ५

---

1. ख—भारद्वाजः—

किं कस्य धर्माचरणं किं वा धर्मस्य लक्षणम् ।
धर्मः कतिविधो वाऽपि तद्भवान् वक्तुमर्हति ॥

[अधिकः पाठः]

2. ख—नरके स्थितिः

भारद्वाजः—

[1]किं कस्य धर्माचरणं किं वा धर्मस्य लक्षणम् ।
धर्मः कतिविधो वाऽपि तद्भवान् वक्तुमर्हति ॥ ६

यदेतच्चातुराश्रम्यं ब्रह्मर्षिविहितं पुरा ।
तस्य स्वं स्वं समाचारं यथावद्वक्तुमर्हसि ॥ ७

भृगुः—

पूर्वमेव भगवता ब्रह्मणा लोकहितमनुतिष्ठता धर्मसंरक्षणार्थमाश्रमाश्चत्वारो निर्दिष्टाः ॥८॥ तत्र गुरुकुलवासमेव तावत् प्रथममाश्रममुदाहरन्ति ॥९॥ सम्यग्यत्र शौचसंस्कारविनयनियमव्रतविनीतात्मा उभे सन्ध्ये भास्कराग्निदैवतान्युपस्थाय विहाय निद्रालस्ये गुरोरभिवादनवेदाभ्यासश्रवणपवित्रीकृतान्तरात्मा त्रिषवणमुपस्पृश्य ब्रह्मचर्याग्निपरिचरणगुरुशुश्रूषानित्यो भैक्षादिसर्वं गुरवे निवेद्य विदितान्तरात्मा गुरुवचननिर्देशानुष्ठाताऽप्रतिकूलो गुरुप्रसादाल्लब्धस्वाध्यायफलः स्यात् ॥१०॥

भवति चात्र श्लोकः ॥११॥

गुरुं यस्तु समाराध्य द्विजो वेदमवाप्नुयात् ।
तस्य स्वर्गफलावाप्तिश्च शुध्यते तस्य मानसम् ॥ ॥१२॥

गार्हस्थ्यं खलु द्वितीयमाश्रमं वदन्ति ॥ १३ ॥ तस्य सम्यगाचारलक्षणं सर्वं व्याख्यास्यामः ॥ १४ ॥ समावृत्तानां

1. ख—इदमर्धद्वयमत्र नास्ति

सदाराणां सहधर्मचर्या फलार्थिनां गृहाश्रमो विधीयते ॥१५॥ धर्मार्थकामावाप्त्यर्थं त्रिवर्गफलसाधनमपेक्ष्याविगर्हितेन कर्मणा धनान्यादाय स्वाध्याय प्रकर्षोपलब्धेन वा ब्रह्मर्षिनिर्मितेन वा अद्रिसागरगतेन वा हव्यनियमाभ्यासदैवतपूजासमाधिप्रसाद-विध्युपलब्धेन वा धनेन गृहस्थो गार्हस्थ्यं प्रवर्तयेत् ॥ १६ ॥ तद्धि सर्वाश्रमाणां मूलमुदाहरन्ति ॥ १७ ॥ गुरुकुलनिवासिनः परिव्राजका ये चान्ये सङ्कल्पितव्रतनियमधर्मानुष्ठायिनस्तेषा-मप्यत एव भिक्षाबलिसंविभागाः प्रवर्तन्ते ॥१८॥

वानप्रस्थानां च द्रव्योपस्कर इति प्रायशः खल्वेते साधव-[1]स्सुवृत्तविनयसम्पत्त्यर्थिनः स्वाध्यायप्रसङ्गिनस्तीर्थाभिगमनदेश दर्शनार्थं पृथिवीं पर्यटन्ति॥१९॥ तेषां प्रत्युत्थानाभिगमनानु-नयवाक्प्रदानसौमुख्यशय्यासनशरणाभ्यवहारसत्क्रियाश्चेत इति

भवति चात्र श्लोकः ॥२१॥

अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्तते ।
स तस्य दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥ २२

अपि चात्र यज्ञक्रियाभिर्देवताः प्रीयन्ते निवापेन पितरो वेदविद्याभ्यासश्रवणधारणेन ऋषयः अपत्योत्पादनेन प्रजापति-रिति ॥ २३

---

1. ख—साधुपथ्यटनास्स्वाध्यायप्रसङ्गिनः
ग—साधूनां पथ्यार्थिनः स्वाध्या-

श्लोकौ चात्र भवतः ॥ २४

वत्सलास्सर्वभूतानां वाच्याश्श्रोत्रसुखा गिरः ।
परिवादापवादौ च पारुष्यं चात्र गर्हितम् ॥ २५

अवज्ञानमहङ्कारो दम्भश्चैवात्र गर्हितः ।
अहिंसा सत्यमक्रोधस् सर्वाश्रमगतं तपः ॥ २६

अपि चात्र माल्याभरणवस्त्राङ्गरागोपभोगनृत्तगीतवादित्र-श्रुतिसुखनयनाभिरामदर्शनानां प्राप्तिर्भक्ष्यभोज्यलेह्यपेयचोष्याणामभ्यवहाराणां विविधानामुपभोगस्स्वदारसन्तोषः कामसुखावाप्तिरिति ॥ २७

श्लोकौ चात्र भवतः ॥ २८

त्रिवर्गगुणनिर्वृत्तिर् यस्य नित्यं गृहाश्रमे ।
स सुखान्यनुभूयेह शिष्टां गतिमवाप्नुयात् ॥ २९

उञ्छवृत्तिर्गृहस्थो यस् स्वधर्माचरणे रतः ।
त्यक्तकामसुखारम्भस् तस्य स्वर्गो न दुर्लभः ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
[ अस्मिन्नध्याये १३ श्लोकाः वाक्यानि १६ ]

## ॥ अशीत्यधिकशततमोऽध्यायः ॥



भृगुणा भारद्वाजं प्रति वानप्रस्थयत्याश्रमयोर्लक्षणकथनम् ॥१॥ तथा हिमवदुत्तरलोकस्य स्वर्गतुल्यत्वप्रतिपादनपूर्वकं सुकृतिप्राप्यत्वकथनं च ॥

भृगुः—

वानप्रस्थाः खल्वृषिधर्ममनुवर्तन्ते पुण्यानि तीर्थानि नदीप्रस्रवणान्यनुचरन्ति॥१॥ सुविविक्तेष्वरण्येषु मृगमहिषवराहशार्दूलचमरसृमरगजाकीर्णेषु तपस्यन्तोऽनुसञ्चरन्ति ॥२॥ त्यक्तग्राम्य वस्त्राहारोपभोगा वन्यौषधिफलमूलपर्णपरिमितविचित्रनियताहाराः स्थानासनिनो भूमिपाषाणसिकताशर्करावालुकाभस्मशायिनः काशकुशचर्मवल्कलसंवृताङ्गाः केशश्मश्रुरोमनखधारिणो नियतकालोपस्पर्शना अस्कन्नकालबलिहोमानुष्ठायिनः समित्कुशकुसुमोपहारसम्मार्जनहोमान्तलब्धविश्रमाः शीतोष्णपवनविनिष्टप्तविभिन्नसर्वत्वचो विविधनियमयोगचर्याविहितधर्मानुष्ठानहृतमांसशोणितत्वगस्थिभूता धृतिपराः सत्वयोगाच्छरीराण्युद्वहन्ति ॥ ३

भवति चात्र श्लोकः ॥ ४

यश्चैतां नियतश्चर्यां ब्रह्मर्षिविहितां चरेत् ।
स दहेदग्निवद्दोषाञ्जयेल्लोकांश्च दुर्जयान् ॥ ५

परिव्राजकानां पुनराचारं प्रवदामहे । धनकलत्रपरिबर्ह-सङ्गेष्वात्मनः स्नेहपाशानवधूय परिव्रजन्ति समलोष्टाश्मकाञ्च-नास्त्रिवर्गप्रवृत्तेष्वारम्भेष्वसक्तबुद्धयोऽरिमित्रोदासीनेषु तुल्य-दर्शनाः स्थावरजङ्गमानां जरायुजाण्डजस्वेदजोद्भिज्जानां वाङ्मनः-कर्मभिरनभिद्रोहिणोऽनिकेतनाः पर्वतपुलिनवृक्षमूलदेवतायत-नान्यनुचरन्तो संवासार्थमुपेयुर्नगरं ग्रामं वा नगरे पञ्चरात्रिका ग्रामे चैकरात्रिकाः प्रविश्य च प्राणधारणमात्रार्थं द्विजातीनां भवनान्यसङ्कीर्णकर्मणामुपतिष्ठेयुः पात्रपतितायाचितभैक्षकाः[1] कामक्रोधदर्पलोभमोहकार्पण्यदम्भपरिवादाभिमानहिंसानिवृत्ता इति ॥ ३

भवन्ति चात्र श्लोकाः ।

अभयं सर्वभूतेभ्यो दत्त्वा चरति यो मुनिः ।
न तस्य सर्वभूतेभ्यो भयमुत्पद्यते क्वचित् ॥ ४

कृत्वाऽग्निहोत्रं स्वशरीरसंस्थं
शारीरमग्निं स्वमुखे जुहोति ।
यो भैक्षचर्योपगतैर्हविर्भिश्
चिताग्निकानां व्यति याति लोकान् ॥ ५

मोक्षाश्रमं यः कुरुते यथोक्तं
शुचिस्सुसङ्कल्पितबुद्धियुक्तः ।

1. ख—प्रावरणहीनाः [अधिकः पाठः]

अनिन्धनं ज्योतिरिव प्रशान्तं
स ब्रह्मलोकं श्रयते द्विजातिः ॥ ६

भारद्वाजः—

अस्माल्लोकात् परो लोकश् श्रूयते नोपलभ्यते ।
तमहं ज्ञातुमिच्छामि तद्भवान् वक्तुमर्हति ॥ ७

भृगुः—

उत्तरे हिमवत्पार्श्वे पुण्ये सर्वगुणान्विते ।
पुण्यः क्षेम्यश्च काम्यश्च स परो लोक उच्यते ॥ ८

तत्र ह्यपापकर्माणश् शुचयोऽत्यन्तनिर्मलाः ।
लोभमोहपरित्यक्ता मानवा निरुपद्रवाः ॥ ९

स स्वर्गसदृशो लोकस् तस्मिन् युक्ताश्शुभा गुणाः ।
नात्र मृत्युः प्रभवति स्पृशन्ति व्याधयो न च ॥ १०

न लोभः परदारेषु स्वदारनिरतो जनः ।
न चान्योन्यवधस्तत्र द्रव्येषु च न विस्मयः ॥ ११

परोक्षधर्मो नैवास्ति सन्देहो नैव जायते ।
कृतस्य तु फलं व्यक्तं प्रत्यक्षमुपलभ्यते ॥ १२

यानासनाशनोपेताः प्रासादोपवनाश्रयाः ।
सर्वकामैर्वृताः केचिद् हेमाभरणभूषिताः ॥ १३

प्राणधारणमात्रं तु केषाञ्चिदुपलभ्यते ।

श्रमेण महता केचित् कुर्वन्ति प्राणधारणम् ॥ १४

इह धर्मपराः केचित् केचिन्नैकृतिका नराः ।
सुखिता दुःखिताः केचिन्निर्धना धनिनोऽपरे ॥ १५

इह श्रमो भयं मोहः क्षुधा तीव्रा च जायते ।
लोभश्चार्थकृतो नृणां येन मुह्यन्त्यपण्डिताः ॥ १६

इह चिन्ता बहुविधा धर्माधर्मस्य कर्मणः ।
यस्तद्वेदोभयं प्राज्ञः पाप्मना न स लिप्यते ॥ १७

सोपधं निकृतिस्स्तैन्यं परिवादो ह्यसूयिता ।
परोपघातो हिंसा च पैशुन्यमनृतं तथा ॥ १८

[1]एतानि सेवते यस्तु तपस्तस्य [2]मितायते ।
यस्त्वेतान्नाचरेद्विद्वांस् तपस्तस्याभिवर्धते ॥ १९

कर्मभूमिरियं लोके इह कृत्वा शुभाशुभम् ।
शुभैश्शुभमवाप्नोति कर्तात्वशुभतोऽन्यथा ॥ २०

इह प्रजापतिः पूर्वं देवास्सर्षिगणास्तथा ।
[3]इष्टेन तपसा पूता ब्रह्मलोकमुपाश्रिताः ॥ २१

उत्तरः पृथिवीभागस् सर्वपुण्यतमश्शुभः ।
इहत्यास्तत्र जायन्ते ये वै पुण्यकृतो जनाः ॥ २२

1. ख—अर्धचतुष्टयं नास्ति 2. ख—प्रहीयते
3. ख—अर्धत्रयं नास्ति

असत्कर्माणि कुर्वाणास् तिर्यग्योनिषु भारत ।
क्षीणायुषस्तथैवान्ये नश्यन्ति पृथिवीतले ॥ २३

अन्योन्यभक्षणे सक्ता लोभमोहसमन्विताः ।
इहैव परिवर्तन्ते न ते यान्त्युत्तरां दिशम् ॥ २४

ये गुरूनुपसेवन्ते नियता ब्रह्मचारिणः ।
पन्थानं सर्वलोकानां ते जानन्ति मनीषिणः ॥ २५

इत्युक्तोऽयं मया धर्मस् सङ्क्षेपाद्ब्रह्मनिर्मितः ।
धर्माधर्मौ हि लोकस्य यो वै वेत्ति स बुद्धिमान् ॥ २६

भीष्मः—

इत्युक्तो भृगुणा राजन् भारद्वाजः प्रतापवान् ।
भृगुं परमधर्मात्मा विस्मितः प्रत्यपूजयत् ॥ २७

एष ते प्रभवो राजञ् जगतस्सम्प्रकीर्तितः ।
निखिलेन महाप्राज्ञ किं भूयश्श्रोतुमिच्छसि ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

[ अस्मिन्नध्याये २८ श्लोकाः ]

## ।। एकाशीत्यधिकशततमोऽध्यायः ।।

भीष्मेण युधिष्ठिरं प्रति सदाचारनिरूपणम् ॥

युधिष्ठिरः—

आचारस्य विधिं तावत् प्रोच्यमानं त्वयाऽनघ ।
श्रोतुमिच्छामि धर्मज्ञ सर्वज्ञो ह्यसि मे मतः ।। १

भीष्मः—

दुराचारा दुर्विचेष्टा दुष्प्रज्ञाः प्रियसाहसाः ।
असन्तस्त्वभिविख्यातास् सन्तस्त्वाचारलक्षणाः ।। २

पुरीषं वाऽथ मूत्रं वा ये न कुर्वन्ति मानवाः ।
राजमार्गे गवां मध्ये धान्यमध्ये च ते शुभाः ।। ३

शौचमावश्यकं कृत्वा देवतानां च तर्पणम् ।
धर्ममाहुर्मनुष्याणाम् उपस्पृश्य नदीं तरेत् ।। ४

सूर्यं सदोपतिष्ठेत न स्वपेद्भास्करोदये ।
सायम्प्रातर्जपेत् सन्ध्यां तिष्ठेत् पूर्वां तथा पराम् ।। ५

पञ्चार्द्रो भोजनं कुर्यात् प्राङ्मुखो मौनमास्थितः ।
न निन्देदन्नभक्ष्यांश्च [1]स्वादुस्वादु च भक्षयेत् ।। ६

नार्द्रपाणिस्समुत्तिष्ठेन्नार्द्रपादस्स्वपेन्निशि ।

1. ग—स्वाद्वस्वादु च

देवर्षिर्नारदः प्राह एतदाचारलक्षणम् ॥ ७

शोचिष्केशमनड्वाहं [1]देवगोष्ठं चतुष्पथम् ।
ब्राह्मणं धार्मिकं चैव नित्यं कुर्यात् प्रदक्षिणम् ॥ ८

अतिथीनां च सर्वेषां प्रेष्याणां स्वजनस्य च ।
सामान्यं भोजनं [2]पूर्वं पुरुषस्य प्रशस्यते ॥ ९

सायम्प्रातर्मनुष्याणाम् अशनं [3]वेदनिर्मितम् ।
नान्तरा भोजनं दृष्टम् उपवासी तथा भवेत् ॥ १०

[4]होमकाले तथा जुह्वद् ऋतुकाले तथा व्रजेत् ।
अनन्यस्त्रीजनः प्राज्ञो ब्रह्मचारी तथा भवेत् ॥ ११

अमृतं ब्राह्मणोच्छिष्टं जनन्या हृदयं गतम् ।
तज्जनाः पर्युपासन्ते सत्यं सन्त उपासते ॥ १२

यजुषा संस्कृतं मांसं निवृत्तो मांसभक्षणात् ।
भक्षयेन्न वृथा मांसं पृष्ठमांसं च वर्जयेत् ॥ १३

स्वदेशे परदेशे वा अतिथिं नोपवासयेत् ।
काम्यं कर्मफलं लब्ध्वा गुरूणामुपवेदयेत् ॥ १४

गुरूणामासनं देयं कर्तव्यं चाभिवादनम् ।
गुरूनभ्यर्च्य युज्येत आयुषा यशसा श्रिया ॥ १५

---

1. ख—देवदेवं
2. ख-ग—भृत्यैः
3. ख-ग—देवनि
4. अ-क-ग—अर्धद्वयं नास्ति

नेक्षेतादित्यमुद्यन्तं न च नग्नां परस्त्रियम् ।
मैथुनं समये धर्म्यं गुह्यं चैव समाचरेत् ॥ १६

तीर्थानां हृदयं तीर्थं शुचीनां हृदयं शुचिः ।
सर्वमार्यकृतं धर्म्यं बालसंस्पर्शनानि च ॥ १७

दर्शने दर्शने नित्यं सुखप्रश्नमुदाहरेत् ।
सायं प्रातश्च विप्राणां प्रदिष्टमभिवादनम् ॥ १८

देवगोष्ठे गवां मध्ये ब्राह्मणानां क्रियापथे ।
स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् ॥ १९

[1]पशूनां शोभनं कुर्यात् कृषीणामृद्धवतां कृषिः ।
बहुकारं च सस्यानां सुवाह्यं वहतां गवाम् ॥ २०

सम्पन्नं भोजने नित्यं पानीये तर्पणं तथा ।
सुशृतं पायसे ब्रूयाद् यवाग्वां कृसरे तथा ॥ २१

श्मश्रुकर्मणि सम्प्राप्ते क्षुते स्नाने च भोजने ।
व्याधितानां च सर्वेषाम् आयुष्यमभिनन्दनम् ॥ २२

प्रत्यादित्यं न मेहेच्च न पश्येदात्मनश्शकृत् ।
[2]सह स्त्रिया च शयनं सह भोज्यं च वर्जयेत् ॥ २३

त्वङ्कारं नामधेयं च [3]गुरूणां परिवर्जयेत् ।

---

1. ग—पण्यानां　　2. ग-घ—सुतैः　　3. ख—ज्येष्ठानां

अवराणां समानानाम् उभयं नैव दुष्यति ॥ २४

हृदयं पापवृत्तानां पापमाख्याति वैकृतम् ।
ज्ञानपूर्वं विनश्यन्ति गूहमाना महाजने ॥ २५

ज्ञानपूर्वं कृतं पापं छादयन्त्यबहुश्रुताः ।
नैनं मनुष्याः पश्यन्ति पश्यन्ति त्रिदिवौकसः ॥ २६

पापेन रमतां बुद्धिः पापमेवानुवर्तते ।
धार्मिकेण कृतो धर्मः कर्तारमनुवर्तते ॥ २७

पापं कृतं न स्मरतीह मूढो
विवर्तमानस्य तदेति कर्तुः ।
राहुर्यथा चन्द्रमुपैति चापि
तथाऽबुधं पापमुपैति कर्म ॥ २८

आशया सञ्चितं द्रव्यं यत्कालं नोपभुज्यते ।
तद्बुधा न प्रशंसन्ति मरणं न प्रतीक्षते ॥ २९

मानसं सर्वभूतानां धर्ममाहुर्मनीषिणः ।
तस्मात् सर्वेषु भूतेषु मनसा शीलमाचरेत् ॥ ३०

एक एव चरेद्धर्मं नास्ति धर्मे सहायता ।
केवलं विधिमासाद्य सहायः किं करिष्यति ॥ ३१

देवा योनिर्मनुष्याणां देवानाममृतं दिवि ।
प्रेत्यभावे सुखं धर्माच्छश्वतैरुपभुज्यते ॥ ३२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
[अस्मिन्नध्याये ३२ श्लोकाः]

## ॥ द्व्यशीत्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रत्यध्यात्मनिरूपणम् ॥

युधिष्ठिरः—

अध्यात्मं नाम यदिदं पुरुषस्येह चिन्त्यते ।
यदध्यात्मं यतश्चैव तन्मे ब्रूहि पितामह ॥ १

कुतस्सृष्टमिदं सर्वं ब्रह्मन् स्थावरजङ्गमम् ।
प्रलये च किमभ्येति तन्मे [1]ब्रूहि पितामह ॥ २

भीष्मः—

अध्यात्ममिति मां पार्थ यदेतदनुपृच्छसि ।
तद्व्याख्यास्यामि ते तात श्रेयस्करतरं शुभम् ॥ ३

यज्ज्ञात्वा पुरुषो लोके प्रीतिं सौख्यं च विन्दति ।

1. ख-ग—त्वं वक्तुमर्हसि

फललाभश्च सद्यस्स्यात् सर्वभूतहितं च तत् ॥ ४

पृथिवी वायुराकाशम् आपो ज्योतिश्च पञ्चमम् ।
महाभूतानि पञ्चैव सर्वेषां प्रभवाप्ययौ ॥ ५

ततस्सृष्टानि तत्रैव तानि यान्ति पुनः पुनः ।
महाभूतेषु भूतानि सागरेषूर्मयो यथा ॥ ६

प्रसार्य च यथाङ्गानि कूर्मस्संहरते पुनः ।
महाभूतानि भूतात्मा सृष्ट्वा संहरते पुनः ॥ ७

महाभूतानि पञ्चैव सर्वभूतेषु भूतकृत् ।
अकरोत् तेषु वैषम्यं तत् तु जीवो न पश्यति ॥ ८

शब्दश्श्रोत्रं तथा खानि त्रयमाकाशसम्भवम् ।
वायोस्त्वक्स्पर्शनं चेष्टा तदेतत् त्रितयं स्मृतम् ॥ ९

[1]रूपं चक्षुस्तथा व्यक्तिस् त्रिविधं तेज उच्यते ।
रसः क्लेदश्च जिह्वा च त्रयो जलगुणास्स्मृताः ॥ १०

[2]घ्रेयं घ्राणं शरीरं च ते तु भूमिगुणास्त्रयः ।
[3]सर्वं तन्मयमेवैतद् भूतं स्थावरजङ्गमम् ॥ ११

प्रलीयते चोद्भवति तस्मान्निर्दिश्यते तथा ।
एवं बुद्ध्वा परां बुद्ध्वा भूतानामागतिं गतिम् ॥ १२

---

1. घ—अर्धत्रयं नास्ति
2. अ-घ—नास्तीदमर्धम्
3. ख—अर्धचतुष्टयं नास्ति

समवेक्ष्य शनैस्सम्यक् लभते शममुत्तमम् ।
महाभूतानि पञ्चैव षष्ठं तु मन उच्यते ॥ १३

इन्द्रियाणि मनश्चैव विज्ञानान्यस्य भारत ।
सप्तमी बुद्धिरित्याहुः क्षेत्रज्ञः पुनरष्टमः ॥ १४

चक्षुरालोकनायैव संशयं कुरुते मनः ।
बुद्धिरध्यवसानाय साक्षी क्षेत्रज्ञ उच्यते ॥ १५

[1]चिच्छक्त्यधिष्ठिता बुद्धिश् चेतनेत्यभिविश्रुता ।
चेतनानन्तरो जीवस् तदा वेत्ति च लक्ष्यते ॥ १६

नोत्सृजन् विसृजंश्चैव शरीरं दृश्यते तमः ।
तस्मिंश्चेतोपलब्धिस्स्यात् तमो वा सारयन्त्युत ॥ १७

ऊर्ध्वं पादतलाभ्यां यद् अवाङ्मूर्ध्नश्च पश्यति ।
एतेन सर्वमेवेदं सर्वाभिर्व्याप्तमन्तरम् ॥ १८

पुरुषैरिन्द्रियाणीह विजेतव्यानि कृत्स्नशः ।
[2]तमो रजश्च सत्त्वं च तेऽपि भावास्तदाश्रिताः ॥ १९

एतां बुद्ध्वा नरो बुद्ध्या भूतानामागतिं गतिम् ।
समवेक्ष्य शनैश्चैव लभते शममुत्तमम् ॥ २०

गुणान्न नीयते बुद्धिर् बुद्धिरेवेन्द्रियाण्यपि ।

---

1. क-ख-ग-घ—अर्धचतुष्टयं नास्ति
2. घ—अर्धत्रयं नास्ति

मनःषष्ठानि सर्वाणि बुद्ध्यभावे कुतो गुणाः ॥ २१

[1]इति तन्मयमेवैतत् सर्वं स्थावरजङ्गमम् ।
येन सङ्कल्पयत्यर्थं किञ्चिद्भवति तन्मनः ॥ २२

येन पश्यति तच्चक्षुश् शृणोति श्रोत्रमुच्यते ।
जिघ्रति घ्राणमित्याहू रसं जानाति जिह्वया ॥ २३

त्वचा स्पर्शं विजानाति बुद्धिर्विक्रियतेऽसकृत् ।
अधिष्ठानानि बुद्धेर्हि पृथगर्थानि पञ्चधा ॥ २४
पञ्चेन्द्रियाणि यान्याहुस् तान्यदृश्योऽधितिष्ठति ॥ २४॥

पुरुषाधिष्ठिता बुद्धिस् त्रिषु भावेषु वर्तते ।
[2]तमो रजश्च सत्त्वं च विद्धि भावांस्तदाश्रयान् ॥ २५॥

[3]कदाचिल्लभते प्रीतिं कदाचिदनुशोचति ।
न सुखेन न दुःखेन कदाचिदपि वर्तते ॥ २६॥

एवं नराणां मनसि त्रिषु भावेष्ववस्थिता ।
सेयं भावात्मिका भावांस् त्रीनेताननतिवर्तते ॥ २७॥

सरितां सागरो भर्ता महावेलामिवोर्मिमान् ।
अविभागगता बुद्धिर् भावे मनसि वर्तते ॥ २८॥
प्रवर्तमानं तु रजस् तद्भावमनुवर्तते ॥ २९

---

2. अ-क-ग-घ—नास्तीदमर्धम्
2. ख—नास्तीदमर्धम्
1. अ-ख—अर्धद्वयं नास्ति

[1]दूरगं बहुधा गामि प्रार्थना संशयात्मकम् ।
मनस्सुनियतं यस्य स सुखी प्रेत्य चेह च ॥　　३०

इन्द्रियाणि च सर्वाणि प्रदर्शयति सर्वदा ।
प्रीतिस्सत्वं रजश्शोकस् तमो मोहश्च ते त्रयः ॥　　३१

[2]इति बुद्धिगतिस्सर्वा व्याख्याता तव भारत ।
इन्द्रियाणि च सर्वाणि विजेतव्यानि धीमता ॥　　३२

सत्त्वं रजस्तमश्चैव प्राणिनां संश्रितास्सदा ।
त्रिविधा वेदना चैव सर्वसत्त्वेषु दृश्यते ॥　　३३

सात्त्विकी राजसी चैव तामसी चैव भारत ।
सुखस्पर्शस्सत्त्वगुणो दुःखस्पर्शो रजोगुणः ॥　　३४

तमोगुणेन संयुक्तौ भवतो व्यावहारिकौ ॥　　३४॥

तत्र यत् प्रीतिसंयुक्तं काये मनसि वा भवेत् ।
वर्तते सात्त्विको भाव इत्युपेक्षेत तत्तथा ॥　　३५॥

अथ यद्दुःखसंयुक्तम् अतुष्टिकरमात्मनः ।
प्रवृत्तं रज इत्येव तन्न संरभ्य चिन्तयेत् ॥　　३६॥

अथ यन्मोहसंयुक्तम् अव्यक्तविषयं भवेत् ।

---

1. ख—अर्धद्वयं नास्ति
2. ख—ये ये च भावा लोकेऽस्मिन् सर्वेष्वेतेषु वै त्रिषु ।
[ अधिकः पाठः ]

अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ ३७॥

प्रहर्षः प्रीतिरानन्दस् सुखं संशान्तचित्तता ।
कथञ्चिदभिवर्तन्त इत्येते सात्त्विका गुणाः ॥ ३८॥

अतुष्टिः परितापश्च शोको लोभस्तथाऽक्षमा ।
लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुभिः ॥ ३९॥

अभिमानस्तथा मोहः प्रमादस्स्वप्नतन्द्रिता ।
कथञ्चिदभिवर्तन्ते विविधास्तामसा गुणाः ॥ ४०॥

[1]ये ये च भावा लोकेऽस्मिन् सर्वे तेष्वेव ते त्रिषु ।
सत्त्वं बुद्धिस्ततो भावः प्रीतिर्योगात् प्रवर्तते ॥ ४१॥

सत्वक्षेत्रज्ञयोरेतद् अन्तरं पश्य सूक्ष्मयोः ।
सृजते त्रिगुणानेक एको न सृजते गुणान् ॥ ४२॥

मशकोदुम्बरौ वाऽपि सम्प्रयुक्तौ यथा सदा ।
[2]अन्योन्यमन्ये च यथा सम्प्रयोगस्तथैतयोः ॥ ४३॥

पृथग्भूतौ प्रकृत्या तौ सम्प्रयुक्तौ च सर्वदा ।
यथा मत्स्यो जलं चैव सम्प्रयुक्तौ तथैव तौ ॥ ४४॥

न गुणा विदुरात्मानं स गुणान् वेत्ति सर्वशः ।
परिद्रष्टा गुणानां स संसृष्टान् मन्यते तदा ॥ ४५॥

इन्द्रियैस्तु प्रदीपार्थं कुरुते बुद्धिसत्तमैः ।

1. ख—अर्धद्वयं नास्ति 2. ख—अर्धत्रयं नास्ति

निर्विचेष्टैरजानद्भिः परमात्मा प्रदीपवत् ॥ ४६॥

सृजते हि गुणान् सत्त्वं क्षेत्रज्ञः परिपश्यति ।
सम्प्रयोगस्तयोरेषु सत्त्वक्षेत्रज्ञयोर्ध्रुवः ॥ ४७॥

आश्रयो नास्ति सत्त्वस्य क्षेत्रज्ञस्य कदाचन ।
सत्त्वं मनस्संसृजति न गुणान् वै कदाचन ॥ ४८॥

रश्मींस्तेषां स मनसा यदा सम्यङ्नियच्छति ।
तदा प्रकाशते ह्यात्मा घटे दीपो ज्वलन्निव ॥ ४९॥

त्यक्त्वा यः प्राकृतं कर्म यदा नित्यरतो मुनिः ।
सर्वभूतात्मभूतस्स्यात् स गच्छेदुत्तमां गतिम् ॥ ५०॥

यथा वारिचरः पक्षी न लिम्पति न लिप्यते ।
एवमेष कृतप्रज्ञो भूतेषु परिवर्तते ॥ ५१॥

एवं स्वभावमेवैतं सम्बुद्ध्य विहरेन्नरः ।
अशोचन्नप्रहृष्यंश्च चरेद्विगतमत्सरः ॥ ५२॥

स्वभावशक्त्या युक्तस्तु नित्यं स सृजते गुणान् ।
ऊर्णनाभिर्यथा सत्त्वं विज्ञेयास्तन्तुवद्गुणाः ॥ ५३॥

प्रध्वस्ता न निवर्तन्ते निवृत्तिर्नोपलभ्यते ।
प्रत्यक्षेण परोक्षं तद् अनुमानेन सिध्यति ॥ ५४॥

एवमेके व्यवस्यन्ति निवृत्तिमिति चापरे ।
उभयं सम्प्रधार्यैतद् अध्यवस्येद् यथामति ॥ ५५॥

इतीमं हृदयग्रन्थिं बुद्धिभेदमयं दृढम् ।
विमुच्य सुखमासीत न शोचेच्छिन्नसंशयः ॥ ५६॥

मलिनाः प्राप्नुयुश्शुद्धिं यथा पूर्णां नदीं नराः ।
अवगाह्य सुविद्वांसो विद्धि ज्ञानमिदं तथा ॥ ५७॥

महानदीं हि पारज्ञास् तरन्ते न तदन्यथा ।
[1]न तु ताम्यन्ति तत्त्वज्ञाः फलज्ञानेन इत्युत ॥ ५८॥

एवं ये विदुराध्यात्मं केवलं ज्ञानमुत्तमम् ॥ ५९

एतां बुद्ध्वा नरास्सर्वे भूतानामागतिं गतिम् ।
अवेक्ष्य च शनैर्बुद्ध्या लभते शममुत्तमम् ॥ ६०

त्रिवर्गो यस्य विहितः प्रेक्ष्य तं स विमुच्यते ।
अन्वीक्ष्य मनसा युक्तस् तत्त्वदर्शी निरुत्सकः ॥ ६१

न चात्मा शक्यते द्रष्टुम् इन्द्रियेषु विभागशः ।
तत्र तत्र निसृष्टेषु दुर्जयेष्वजितात्मभिः ॥ ६२

एतद्बुद्ध्वा भवेद्बुद्धः किमन्यद्बुद्धिलक्षणम् ।
विज्ञाय तद्धि मन्यन्ते कृतं कृत्यं मनीषिणः ॥ ६३

न भवति विदुषां ततो भयं
यदविदुषां सुमहद्भयं भवेत् ।

---

1. अ-क-ग-घ—नास्तीदमर्धम्

न हि गतिरधिकाऽस्ति कस्यचित्
सति हि गुणे प्रवदन्ति तुल्यताम् ॥ ६४

यः करोत्यनभिसन्धिपूर्वकं
तच्च निर्णुदति यत् पुरा कृतम् ।
नाप्रियं तदुभयं कुतः प्रियं
तस्य तज्जनयतीह कुर्वतः ॥ ६५

लोकमातुरमसूयते जनस्
तत्तदेव बहु पश्य शोचति ।
तत्र पश्य कुशलानशोचतो
ये विदुस्तदुभयं पदं सताम् ॥ ६६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
[अस्मिन्नध्याये ६६ श्लोकाः]

## ॥ त्र्यशीत्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ध्यानयोगकथनम् ॥

भीष्मः—

हन्त वक्ष्यामि ते पार्थ ध्यानयोगं चतुर्विधम् ।
यं ज्ञात्वा शाश्वतीं सिद्धिं गच्छन्ति परमर्षयः ॥ १

यथा स्वनुष्ठितं ध्यानं तथा कुर्वन्ति योगिनः ।
महर्षयो ज्ञानतृप्ता निर्वाणगतमानसाः ॥ २

नावर्तन्ते पुनः पार्थ मुक्तास्संसारदोषतः ।
जन्मदोषपरिक्षीणास् स्वभावे पर्यवस्थिताः ॥ ३

निर्द्वन्द्वा नित्यसत्त्वस्था विमुक्तिं नित्यमाश्रिताः ।
असङ्गीन्यवि[1]वादीनि मनश्शान्तिकराणि च ॥ ४

[2]तत्र ध्यानेन संश्लिष्टम् एकाग्रो धारयेन्मनः ।
पिण्डीकृत्येन्द्रियग्रामम् आसीनः काष्ठवन्मुनिः ॥ ५

शब्दं न विन्देच्छ्रोत्रेण त्वचा स्पर्शं न वेदयेत् ।
रूपं न चक्षुषा विद्याज् जिह्वया न रसांस्तथा ॥ ६

घ्रेयाण्यपि च सर्वाणि [3]जह्याद्ध्यानेन योगवित् ।

---

1. घ—कारीणि 2. क-ख-घ—तत्राध्ययन
3. ग—जह्याच्च ध्यानयोगवित्

पञ्चवर्गप्रमाथीनि नेच्छेच्चैतानि वीर्यवान् ॥ ७
ततो मनसि संसृज्य पञ्चवर्गं विचक्षणः ।
समादध्यान्मनो भ्रान्तम् इन्द्रियैस्सह पञ्चभिः ॥ ८
विसञ्चारि निरालम्बं पञ्चद्वारं चलाचलम् ।
पूर्वं ध्यानपथे धीरस् समादध्यान्मनो नरः ॥ ९
इन्द्रियाणि मनश्चैव यदा पिण्डीकरोत्ययम् ।
एष ध्यानपथः पूर्वो मया समनुवर्णितः ॥ १०
तच्च तत् पूर्वसंरुद्धम् आत्मषष्ठं मनोऽन्तरा ।
स्फुरिष्यति समुद्भ्रान्तं विद्युदम्बुधरे यथा ॥ ११
जलबिन्दुर्यथा लोलः पर्णस्थस्सर्वतश्चलः ।
एवमेवास्य तच्चित्तं भ्रमति ध्यानवर्त्मनि ॥ १२
समाहितं क्षणं किञ्चिद् ध्यानवर्त्मनि तिष्ठति ।
पुनर्वायुपथे भ्रान्तं मनो भवति वायुवत् ॥ १३
अनिर्वेदो गतक्लेशो गततन्द्रीरमत्सरः ।
समादध्यात् पुनश्चेतो ध्यानेन ध्यानयोगवित् ॥ १४
विचारश्च वितर्कश्च विवेकश्चोपजायते ।
मुनेस्समादधानस्य प्रथमं ध्यानमादितः ॥ १५
मनसा क्लिश्यमानस्तु तत्समाधानकाम्यया ।
न निर्वेदं मुनिर्गच्छेद् कुर्यादेवात्मनो हितम् ॥ १६

पांसुभस्मकरीषाणां यथा वै राशयश्चिताः ।
सहसा वारिणा सिक्ता न यान्ति परिभावनाम् ॥ १७

किञ्चित् सिक्तं यथा च स्याच्छुष्कं चूर्णमभावितम् ।
क्रमशस्तु शनैर्गच्छेत् सर्वं तत् परिभावनाम् ॥ १८

एवमेवेन्द्रियग्रामं शनैस्सम्परिभावयेत् ।
संहरेत् क्रमशश्चैनं स सम्यक् प्रशमिष्यति ॥ १९

स्वयमेव मनश्चैवं पञ्चवर्गश्च भारत ।
पूर्वं ध्यानमथ प्राप्य नित्ययोगेन शाम्यति ॥ २०

न तत् पुरुषकारेण न च दैवेन केनचित् ।
सुखमेष्यति तत्तस्य यदेवं संयतात्मनः ॥ २१

सुखेन तेन संयुक्तो रंस्यते ध्यानकर्मणि ।
गच्छन्ति योगिनो युक्ता निर्वाणं तन्निरामयम् ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
[अस्मिन्नध्याये २२ श्लोकाः]

---

## ।। चतुरशीत्यधिकशततमोऽध्यायः ।।

भीष्मेण युधिष्ठिरं प्रति जपफलप्रकारादिकथनम् ॥

युधिष्ठिरः—

चातुराश्रम्ययुक्तं ते राजधर्मास्तथैव च ।
नानाश्रयाश्च बहव इतिहासाः पृथग्विधाः ।। १

श्रुतास्त्वत्तः कथाश्चैव धर्मयुक्ता महामते ।
सन्देहोऽस्ति तु कश्चिन्मे तद्भवान् वक्तुमर्हति ।। २

जापकानां फलप्राप्तिं श्रोतुमिच्छामि भारत ।
किं फलं जपतामुक्तं क वा[1] तिष्ठन्ति जापकाः ।। ३

[2]जपस्य च विधिं कृत्स्नं वक्तुमर्हसि मेऽनघ ।
जापका इति किं चैतत् साङ्ख्यं योगः क्रियाविधिः ।। ४

किं यज्ञविधिरेवैष किमेतज्जप्यमुच्यते ।
एतन्मे सर्वमाचक्ष्व सर्वज्ञो ह्यसि मे मतः ।। ५

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
यमस्य च पुरा वृत्तं कालस्य ब्राह्मणस्य च ।। ६

---

1. ख-ग—गच्छन्ति  2. क-घ—जप्यस्य

[1]संन्यास एव वेदान्ते वर्तते जपनं प्रति ।
वेदादेवाभिनिर्वृत्ता शान्तिर्ब्रह्मण्यवस्थिताः ॥ ७

मार्गौ तावप्युभावेतौ संश्रितौ न च संश्रितौ ॥ ७॥

यथा संश्रूयते राजन् कारणं चात्र वक्ष्यते ।
मनस्समाधिरत्रापि तथेन्द्रियजयस्स्मृतः ॥ ८॥

सत्यमग्निपरीचारो विविक्तानां च सेवनम् ।
ध्यानं तपो दमश्शान्तिर् अनसूया मिताशनम् ॥ ९॥

विषयप्रतिसंहारो मितजल्पस्तथा गमः ।
एष प्रवर्तको धर्मो निवर्तकमथो शृणु ॥ १०॥

यथा निवर्तते कर्म जपतो ब्रह्मचारिणः ।
एतत् सर्वमशेषेण यथोक्तं परिवर्जयेत् ॥ ११॥

त्रिविधं मार्गमासाद्य व्यक्ताव्यक्तमनामयम् ।
कुशोच्चयनिषण्णस्सन् कुशहस्तः कुशस्थली ॥ १२॥

चीरैः परिवृतस्तस्मिन् मध्ये छन्नः कुशैस्तथा ।
विषयेभ्यो नमस्कुर्याद् विषयान् न च भावयेत् ॥ १३॥

धार्ष्ट्यमुत्पाद्य मनसा मनस्येव मनो दधत् ॥ १४

तद्ब्रह्म ध्यायते यो हि जपन् वै संहितां हिताम् ।
अथ वा संन्यस्यति तां समाधौ पर्यवस्थितः ॥ १५

---

1. ग—इक्ष्वाकोश्चैव मृत्योश्च विवादे धर्मकारणात् । [अधिकः पाठः]

ध्यानमुत्पादयत्यत्र संहिताबलसंश्रयात् ।
शुद्धात्मा तपसा दान्तो निवृ[1]त्ताशेषकामवान् ॥ १६

अरागमोहो निर्द्वन्द्वो न शोचति न सज्जते ।
नं कर्ता करणीयानां नाकार्याणामिति स्थितिः ॥ १७

न चाहङ्कारयोगेन मनः प्रस्थापयेत् क्वचित् ।
न चानुग्रहणे युक्तो नावमानी न चाक्रियः ॥ १८

ध्यानक्रियापरो युक्तो ध्यानवान् ध्याननिश्चयः ।
ध्याने समाधिमुत्पाद्य तदपि त्यजति क्रमात् ॥ १९

स चैतस्यामवस्थायां सर्वत्यागकृतस्सुखी ।
निरीहस्त्यजति प्राणान् ब्राह्मीं संश्रयते तनुम् ॥ २०

अथ वा नेच्छते तत्र ब्रह्मकायनिषेवणम् ।
उत्क्रामति च मार्गस्थो नैव क्वचन जायते ॥ २१

आत्मबुद्धिं समास्थाय शान्तीभूतो निरामयः ।
अमृतं विरजं शुद्धम् आत्मानं प्रतिपद्यते ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥
[अस्मिन्नध्याये २२ श्लोकाः]

---

1. ख—त्तद्वेष

## ॥ पञ्चाशीत्यधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति जापकोपाख्यानकथनम् ॥

युधिष्ठिरः—

गतीनामुत्तमा प्राप्तिः कथिता जापकेष्विह ।
एकैवैषा गतिस्तेषाम् उत यान्त्यपरा अपि ॥ १

भीष्मः—

शृणुष्वावहितो राजञ् जापकानां गतिं विभो ।
यथा गच्छन्ति निरयम् अनेकं पुरुषर्षभ ॥ २

यथोक्तमेतत् पूर्वं यो नानुतिष्ठति जापकः ।
एकदेशक्रियश्चात्र निरयं [1]स निगच्छति ॥ ३

[2]अवमानेन कुरुते न तुष्यति न शोचति ।
ईदृशो जापको याति निरयं नात्र संशयः ॥ ४

अहङ्कारकृतश्चैव सर्वे निरयगामिनः ।
परावमानी पुरुषो भविता निरयोपगः ॥ ५

अभिध्यापूर्वकं जप्यं कुरुते यश्च मोहितः ।
यत्राभिध्यां स कुरुते तं निरयमृच्छति ॥ ६

अथैश्वर्यप्रवृत्तस्सञ् जापको यत्र रज्यते ।

1. घ—सोऽधिगच्छति 2. ग—अवज्ञानेन

स एव निरयस्तस्य नासौ तस्मात् प्रमुच्यते ॥ ७

रागेण जापको जप्यं कुरुते यस्तु मोहितः ।
यत्रास्य रागः पतति तत्र तत्रोपपद्यते ॥ ८

दुर्बुद्धिरकृतप्रज्ञश्च चले मनसि तिष्ठति ।
चलामेव गतिं याति निरयं वा निगच्छति ॥ ९

अकृतप्रज्ञको बालो मोहं गच्छति जापकः ।
स मोहान्निरयं याति यत्र गत्वाऽनुशोचति ॥ १०

दृढग्राही करोमीति जप्याञ्जपति जापकः ।
न सम्पूर्णो न वा युक्तो निरयं सोऽधिगच्छति ॥ ११

युधिष्ठिरः—

अनिमित्तं परं यत्तद् अव्यक्तं ब्रह्मणि स्थितम् ।
सम्भूतो जापकः कस्मात् सशरीरमिहाविशेत् ॥ १२

भीष्मः—

दुष्प्रस्थानेन निरया बहवस्समुदाहृताः ।
प्रशस्तं जापकत्वं च दोषाश्चैते तदात्मकाः ॥ १३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
[ अस्मिन्नध्याये १३ श्लोकाः ]

———

## ॥ षडशीत्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति जापकोपाख्यानकथनम् ॥

युधिष्ठिरः—

कीदृशं जापको याति नरकं वर्णयस्व मे ।
कौतूहलं हि मे जातं तद्भवान् वक्तुमर्हति ॥ १

भीष्मः—

धर्मस्यांशप्रसूतोऽसि धर्मज्ञोऽसि स्वभावतः ।
धर्ममूलाश्रयं वाक्यं शृणुष्वावहितोऽनघ ॥ २

अमूनि यानि स्थानानि देवानाममरात्मनाम् ।
नानासंस्थानवर्णानि नानारूपफलानि च ॥ ३

दिव्यानि कामचारीणि विमानानि सभास्तथा ।
आक्रीडा विविधा राजन् पद्मिन्यश्चामलोदकाः ॥ ४

चतुर्णां लोकपालानां शुक्रस्याथ बृहस्पतेः ।
मरुतां विश्वदेवानां साध्यानामश्विनोरपि ॥ ५

रुद्रादित्यवसूनां च तथाऽन्येषां दिवौकसाम् ।
एते वै निरयास्तात स्थानस्य परमात्मनः ॥ ६

अभयं चानिमित्तं च न च क्लेशभयावृतम् ।
द्वाभ्यां मुक्तं त्रिभिर्मुक्तम् अष्टाभिस्त्रिभिरेव च ॥ ७

चतुर्लक्षणवर्जं तच् चतुष्कारणवर्जितम् ।
अप्रहर्षमनाद्यन्तम् अशोकं विगतक्लमम् ॥ ८

कालं स पचते तत्र न कालस्तत्र वै प्रभुः ।
स कालस्य प्रभू राजन् सर्वस्यापि तथेश्वरः ॥ ९

आत्मा केवलतां प्राप्तस् तत्र गत्वा न शोचति ।
ईदृशं परमं स्थानं निरयास्ते च तादृशाः ॥ १०

एते ते निरयाः प्रोक्तास् सर्व एव यथातथम् ।
तस्य स्थानवरस्येह सर्वे निरयसंज्ञिताः ॥ ११

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
[ अस्मिन्नध्याये ११ श्लोकाः ]

---

## ॥ सप्ताशीत्यधिकशततमोऽध्यायः ॥



जापकोपाख्याने कालयमधर्मविप्रेक्ष्वाक्वादीनां संवादः ॥



युधिष्ठिरः—

कालमृत्युयमानां ते ब्राह्मणस्य च सत्तम ।
विवादो व्याहृतः पूर्वं तद्भवान् वक्तुमर्हति ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
इक्ष्वाकोस्सूर्यपुत्रस्य यद्वृत्तं ब्राह्मणस्य च ॥ २

कालस्य मृत्योश्च तथा यद्वृत्तं तन्निबोध मे ।
यथा स तेषां संवादो यस्मिन् स्थाने स चाभवत् ॥ ३

ब्राह्मणो जापकः कश्चिद् धर्मवृत्तो महायशाः ।
षडङ्गविन्महाप्राज्ञः पैप्पलादस्स कौशिकः ॥ ४

तस्यापरोक्षं विज्ञानं षट्स्वङ्गेषु तथैव च ।
वेदेषु चैव निष्णातो हिमवत्पादसंश्रयः ॥ ५

सोऽयं ब्रह्म तपस्तेपे संहितां संयतो जपन् ।
तस्य वर्षसहस्रं तु नियमेन तथा गतम् ॥ ६

स देव्या दर्शितस्साक्षात् प्रीतास्मीति तदा किल ।
जप्यमावर्तयंस्तूष्णीं न स तां किञ्चिदब्रवीत् ॥ ७

तस्यानुकम्पया देवी प्रीता समभवत् तदा ।
वेदमाता ततस्तस्य तज्जप्यं समपूजयत् ॥ ८

समाप्य जप्यं तूत्थाय शिरसा पादयोस्तदा ।
पपात देव्या धर्मात्मा वचनं चेदमब्रवीत् ॥ ९

जापकः—

दिष्ट्या देवि प्रसन्ना त्वं दर्शनं चागताऽसि मे ।

यदि वाऽपि प्रसन्नाऽसि जप्ये मे रमतां मतिः ॥ १०

सावित्री—

किं प्रार्थयसि विप्रर्षे किं चेष्टं करवाणि ते ।
प्रब्रूहि जपतां श्रेष्ठ सर्वं तत् ते भविष्यति ॥ ११

भीष्मः—

इत्युक्तस्स तदा देव्या विप्रः प्रोवाच धर्मवित् ।
जप्यं प्रति ममेच्छेयं वर्धतेति पुनः पुनः ॥ १२

मनसश्च समाधिर्मे वर्धताहरहश्शुभे ।
तं तथेति ततो देवी मधुरं प्रत्यभाषत ॥ १३

इदं चैवापरं प्राह देवी तत्प्रियकाम्यया ॥ १३॥

सावित्री—

निरयं नैव याता त्वं यत्र याता द्विजर्षभाः ।
यास्यसि ब्रह्मणस्स्थानम् अनिमित्तमनिन्दितः ॥ १४॥

साधये भविता चैतद् यत्त्वयाऽहमिहार्थिता ॥ १५

नियतो जप चैकाग्रो धर्मस्त्वां समुपैष्यति ।
कालो मृत्युर्यमश्चैव समायास्यन्ति तेऽन्तिकम् ॥ १६

भविता च विवादोऽत्र तव तेषां च धर्मतः ॥ १६॥

भीष्मः—

[1]एवमुक्त्वा भगवती जगाम भवनं स्वकम् ।

---

1. ङ-क—अर्धद्वयं नास्ति

ब्राह्मणोऽपि जपन्नास्ते दिव्यं वर्षशतं तथा ॥ १७॥

समाप्ते नियमे तस्मिस् तथा विप्रस्य धीमतः ।
साक्षात् प्रीतस्तदा धर्मो दर्शयामास तं द्विजम् ॥ १८॥

धर्मः—

द्विजाते पश्य मां धर्मम् अहं त्वां द्रष्टुमागतः ।
जप्यस्यास्य फलं यत्तत् सम्प्राप्तं तच्च मे शृणु ॥ १९॥

जिता लोकास्त्वया सर्वे ये दिव्या ये च मानुषाः ।
देवानां निलयान् साधो सर्वानुत्क्रम्य यास्यसि ॥ २०॥

प्राणत्यागं कुरु मुने गच्छ लोकान् यथेप्सितान् ।
त्यक्त्वाऽऽत्मनश्शरीरं च ततो लोकानवाप्स्यसि ॥ २१॥

ब्राह्मणः—

कृतं लोकैर्हि मे धर्म गच्छ त्वं च यथासुखम् ।
बहुदुःखसहं देहं नोत्सृजेयमहं विभो ॥ २२॥

धर्मः—

अवश्यं भोश्शरीरं ते त्यक्तव्यं मुनिपुङ्गव ।
स्वर्गमारुह्यतां विप्र किं वा ते रोचतेऽनघ ॥ २३॥

ब्राह्मणः—

न रोचये स्वर्गवासं विना देहमहं विभो ।
गच्छ धर्म न मे श्रद्धा स्वर्गं [1]यातुं विनाऽऽत्मना ॥ २४॥

---

1. अ-ग—गन्तुं

धर्मः—

अलं देहे मनः कृत्वा त्यक्त्वा देहं सुखी भव ।
गच्छ लोकानरजसो यत्र गत्वा न शोचसि ॥ २५॥

ब्राह्मणः—

रमे जपन् महाभाग कृतं लोकैस्सनातनैः ।
सशरीरेण गन्तव्यं मया स्वर्गं न चेत् प्रभो ॥ २६॥

धर्मः—

यदि त्वं नेच्छसि त्यक्तुं शरीरं पश्य वै द्विज ।
एष कालस्तथा मृत्युर् यमश्चायमुपागतः ॥ २७॥

भीष्मः—

अथ वैवस्वतः कालो मृत्युश्च त्रितयं विभो ।
ब्राह्मणं तं महाभागम् उपगम्येदमब्रवीत् ॥ २८॥

यमः—

तपसोऽस्य सुतप्तस्य तथा सुचरितस्य च ।
[1]फलप्राप्तिस्तव श्रेष्ठा यमोऽहं त्वामुपब्रुवे ॥ २९॥

कालः—

यथावदिह जप्यस्य फलावाप्तिरनुत्तमा ।
कालस्ते स्वर्गमारोढुं कालोऽहं त्वामुपागतः ॥ ३०॥

मृत्युः—

मृत्युं मां विद्धि धर्मज्ञ रूपिणं स्वयमागतम् ।

---

1. ग—स्वर्गप्रा

कालेन चोदितं विप्र त्वामितो नेतुमद्य वै ॥ ३१॥

ब्राह्मणः—

स्वागतं सूर्यपुत्राय कालाय च महात्मने ।
मृत्यवे चाथ धर्माय किं कार्यं करवाणि वः ॥ ३२॥

भीष्मः—

अर्घ्यं पाद्यं च दत्त्वा स तेभ्यस्तत्र समागमे ।
अब्रवीत् परमप्रीतस् स्वशक्त्या किं करोमि वः ॥ ३३॥

[1]स्वकार्यनिर्भरा यूयं परोपद्रवहेतवः ।
भवन्तो लोकसामान्याः किमर्थं ब्रूत सत्तमाः ॥ ३४॥

यमः—

वयमप्येवमत्युग्रा धातुराज्ञापुरःसराः ।
चोदिता धावमाना वै कर्मभावमनुव्रताः ॥ ३५॥

भीष्मः—

तस्मिन्नेवाथ काले तु तीर्थयात्रामुपागतः ।
इक्ष्वाकुरगमत्तत्र समेता यत्र ते विभो ॥ ३६॥

सर्वानेव तु राजर्षिस् सम्पूज्याभिप्रणम्य च ।
कुशलप्रश्नमकरोत् सर्वेषां राजसत्तमः ॥ ३७॥

तस्मै सोऽथासनं दत्त्वा पाद्यमर्घ्यं तथैव च ।

1. अ-क-ख-घ—अर्धचतुष्टयं नास्ति

[1]अब्रवीद्ब्राह्मणो वाक्यं कृत्वा कुशलसंविदम् ॥ ३८॥

ब्राह्मणः—

स्वागतं ते महाराज ब्रूहि यद्यदिहेच्छसि ।
स्वशक्त्या किं करोमीति तद्भवान् प्रब्रवीतु मे ॥ ३९॥

राजा—

राजाऽहं ब्राह्मणश्च त्वं यदि षट्कर्मसंस्थितः ।
ददानि वसु किञ्चित् ते प्रार्थितं प्रब्रवीहि मे ॥ ४०॥

ब्राह्मणः—

द्विविधा ब्राह्मणा राजन् धर्मश्च द्विविधस्स्मृतः ।
प्रवृत्तश्च निवृत्तश्च निवृत्तोऽस्मि प्रतिग्रहात् ॥ ४१॥

तेभ्यः प्रयच्छ दानानि ये प्रवृत्ता नराधिप ।
अहं न प्रतिगृह्णामि किमिष्टं किं ददानि ते ॥ ४२॥

[2]ब्रूहि त्वं नृपतिश्रेष्ठ तपसा साधयामि किम् ॥ ४३

राजा—

क्षत्रियोऽहं न जानामि देहीति वचनं क्वचित् ।
प्रयच्छ [3]युद्धमित्येवं वादिनो स्म द्विजोत्तम ॥ ४४

ब्राह्मणः—

अतुष्टस्त्वं स्वधर्मेण तथा तुष्टा वयं नृप ।
अन्योन्यस्योत्तरं नास्ति यदिष्टं तत् समाचर ॥ ४५

---

1. ग—ब्रह्मविद्वा 2. अ-क-ख-घ—नास्तीदमधर्मम्
3. ख-घ—बुद्धिमित्येवं वादिनोऽस्मि

राजा—

स्वशक्त्याऽहं ददानीति त्वया पूर्वप्रभाषितम् ।
याचे त्वां दीयतां मह्यं जप्यस्यास्य फलं द्विज ॥ ४६

ब्राह्मणः—

युद्धं मम सदा वाणी याचतीति विकत्थसे ।
न च युद्धं मया साध्यं किमर्थं याचसे पुनः ॥ ४७

राजा—

वाग्वज्रा ब्राह्मणाः प्रोक्ताः क्षत्रिया बाहुजीविनः ।
वाग्युद्धं तदिदं तीव्रं मम विप्र त्वया सह ॥ ४८

ब्राह्मणः—

सैवाद्यापि प्रतिज्ञा मे स्वशक्त्या किं प्रदीयताम् ।
ब्रूहि दास्यामि राजेन्द्र विभवे सति मा चिरम् ॥ ४९

राजा—

यत्तद्वर्षशतं पूर्णं जप्यं वै जपता त्वया ।
फलं प्राप्तं तत् प्रयच्छ मम दित्सुर्भवान् यदि ॥ ५०

ब्राह्मणः—

परमं गृह्यतां तस्य फलं यज्जपितं मया ।
अर्धं त्वमविचारेण फलं तस्य समाप्नुहि ॥ ५१

अथ वा सर्वमेवेह मामकं जापकं फलम् ।
राजन् प्राप्नुहि कामं त्वं यदि सर्वमिहेच्छसि ॥ ५२

राजा—

कृतं सर्वेण भद्रं ते जप्यं यद्याचितं मया ।
स्वस्ति तेऽस्तु गमिष्यामि किञ्च तस्य फलं वद ॥ ५३

ब्राह्मणः—

फलप्राप्तिं न जानामि दत्तं यज्जपितं मया ।
अयं धर्मश्च कालश्च यमो मृत्युश्च साक्षिणः ॥ ५४

राजा—

अज्ञातमस्य धर्मस्य फलं किं मे करिष्यति ।
[1]फलं ब्रवीषि धर्मस्य भवेज्जप्यकृतं नु माम् ॥ ५५
प्राप्नोतु तत् फलं विप्रो नाहमिच्छे ससंशयम् ॥ ५५॥

ब्राह्मणः—

नाददे [2]न च वक्तव्यं दत्तं वाचा फलं मया ।
[3]वाक्यं प्रमाणं राजर्षे मम तुभ्यं च भाषिते ॥ ५६॥
नाभिसन्धिर्मया जप्ये कृतपूर्वः कदाचन ।
जप्ताऽहं राजशार्दूल कथं दास्याम्यहं फलम् ॥ ५७॥
ददस्वेति त्वया चोक्तं ददानीति तथा मया ।
न वाचं दूषयिष्यामि सत्यं रक्ष स्थिरो भव ॥ ५८॥
अथैवं वदतो मेऽद्य वचनं न करिष्यसि ।

---

1. ख—नास्तीदमर्धम्　　2. ग—परवित्तं वै
3. घ—अर्धचतुष्टयं नास्ति

महानधर्मो भविता तव राजन् मृषा कृतः ॥ ५९॥
न युक्ता तु मृषा वाणी त्वया वक्तुमरिन्दम ।
तथा मयाऽपि ह्यधिकं मिथ्या कर्तुं न शक्यते ॥ ६०॥
संश्रुतं च मया पूर्वं ददामीत्यविचारितम् ।
तद्गृह्णीष्वाविचारेण यदि सत्ये स्थितो भवान् ॥ ६१॥
इहागम्य महाराज जाप्यं फलमयाचथाः ।
तन्मे निसृष्टं गृह्णीष्व भव सत्ये स्थितोऽपि च ॥ ६२॥
नायं लोकोऽस्ति न परो न च पूर्वान् स तारयेत् ।
कुत एवापरान् राजन् मृषावादपरायणः ॥ ६३॥
न यज्ञाध्ययने दानं नियमास्तारयन्ति हि ।
यथा सत्यं परे लोके तथेह पुरुषर्षभ ॥ ६४॥
तपांसि यानि चीर्णानि चरिष्यसि च यत् तपः ।
समाशतैस्सहस्रैश्च तत् सत्यान्न विशिष्यते ॥ ६५॥
सत्यमेकं परो ब्रह्म सत्यमेकं परं तपः ।
सत्यमेकं परं [1]यज्ञस् सत्यमेकं परं श्रुतम् ॥ ६६॥
सत्यं [2]वेदेषु जागर्ति फलं सत्ये परं स्मृतम् ।
तपो धर्मो दमश्चैव सर्वं सत्ये प्रतिष्ठितम् ॥ ६७॥
सत्यं वेदास्तथाङ्गानि सत्यं यज्ञास्तथा विधिः ।

---

1. घ—लोकः  2. ख-घ—देवेषु

व्रतचर्या तथा सत्यम् ओङ्कारस्सत्यमेव च ॥ ६८॥

प्राणिनां जननं सत्यं सत्यं सन्ततिरेव च ।
सत्येन वायुरभ्येति सत्येन तपते रविः ॥ ६९॥

सत्येन चाग्निर्दहति सत्ये स्वर्गः प्रतिष्ठितः ।
दानं यज्ञस्तथा वेदास् [1]सोमा मन्त्रास्सरस्वती ॥ ७०॥

तुलामारोपितो धर्मस् सत्यं चैवेति नश्श्रुतम् ।
समां कक्षां धारयतो यतस्सत्यं ततोऽधिकम् ॥ ७१॥

[2]यतस्सत्यं ततो धर्मस् सर्वं सत्येन वर्धते ।
किमर्थमनृतं कर्म कर्तुं राजंस्त्वमिच्छसि ॥ ७२॥

सत्ये कुरु स्थिरं भावं मा राजन्ननृतं कृथाः ।
कस्मात्त्वमनृतं वाक्यं देहीति कुरुषेऽशुभम् ॥ ७३॥

यदि जप्यफलं दत्तं मया नेच्छसि वै नृप ।
स्वधर्मेभ्यः परिभ्रष्टो लोकाननुचरिष्यसि ॥ ७४॥

संश्रुत्य यो न दित्सेत्तु याचित्वा यश्च नेच्छति ।
उभावानृतिकावेतौ न मृषा कर्तुमर्हसि ॥ ७५॥

राजा—

योद्धव्यं रक्षितव्यं च क्षत्रधर्मः किल द्विज ।

---

1. ख—सोभा
2. ख-ग-घ—यतो धर्मस्ततः सत्यं

दातारः क्षत्रिया: प्रोक्ता गृह्णीयां भवतः कथम् ॥ ७६॥

ब्राह्मणः—

न च्छन्दयामि ते राजन् नापि ते गृहमाव्रजम् ।
इहागत्य तु याचित्वा न गृह्णीषे पुनः कथम् ॥ ७७॥

धर्मः—

[1]अविवादोऽस्तु युवयोर् धर्मं मां वित्तमागतम् ।
द्विजो दानफलैर्युक्तो राजा सत्यफलेन च ॥ ७८॥

स्वर्गः—

स्वर्गं मां विद्धि राजेन्द्र रूपिणं स्वयमागतम् ।
अविवादोऽस्तु युवयोर् उभौ तुल्यफलौ युवाम् ॥ ७९॥

राजा—

कृतं स्वर्गेण मे कार्यं गच्छ स्वर्गं यथागतम् ।
विप्रो यदीच्छते दातुं प्रतीच्छतु च मे धनम् ॥ ८०॥

ब्राह्मणः—

बाल्ये यदि स्यादज्ञानान्मया हस्तः प्रसारितः ।
निवृत्तलक्षणं धर्मम् उपासे संहितां जपन् ॥ ८१॥

निवृत्तं मां चिराद्राजन् विप्रलोभयसे कथम् ।
स्वेन कार्यं करिष्यामि त्वत्तो नेच्छे फलं नृप ॥ ८२॥

तपस्स्वाध्यायकुशलो विरतश्च प्रतिग्रहात् ॥ ८३

1. ख—अर्धत्रयं नास्ति

राजा—

यदि विप्र निसृष्टं ते जप्यस्य कुलमुत्तमम् ।
आवयोर्यत् फलं किञ्चित् सहितं नौ तदस्त्विह ॥　　८४

द्विजाः प्रतिग्रहे युक्ता दातारो राजवंशजाः ।
यदि धर्मश्श्रुतो विप्र सहैव फलमस्तु नौ ॥　　८५

मा वा भूत् सह भोज्यं नौ मदीयं फलमाप्नुहि ।
प्रतीच्छ मत्कृतं धर्मं यदि ते मय्यनुग्रहः ॥　　८६

भीष्मः—

ततो विकृतवेषौ द्वौ पुरुषौ समुपस्थितौ ।
गृहीत्वाऽन्योन्यमावेष्ट्य कुचेलावूचतुर्वचः ॥　　८७

न मे धारयसीत्येको धारयामीति चापरः ।
इहास्ति नौ विवादोऽयम् अयं राजाऽनुशासकः ॥　　८८

सत्यं ब्रवीम्यहमृणं न मे धारयते भवान् ।
अनृतं वदसीह त्वम् ऋणं ते धारयाम्यहम् ॥　　८९

तावुभौ भृशसन्तप्तौ राजानमिदमूचतुः ।
परीक्ष्यौ तु यथा स्याव नावामिह विगर्हितौ ॥　　९०

विरूपः—

धारयामि नरव्याघ्र विकृतस्येह गोः फलम् ।
ददतश्च न गृह्णाति विकृतो मे महीपते ॥　　९१

विकृतः—

न मे धारयते किञ्चिद् विरूपोऽयं नराधिप ।
मिथ्या ब्रवीत्ययं हि त्वां सत्याभासं जनाधिप ॥ ९२

राजा—

विरूप किं धारयते भवानद्य वदस्व मे ।
श्रुत्वा तथा करिष्यामीत्येवं मे धीयते मनः ॥ ९३

विरूपः—

शृणुष्वावहितो राजन् यथैतद्धारयाम्यहम् ।
विकृतस्यास्य राजर्षे निखिलेन नरर्षभ ॥ ९४

अनेन धर्मप्राप्त्यर्थं पुरा दत्ता शुभाऽनघ ।
धेनुर्विप्राय राजर्षे तपस्स्वाध्यायशालिने ॥ ९५

तस्याश्चायं मया राजन् फलमभ्येत्य याचितः ।
विकृतेन च मे दत्तं विशुद्धेनान्तरात्मना ॥ ९६

ततो मे सुकृतं कर्म कृतमात्मविशुद्धये ।
गावौ च कपिले क्रीत्वा वत्सले बहुदोहने ॥ ९७

ते चोञ्छवृत्तये राजन् मया समुपवर्जिते ।
यथाविधि यथाशुद्धं तदस्याहं पुनः प्रभो ॥ ९८

इहाद्यैव प्रयच्छामि गृहीत्वा द्विगुणं फलम् ।
एवं स्यात् पुरुषव्याघ्र कश्शुद्धः कोऽत्र दोषवान् ॥ ९९

एवं विवदमानौ तु त्वामिहाभ्यागतौ नृप ।

कुरु धर्ममधर्मं वा विनये नौ समादध ॥ १००

यदि नेच्छति मे दातुं यथा दत्तमनेन वै ।
भवानत्र स्थिरो भूत्वा मार्गे स्थापयतु प्रभुः ॥ १०१

राजा—

दीयमानं न गृह्णासि ऋणं कस्मात्त्वमद्य वै ।
यथैव तेऽभ्यनुज्ञातं तथा गृह्णीष्व मा चिरम् ॥ १०२

विकृतः—

दीयतामित्यनेनोक्तं ददानीति तथा मया ।
नायं मे धारयत्यत्र गम्यतां यत्र वाञ्छति ॥ १०३

राजा—

ददतोऽस्य न गृह्णासि विषमं प्रतिभाति मे ।
दण्ड्यो हि त्वं मम मतो नास्त्यत्र खलु संशयः ॥ १०४

विकृतः—

मयाऽस्य दत्तं राजर्षे गृह्णीयां तत् कथं पुनः ।
को ममात्रापराधो मे दण्डमाज्ञापय प्रभो ॥ १०५

विरूपः—

दीयमानं यदि मया न गृह्णासि कथञ्चन ।
नियच्छति त्वां नृपतिर् अयं धर्मानुशासकः ॥ १०६

विकृतः—

स्वयं मया याचितेन दत्तं कथमिवाद्य तत् ।
गृह्णीयां गच्छतु भवान् अभ्यनुज्ञां ददामि ते ॥ १०७

ब्राह्मणः—

श्रुतमेतत् त्वया राजन् अनयोः कथितं द्वयोः ।
प्रतिज्ञातं मया दत्तं तद्गृहाणाविचारितम् ॥ १०८

राजा—

प्रस्तुतं सुमहत् कार्यम् अनयोर्गह्वरं यथा ।
जापकस्य दृढीकारः कथमेतद्भविष्यति ॥ १०९

यदि तावन्न गृह्णामि जापकेनापवर्जितम् ।
कथं न लिप्येयमहं दोषेण महताऽद्य वै ॥ ११०

भीष्मः—

तौ चोवाच स राजर्षिः कृतकार्यौ गमिष्यथः ।
नेदानीं मामिहासाद्य राजधर्मो भवेन्मृषा ॥ १११

स्वधर्मः परिपाल्यश्च राज्ञामिति विनिश्चयः ।
विप्रधर्मश्च स गुरुर् मामनात्मानमाविशत् ॥ ११२

ब्राह्मणः—

गृहाण धारये यत्ते याचितं संश्रुतं मया ।
न चेद्ग्रहीष्यसे राजञ् शपिष्ये त्वां न संशयः ॥ ११३

राजा—

धिग्राजधर्मं यस्यायं कार्यस्यास्य विनिश्चयः ।
इत्यर्थं मे ग्रहीतव्यं कथं [1]तथ्यं भवेदिति ॥ ११४
एष पाणिरपूर्वं भो निक्षेपार्थं प्रसारितः ।

1. ख—तुल्यं

यन्मे धारयसे विप्र तदिदानीं प्रदीयताम् ॥　　११५

ब्राह्मणः—

संहितां जपता यावान् गुणः कश्चित् कृतो मया ।
तत् सर्वं प्रतिगृह्णीष्व यदि किञ्चिदिहास्ति मे ॥　　११६

राजा—

जलमेतन्निपतितं मम पाणौ द्विजोत्तम ।
सममस्तु सहैवास्तु प्रतिगृह्णातु मे भवान् ॥　　११७

विरूपः—

कामक्रोधौ विद्धि नौ त्वम् आवाभ्यां [1]कारितो भवान् ।
सहेति च यदुक्तं ते समो लोकस्तवास्य च ॥　　११८

नायं धारयते किञ्चिज् जिज्ञासा त्वत्कृते कृता ॥　　११८॥

कालो धर्मस्तथा मृत्युः कामः क्रोधस्तथा युवाम् ।
सर्वमन्योन्यनिष्कर्षे [2]निकृष्टं पश्यतस्तव ॥　　११९॥

गच्छ लोकाञ्जितान् स्वेन कर्मणा यत्र वाञ्छसि ॥　　१२०

भीष्मः—

जापकानां फलावाप्तिर् मया ते सम्प्रदर्शिता ।
गतिस्स्थानं च लोकाश्च जापकेन यथाऽऽर्जिताः ॥　　१२१

प्रयाति संहिताध्यायी ब्रह्माणं परमेष्ठिनम् ।

---

1. ख—कामतो　　2. ग—निष्कृष्टं

अथ वाऽग्निं समाधाय सूर्यमाविशतेऽपि वा ॥ १२२

स तैजसेन भावेन यदि तत्राश्नुते रतिम् ।
गुणांस्तेषां समाधत्ते रागेण प्रतिमोहितः ॥ १२३

एवं सोमे तथा वायौ भूम्याकाशशरीरगः ।
सरागस्तत्र वसति गुणांस्तेषां समाददत् ॥ १२४

अथ तत्र विरागी च गच्छति त्वथ संशयम् ।
परमव्ययमिच्छन् स तमेवाविशते पुनः ॥ १२५

अमृताच्चामृतं प्राप्तश् शान्तीभूतो निरात्मवान् ।
ब्रह्मभूतस्स निर्द्वन्द्वस् सुखी शान्तो निरामयः ॥ १२६

ब्रह्मस्थानमनावर्तम् एकमक्षरसंज्ञकम् ।
अदुःखमरजश्शान्तं शीतं तत् प्रतिपद्यते ॥ १२७

चतुर्भिर्लक्षणैर्हीनं तथा षड्भिस्सषोडशैः ।
पुरुषं समतिक्रम्य आकाशं प्रतिपद्यते ॥ १२८

अथ चेच्छति रागात्मा सर्वं तदधितिष्ठति ।
यच्च प्रार्थयते तच्च मनसा प्रतिपद्यते ॥ १२९

अथ वोपेक्षते लोकान् सर्वान् निरयसंज्ञितान् ।
निस्पृहस्सर्वतो मुक्तस् तत्रैव रमते सुखम् ॥ १३०

एवमेषा महाभाग जापकस्य गतिर्यथा ।
तत्तत् सर्वं समाख्यातं किं भूयश्श्रोतुमिच्छसि ॥ १३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
[ अस्मिन्नध्याये १३१ श्लोकाः ]

---

## ॥ अष्टाशीत्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति जपस्य फलकथनपूर्वकं जापकोपाख्यान-समापनम् ॥

---

युधिष्ठिरः—

किमुत्तरं तदा तौ स्म चक्रतुस्तेन भाषिते ।
ब्राह्मणो वाऽथवा राजा तन्मे ब्रूहि पितामह ॥ १

अथ वा तौ गतौ तत्र यदेतत् कीर्तितं त्वया ।
संवादो वा तयोः कोऽभूत् किं वा तौ तत्र चक्रतुः ॥ २

भीष्मः—

तथेति च प्रतिश्रुत्य धर्मं सम्पूज्य तावुभौ ।
यमं कालं च मृत्युं च स्वर्गं सम्पूज्य चार्हतः ॥ ३

पूर्वं ये चापरे तत्र समेता ब्राह्मणर्षभाः ।
सर्वान् सम्पूज्य शिरसा राजानं सोऽब्रवीद्द्विजः ॥ ४

ब्राह्मणः—

फलेनानेन संयुक्तो राजर्षे गच्छ मुख्यताम् ।
भवता चाभ्यनुज्ञातो जपेयं भूय एव ह ॥ ५

वरश्च मम पूर्वं हि दत्तो देव्या महाफलः ।
श्रद्धा ते जपतो नित्यं भवित्रीति विशां पते ॥ ६

राजा—

यद्येवं सफला सिद्धिश् श्रद्धा च जपितुं तव ।
गच्छ विप्र मया सार्धं मामकं फलमाप्नुहि ॥ ७

ब्राह्मणः—

कृतः प्रयत्नस्सुमहान् सर्वेषां सन्निधाविह ।
सह तुल्यफलौ चावां गच्छावो यत्र नौ गतिः ॥ ८

भीष्मः—

व्यवसायं तयोस्तत्र विदित्वा त्रिदशेश्वरः ।
सह देवैरुपययौ लोकपालैस्तथैव च ॥ ९

साध्या विश्वेऽथ मरुतो वाक्यानि [1]विविधानि च ।
नद्यश्शैलास्समुद्राश्च तीर्थानि विविधानि च ॥ १०

तपांसि संयोगविधिर् वेदास्तोभास्सरस्वती ।
नारदः पर्वतश्चैव विश्वावसुपरावसू ॥ ११

[2]तुम्बुरुप्रमुखाश्चैव हाहा हूहूस्तथैव च ।

---

1. ख—सुमहान्ति च 2. ख-घ—इदमर्धं नास्ति

गन्धर्वश्चित्रसेनश्च परिवारगणैर्युतः ॥ १२

नागास्सिद्धाश्च मुनयो देवदेवः प्रजापतिः ।
विष्णुस्सहस्रशीर्षा च देवोऽचिन्त्यस्समागमत् ॥ १३

अवाद्यन्तान्तरिक्षे च भेर्यस्तूर्याणि च प्रभो ।
पुष्पवर्षाणि दिव्यानि तत्र तेषां महात्मनाम् ॥ १४

ननृतुश्चाप्सरस्सङ्घास् तत्र तत्र समन्ततः ॥ १४॥

अथ स्वर्गस्तथा रूपी ब्राह्मणं वाक्यमब्रवीत् ॥ १५

स्वर्गः—

संसिद्धस्त्वं महाभाग त्वं च सिद्धस्तथा नृप ॥ १५॥

भीष्मः—

अथ तौ सहितौ राजन्नन्योन्यस्य विधानतः ।
विषयप्रतिसंहारम् उभावेव प्रचक्रतुः ॥ १६॥

प्राणापानौ तथोदानं समानं व्यानमेव च ।
एतांस्तु मनसि स्थाप्य दधतुः प्राणयोर्मनः ॥ १७॥

उपस्थितकृती तत्र नासिकाग्रमथो भ्रुवौ ;
भ्रुकुट्योश्चैव मनसा शनैर्धारयतस्तदा ॥ १८॥

[1]निश्चेष्टाभ्यां शरीराभ्यां स्थिरदृष्टी समाहितौ ।
जितासनौ समाधाय मूर्धन्यात्मानमेव च ॥ १९॥

तालुदेशमथोद्दाल्य ब्राह्मणस्य महात्मनः ।

1. अ—अर्धचतुष्टयं नास्ति

ज्योतिर्ज्वाला सुमहती जगाम त्रिदिवं तदा ॥ २०॥
हाहाकारस्तथा दिक्षु सर्वासु सुमहानभूत् ।
तज्ज्योतिस्स्तूयमानं तु ब्रह्माणं प्राविशत् तदा ॥ २१॥
ततस्स्वागतमित्याह तत्तेजः प्रपितामहः ।
प्रादेशमात्रं पुरुषं प्रत्युद्गम्य विशां पते ॥ २२॥
भूयश्चैवापरं प्राह मधुरं वचनं स्म सः ।
जापकैस्तुल्यफलता योगानां नात्र संशयः ॥ २३॥
योगस्य तावदेतेभ्यः फलं प्रत्यक्षदर्शनम् ।
जापकानां वरिष्ठं तु प्रत्युत्थानमिहाधिकम् ॥ २४॥
उष्यतां मयि चेत्युक्त्वा व्याददे स ततो मुखम् ।
अथास्य प्रविवेशास्यं ब्राह्मणो विगतज्वरः ॥ २५॥
राजाऽप्येतेन विधिना भगवन्तं पितामहम् ।
यथैव द्विजशार्दूलस् तथैव प्राविशत् तदा ॥ २६॥
स्वयम्भुवमथो देवा अभिवाद्य वचोऽब्रुवन् ॥ २७

देवाः—

जापकार्थमयं यत्नस् तदर्थं वयमागताः ।
कृतपूजाविमौ तुल्यं त्वया तुल्यफलान्वितौ ॥ २८
योगजापकयोस्तुल्यं फलं सुमहदद्य वै ।
सर्वाँल्लोकानतीत्यैतौ गच्छेतां यत्र वाञ्छितम् ॥ २९

ब्रह्मा—

महास्मृतिं पठेद्यस्तु तथैवैतां स्मृतिं शुभाम् ।
तावप्येतेन मार्गेण गच्छेतां मत्सलोकताम् ॥ ३०

यश्च योगे भवे[1]द्युक्तस् सोऽपि नास्त्यत्र संशयः ।
विधिनानेन देहान्ते मम लोकमवाप्नुयात् ॥ ३१

गम्यतां साधयिष्यामि यथा स्थानानि सिद्धये ॥ ३१॥

भीष्मः—

इत्युक्त्वा स तदा देवस् तत्रैवान्तरधीयत ।
आमन्त्र्य च ततो देवा ययुस्स्वं स्वं निवेशनम् ॥ ३२॥

ते च सर्वे महात्मानो धर्मं सत्कृत्य तत्र वै ।
पृष्ठतोऽनुययू राजन् सर्वे सुप्रीतमानसाः ॥ ३३॥

एतत् फलं जापकानां गतिश्चैव प्रकीर्तिता ।
यथाश्रुतं महाराज किं भूयश्श्रोतुमिच्छसि ॥ ३४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥
[अस्मिन्नध्याये ३४॥ श्लोकाः]

---

1. ख-ग—द्भक्तिः

## ॥ एकोननवत्यधिकशततमोऽध्यायः ॥

ज्ञानयोगादेः फलं भगवद्वेदनप्रकारं च पृष्टेन भीष्मेण युधिष्ठिरं प्रति तत्कथनाय मनुबृहस्पतिसंवादानुवादः ॥

---

युधिष्ठिरः—

किं फलं ज्ञानयोगस्य वेदानां नियमस्य च ।
भूतात्मा वा कथं ज्ञेयस् तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
मनोः प्रजापतेर्वादं महर्षेश्च बृहस्पतेः ॥ २

प्रजापतिश्श्रेष्ठतमः प्रजानां
देवर्षिसङ्घप्रवरं महर्षिम् ।
बृहस्पतिं प्रश्नमिमं पुराणं
प्रपच्छ शिष्योऽथ गुरुं प्रणम्य ॥ ३

मनुः—

यत् कारणं मन्त्रविधिप्रयुक्तं
ज्ञाने फलं यत् प्रवदन्ति विप्राः ।
यन्मन्त्रशब्दैरकृतप्रकाशं
तदुच्यतां मे भगवन् यथावत् ॥ ४

यत् स्तोत्रशस्त्राग्रहमन्त्रविद्भिर्
　यज्ञैरनेकैर्धनगोप्रदानैः ।
फलं महद्भिर्यदवाप्यते च
　किं तत् कथं वा भविता क्व वा तत् ॥ ५

मही महीजाः पवनोऽन्तरिक्षं
　जलौकसोऽग्निश्च जलं तथा द्यौः ।
दिवौकसश्चैव यतः प्रसूतास्
　तदुच्यतां मे भगवन् पुराणम् ॥ ६

ज्ञानं महत् प्रार्थयते नरो वै
　ततस्तदर्था भवति प्रवृत्तिः ।
न चेदहं वेद्मि परं पुराणं
　मिथ्याप्रवृत्तिं च कथं न कुर्याम् ॥ ७

ऋक्सामसङ्घांश्च यजूंषि चाहं
　छन्दांसि नक्षत्रगतिं निरुक्तम् ।
अधीत्य च व्याकरणं सकल्पं
　शिक्षां च भूतप्रकृतिं न वेद्मि ॥ ८

स मे भवाञ् शंसतु सर्वमेतज्
　ज्ञाने फलं कर्मणि वा यदेति ।

यथा च देहाच्च्यवते शरीरी
पुनश्शरीरं च यथाऽभ्युपैति ॥ ८

बृहस्पतिः—

यद्यत् प्रियं यस्य सुखं तदाहुस्
तदेव दुःखं प्रवदन्त्यनिष्टम् ॥ ९॥

इष्टं च मे स्यादितरच्च न स्याद्
एतत्कृते कर्मविधिः प्रवृत्तः ।
इष्टं त्वनिष्टं च शुभाशुभं च
साशीस्तपश्छन्दसि कर्मभिश्च ॥ १०॥

एभिर्विमुक्तः परमाविवेश
नैतत्कृते कर्मविधिः प्रवृत्तः ।
आत्मादिभिः कर्मभिरिज्यमानो
धर्मेषु युक्तो द्युतिमान् सुखार्थी ॥ ११॥

परं हि तत् कर्मपथादपेतं
निराशिषो यत् पदमाप्नुवन्ति ।
प्रजास्सृष्टा मनसा कर्मणा च
द्वावप्येतौ सत्पथौ लोकजुष्टौ ॥ १२॥

दृष्ट्वा कर्माशाश्वतं चान्तवच्च
मनस्त्यागे कारणं नान्यदस्ति ।

स्वेनात्मना चक्षुरिव प्रणेता
　　निशात्यये तमसा संवृतात्मा ॥　　१३॥
ज्ञानं तु विज्ञानगुणोपपन्नं
　　कर्माशुभं पश्यति वर्जनीयम् ॥　　१४

सर्पान् कुशाग्राणि तथोदपानं
　　ज्ञात्वा मनुष्याः परिवर्जयन्ति ।
अज्ञानतस्तत्र पतन्ति मूढा
　　ज्ञाने फलं पश्य यथा विशिष्टम् ॥　　१५

कृत्स्नाश्च मन्त्रा विधिवत् प्रयुक्ता
　　यज्ञा यथोक्तास्सह दक्षिणाश्च ।
अन्नप्रदानं मनसस्समाधिः
　　पञ्चात्मकं कर्मफलं वदन्ति ॥　　१६

गुणागुणं कर्म वदन्ति वेदास्
　　[1]तेभ्यो मन्त्रा मन्त्रमूलं हि कर्म ।
विधिर्विधेयं मनसोपपत्तिः
　　फलस्य भोक्ता च तथा शरीरी ॥　　१७

शब्दाश्च रूपाणि रसाश्च पुण्यास्
　　स्पर्शाश्च गन्धाश्च शुभास्तथैव ।

---

1. ख-ग—तस्मान्मन्त्रो मन्त्रपूर्वं हि कर्म

नरो रहस्स्थानगतः प्रभुस्स्याद्
एतत् फलं सिद्ध्यति कर्मणोऽस्य ॥ १८

यद्यच्छरीरेण करोति कर्म
शरीरयुक्तस्समुपाश्नुते तत् ।
[1]शरीरमेवायतनं सुखस्य
दुःखस्य चाप्यायतनं शरीरम् ॥ १९

वाचा च यत् कर्म करोति किञ्चिद्
वाचैव सर्वं समुपाश्नुते तत् ।
मनस्तु यत् कर्म करोति किञ्चि-
न्मनस्स्थमेवेदमुपाश्नुते तत् ॥ २०

यथागुणं कर्मगुणं फलार्थी
करोत्ययं कर्मफले निविष्टः ।
तथा तथाऽयं गुणवत्प्रयुक्तश्
शुभाशुभं कर्मफलं स भुङ्क्ते ॥ २१

मत्स्यो यथा स्रोत इवाभियाती
तथा कृतं पूर्वमुपैति कर्म ।
शुभे त्वसौ तुष्यति दुष्कृते तु
न तुष्यते वै परमश्शरीरी ॥ २२

1. ख—अर्धेसयं नास्ति

यतो जगत् सर्वमिदं प्रसूतं
　　ज्ञात्वाऽऽत्मवन्तोऽप्युपयान्ति शान्तिम् ।
यन्मन्त्रशब्दैरकृतप्रकाशं
　　तदुच्यमानं शृणु मे परं यत् ॥　　२३

रसैर्विमुक्तं विविधैश्च गन्धैर्
　　अशब्दमस्पर्शमरूपवच्च ।
अग्राह्यमव्यक्तमवर्णमेकं
　　पञ्चप्रकारं सृजति प्रजानाम् ॥　　२४

न स्त्री पुमान् नापि नपुंसकं वा
　　न सन्न चासत् सदसच्च तन्न ।
पश्यन्ति यद्ब्रह्मविदो मनुष्यास्
　　तदक्षरं न क्षरतीति विद्धि ॥*　　२५

अक्षरात् खं ततो वायुर् वायोर्ज्योतिस्ततो जलम् ।
जलात् प्रसूता जगती जगत्या जायते जगत् ॥　　२६

इमे शरीरैर्जलमेव गत्वा
　　जलाच्च तेजः पवनान्तरिक्षे ।
खाद्वै निवर्तन्ति न भाविनस्ते
　　ये भाविनस्ते परमाप्नुवन्ति ॥　　२७

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

नोष्णं न शीतं मृदु नापि तीक्ष्णं
नाम्लं कषायं मधुरं न तिक्तम् ।
न शब्दवन्नापि च गन्धवच्च
न रूपवत्तत् परमस्वभावम् ॥ २८

स्पर्शं तनुर्वेद रसं च जिह्वा
घ्राणं च गन्धं श्रवणं च शब्दम् ।
रूपाणि चक्षुर्न च तत्परं यद्
गृह्णन्त्यनध्यात्मविदो मनुष्याः ॥ २९

निवर्तयित्वा रसनां रसेभ्यो
घ्राणं च गन्धाच्छ्रवणं च शब्दात् ।
स्पर्शात्तनुं रूपगुणाच्च चक्षुस्
ततः परं पश्यति तं स्वभावम् ॥ ३०

यतो गृहीत्वा हि करोति यद्यद्
यस्मिंश्च यामारभते प्रवृत्तिम् ।
यस्मै च यद्येन च यश्च कर्ता
यत् कारणं तत् स्वमुपेयमाहुः ॥ ३१

यच्चापि पूर्वापरसाधकं च
यन्मन्त्रमर्चिष्यति सर्वलोकः ।

यस्सर्वहेतुः परमार्थकारी
तत् कारणं कार्यमतो यदन्यत् ॥ ३२

यथा च कश्चित् स्वकृतैर्मनुष्यश्
शुभाशुभं प्राप्नुते चाविरोधात् ।
एवं शरीरेषु शुभाशुभेषु
स्वकर्मभिर्ज्ञानमिदं निबद्धम् ॥ ३३

यथा प्रदीपः परतः प्रदीप्तः
प्रकाशमर्थस्य करोति विद्वन् ।
तथैव पञ्चेन्द्रियदीपवृक्षा
ज्ञानप्रदीप्ताः परवन्त एव ॥ ३४

यथा च राज्ञो बहवो ह्यमात्याः
पृथक् प्रमाणं प्रवदन्ति युक्ताः ।
तद्वच्छरीरेषु भवन्ति पञ्च
ज्ञानैकदेशाः परमस्स एभ्यः ॥ ३५

यथार्चिषोऽग्नेः पवनस्य वेगा
मरीचयोऽर्कस्य नदीषु चापः ।
गच्छन्ति चायान्ति च सन्ततास्तु
तद्वच्छरीराणि शरीरिणां तु ॥ ३६

यथा च कश्चित् परशुं गृहीत्वा
धूमं न पश्येज्ज्वलनं च काष्ठे ।
तद्वच्छरीरोदरपाणिपादं
छित्त्वा न पश्यन्ति ततो यदन्यत् ॥ ३७

तान्येव काष्ठानि यथा विमथ्य
धूमं च पश्येज्ज्वलनं च काष्ठे ।
तद्वत् सुबुद्धिं सममिन्द्रियार्थैर्
बुधः परं पश्यति तं स्वभावम् ॥ ३८

यथात्मनोऽङ्गं पतितं पृथिव्यां
स्वप्नान्तरे पश्यति चात्मनोऽन्यत् ।
श्रोत्रादियुक्तस्सुमनास्सुबुद्धिर्
लिङ्गात् तथा गच्छति लिङ्गमन्यत् ॥ ३९

उत्पत्तिवृद्धिक्षयसन्निपातैर्
न युज्यतेऽसौ परमश्शरीरी ।
अनेन लिङ्गेन तु लिङ्गमन्यद्
गच्छत्यदृष्टः प्रतिसन्धियोगात् ॥ ४०

न चक्षुषा पश्यति चक्षुरात्मनो
न चापि संस्पर्शमुपैति किञ्चित् ।

[1]तथाऽपि तैस्साधयते च कार्यं
  ते तं न पश्यन्ति स पश्यते तान् ॥ ४१

यथा समीपे ज्वलतोऽनलस्य
  सन्तापजं रूपमुपैति किञ्चित् ।
न चान्तरा रूपगुणं बिभर्ति
  तथैव तद्दृश्यते रूपमस्य ॥ ४२

तथा मनुष्यः प्रविमुच्य कायम्
  अदृश्यमन्यद्विशते शरीरम् ।
विसृज्य भूतेषु महत्सु देहं
  तदाश्रयं चैव बिभर्ति रूपम् ॥ ४३

खं वायुमग्निं सलिलं तथोर्वीं
  समन्ततोऽभ्याविशते शरीरी ।
नानाश्रयाः कर्मसु वर्तमानाश्
  श्रोत्रादयः पञ्चगुणाञ् श्रयन्ते ॥ ४४

श्रोत्रं नभो घ्राणमुक्तं पृथिव्यास्
  तेजोमयं चक्षुरथो विपाकः ।
जलाश्रयं ज्ञानमुक्तं रसश्च
  वाय्वात्मकं स्पर्शनमामनन्ति ॥ ४५

---

1. ख—अर्धद्वयं नास्ति

महत्सु भूतेषु वसन्ति पञ्च
पञ्चेन्द्रियार्थाश्च रथेन्द्रियेषु ।
सर्वाणि चैतानि मनोनुगानि
बुद्धिं मनोऽन्वेति मनस्स्वभावम् ॥ ४६

शुभाशुभं कर्म कृतं यदस्य
तदेव प्रेत्याददतेऽन्यदेहे ।
मनोऽनुवर्तन्ति परावराणि
जलौकसस्स्रोत इवानुकूलम् ॥ ४७

चलं यथा दृष्टिपथं प्रयाति
सूक्ष्मं महद्रूपमिवावभाति ।
स्वरूपमालोकयतां च रूपं
परं तथा बुद्धिपथं परैति* ॥ ४८

यदिन्द्रियैस्तूपगतैः पुरस्तात्
प्राप्तान् गुणान् संस्मरते चिराय ।
तेष्विन्द्रियेषूपहतेषु पश्चात्
[1]स बुद्धिरूपः परमस्स्वभावः ॥ ४९

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
1. अ-क-ख—सद्बुद्धि; घ—तद्बुद्धि

यथेन्द्रियार्थान् युगपत् समन्ता-
न्नावेक्षते कृत्स्नशस्तुल्यकालम् ।
यथाक्रमं सञ्चरते स विद्वांस्
तस्मात् स एकः परमश्शरीरी ॥ ५०

रजस्तमस्सत्त्वमथो तृतीयं
गच्छत्यसौ ज्ञानगुणान् विरूपान् ।
तथेन्द्रियाण्याविशतीह देही
हुताशनं वायुरिवेन्धनस्थम् ॥ ५१

न चक्षुषा पश्यति रूपमात्मनो
न पश्यति स्पर्शनमिन्द्रियेन्द्रियम् ।
न श्रोत्रलिङ्गं श्रवणेन दर्शनं
तथा न तत् पश्यति तद्धि पश्यति ॥ ५२

श्रोत्रादीनि न पश्यन्ति स्वं स्वमात्मानमात्मना ।
सर्वज्ञस्सर्वदर्शी च क्षेत्रज्ञस्तानि पश्यति ॥ ५३

यथा हिमवतः पार्श्वं पृष्ठं चन्द्रमसो यथा ।
न दृष्टपूर्वं मनुजैर् न च तन्नास्ति तावता ॥ ५४

तद्वद्भूतेषु भूतात्मा सूक्ष्मो ज्ञानात्मवानसौ ।
अदृष्टपूर्वश्चक्षुर्भ्यां न चासौ नास्ति तावता ॥ ५५

पश्यन्नपि यथा लक्ष्म [1]जनस्सोमेन विन्दति ।
एवमस्ति न चेत्तन्न न च तन्न परायणम् ॥ ५६

रूपवन्तमरूपत्वाद् उदयास्तमने बुधाः ।
धिया समनुपश्यन्ति तद्गतास्सवितुर्गतिम् ॥ ५७

तथा बुद्धिप्रदीपेन दूरस्थं सुविपश्चितः ।
प्रत्यासन्नं निशीदन्ति ज्ञेयं ज्ञानाभिसंहितम् ॥ ५८

न हि खल्वनुपायेन कश्चिदर्थोऽभिसिद्ध्यति ।
सूत्रजालैर्यथा मत्स्यान् बध्नन्ति जलजीविनः ॥ ५९

मृगैर्मृगाणां ग्रहणं पक्षिणां पक्षिभिर्यथा ।
गजानां च गजैरेव ज्ञेयं ज्ञानेन गृह्यते ॥ ६०

अहिरेव ह्यहेः पादान् पश्यतीति निदर्शनम् ।
तद्वन्मूर्तिषु मूर्तिस्थं ज्ञेयं ज्ञानेन पश्यति ॥ ६१

नोत्सहन्ते यथा वेत्तुम् इन्द्रियैरिन्द्रियाण्यपि ।
तथैवेह परा बुद्धिः परं बुद्ध्या न पश्यति ॥ ६२

यथा चन्द्रो ह्यमावास्याम् अलिङ्गत्वान्न दृश्यते ।
न च नाशोऽस्य भवति तथा विद्धि शरीरिणम् ॥ ६३

क्षीणकोशो ह्यमावास्यां चन्द्रमा न प्रकाशते ।
तद्वन्मूर्तिवियुक्तस्सञ् शरीरी नोपलभ्यते ॥ ६४

1. क-ख-घ—जगत्

[1]यथा कोशान्तरं प्राप्य चन्द्रमा भ्राजते पुनः ।
तद्वलिङ्गान्तरं प्राप्य शरीरी राजते पुनः ॥ ६५

जन्म वृद्धिः क्षयश्चास्य प्रत्यक्षेणोपलभ्यते ।
सा तु चन्द्रमसो व्यक्तिर् न तु तस्य शरीरिणः ॥ ६६

उत्पत्तिवृद्धिव्ययतो यथा स इति गृह्यते ।
चन्द्र एव त्वमावस्यां तथा भवति मूर्तिमान् ॥ ६७

नाभिसर्पद्विमुञ्चद्वा शशिनं दृश्यते तमः ।
विसृजेच्चोपसर्पेच्च तद्वत् पश्य शरीरिणम् ॥ ६८

यथा चन्द्रार्कसंयुक्तो राहुस्सन्नुपलभ्यते ।
तद्वच्छरीरसंयुक्तं ज्ञानं तदुपलभ्यते ॥ ६९

यथा चन्द्रार्कनिर्मुक्तं तमस्तन्नोपलभ्यते ।
[2]तद्वच्छरीरनिर्मुक्तश् शरीरी नोपलभ्यते ॥ ७०

यथा चन्द्रो ह्यमावास्यां नक्षत्रैर्युज्यते गतः ।
तद्वच्छरीरनिर्मुक्तः फलैर्युज्यति कर्मणः* ॥ ७१

यथा व्यक्तमिदं शेते स्वप्ने चरति चेतरत् ।
ज्ञानमिन्द्रियसंयुक्तं तद्वत् प्रेत्य भवाभवौ ॥ ७२

---

1. अ—अर्धद्वयं नास्ति
2. अ-क-घ—नास्तीदमर्धम्
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

यथाऽम्भसि प्रसन्ने तु रूपं पश्यति चक्षुषा ।
तद्वत् प्रसन्नेन्द्रियवाञ् ज्ञेयं ज्ञानेन पश्यति ॥ ७३

स एव लुलिते तस्मिन् यथा रूपं न पश्यति ।
तथेन्द्रियाकुलीभावे ज्ञेयं ज्ञानेन पश्यति ॥ ७४

अबुद्धिरज्ञानकृता अबुद्ध्या दूष्यते मनः ।
दुष्टस्य मनसः पञ्च सम्प्रदुष्यन्ति मानसाः ॥ ७५

अज्ञानतृप्तो विषयेष्ववगाढो न पश्यति ।
तं दृष्ट्वैव तु पूतात्मा विषयेभ्यो निवर्तते ॥ ७६

तर्षच्छेदो न भवति पुरुषस्येह किल्बिषात् ।
निवर्तते तदा तर्षः पापमन्तं गतं यदा ॥ ७७

विषयेषु च संसर्गाच् छाश्वतस्य तु संशयात् ।
मनसा चान्यदाकाङ्क्षन् परं न प्रतिपद्यते ॥ ७८

ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः ।
तदाऽऽदर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥ ७९

प्रसृतैरिन्द्रियैर्दुःखी तैरेव नियतस्सुखी ।
तस्मादिन्द्रियचोरेभ्यो यच्छेदात्मानमात्मना ॥ ८०

इन्द्रियेभ्यो मनः पूर्वं बुद्धिः परतरा ततः ।
बुद्धेः परतरं ज्ञानं ज्ञानात् [1]सूक्ष्मतरं परम् ॥ ८१

1. ख—सूक्ष्मात् परं परम्

अव्यक्तात् प्रसूतं ज्ञानं ततो बुद्धिस्ततो मनः ।
मनश्श्रोत्रादिभिर्युक्तं शब्दादीन् साधु पश्यति ॥ ८२

यस्तांस्त्यजति शब्दादीन् सर्वांश्च व्यक्तयस्तथा ।
विमुञ्चत्याकृतिग्रामं तन्मुक्तोऽमृतमश्नुते ॥ ८३

उद्यन् हि सविता यद्वत् सृजते रश्मिमण्डलम् ।
स एवास्तमुपागच्छंस् तदेवात्मनि यच्छति ॥ ८४

अन्तरात्मा तथा देहम् आविश्येन्द्रियरश्मिभिः ।
प्राप्येन्द्रियगुणान् पञ्च सोऽस्तमावृत्य गच्छति ॥ ८५

प्रणीतं कर्मणा मार्गं नीयमानः पुनः पुनः ।
प्राप्नोत्ययं कर्मफलं प्रवृत्तं धर्ममाप्तवान् ॥ ८६

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ८७

बुद्धिः कर्मगुणैर्हीना यदा मनसि वर्तते ।
तदा सम्पद्यते ब्रह्म तत्रैव प्रलयं गतः ॥ ८८

अस्पर्शिनमश्रृण्वानम् अरसादमदर्शिनम् ।
अघ्राणमवितर्कं च सत्त्वं प्रविशते परम् ॥ ८९

अव्यक्तात् प्रसूतं ज्ञानं ततो बुद्धिस्ततो मनः ।
मनस्याकृतयो मग्ना मनस्त्वतिगतं मतिम् ॥ ९०

मतिस्त्वतिगतं ज्ञानं ज्ञानं त्वतिगतं महत् ।
नेन्द्रियैर्मनसस्सिद्धिर् न बुद्धिं बुध्यते मनः ॥ ९१

न बुद्धिर्बुध्यतेऽव्यक्तं [1]सूक्ष्मस्त्वेतानि पश्यति ॥* ९१॥

ज्ञानं ज्ञेयाभिनिर्वृत्तं विद्धि ज्ञानगुणं मनः ।
प्रज्ञाकरणसंयुक्ता ततो बुद्धिः प्रवर्तते ॥ ९२॥

यदा कर्मगुणोपेता बुद्धिर्मनसि वर्तते ।
तदा प्रज्ञायते ब्रह्म ध्यानयोगसमाधिना ॥ ९३॥

सेयं गुणवती बुद्धिर् गुणेष्वेवाभिवर्तते ।
अपरादपि निस्स्रौति गिरेश्शृङ्गादिवोदकम् ॥ ९४॥

यदा निर्गुणमाप्नोति ध्यानं मनसि पूर्वजम् ।
तदा प्रज्ञायते ब्रह्म निकषं निकषे यथा ॥ ९५॥

मनस्त्वसंहृतं बुद्ध्या हीन्द्रियार्थनिदर्शकम् ।
न समर्थं गुणापेक्षं निर्गुणस्य निदर्शने ॥ ९६॥

सर्वाण्येतानि संवार्य द्वाराणि मनसि स्थितः ।
मनस्येकाग्रतां कृत्वा तत्परं प्रतिपद्यते ॥ ९७॥

यदा महान्ति भूतानि निवर्तन्ते गुणक्षये ।
तदेन्द्रियाण्युपादाय बुद्धिर्मनसि वर्तते ॥ ९८॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. ख—सूक्ष्मं चैतानि; अ-क-घ—सूक्ष्माण्येतानि

यदा मनसि सा बुद्धिर् वर्ततेऽन्तरचारिणी ।
व्यवसायगुणोपेता तदा सम्पद्यते मनः ॥　　९९॥

गुणवद्भिर्गुणोपेतं यदा ध्यानगतं मनः ।
तदा सर्वान् गुणान् हित्वा निर्गुणं प्रतिपद्यते ॥　　१००॥

अव्यक्तस्येह विज्ञाने नास्ति तुल्यं निदर्शनम् ।
यत्र नास्ति पदन्यासः कस्तं विषयमाप्नुयात् ॥　　१०१॥

तपसा सानुमानेन गुणैर्जात्या श्रुतेन च ।
निनीषेत् तत्परं ब्रह्म [1]विशुद्धेनान्तरात्मना ॥　　१०२॥

गुणहीनो हि तं मार्गं बहिस्समनुवर्तते ।
गुणाभावात् प्रकृत्या च निस्तर्क्यं ज्ञेयसम्मितम् ॥　　१०३॥

नैर्गुण्याद्ब्रह्म चाप्नोति सगुणत्वान्निवर्तते ।
गुणे प्रसारिणी बुद्धिर् हुताशन इवेन्धने ॥　　१०४॥

यदा पञ्च वियुक्तानि इन्द्रियाणि स्वकर्मभिः ।
तदा तत्परमं ब्रह्म संयुक्तं प्रकृतेः परम् ॥　　१०५॥

एवं प्रकृतितस्सर्वे सम्भवन्तश्शरीरिणः ।
निवर्तन्ते निवृत्तौ च सर्गं नैवोपयान्ति च ॥　　१०६॥

पुरुषप्रकृतिर्बुद्धिर् विशेषाश्चेन्द्रियाणि च ।
अहङ्कारोऽभिमानश्च सम्भूतो भूतसंज्ञकः ॥　　१०७॥

---

1. घ—इतोऽर्धत्रयं नास्ति

एतस्याद्या प्रवृत्तिस्तु प्रधानात् सम्प्रवर्तते ।
द्वितीया मिथुनव्यक्तिम् अविशेषान्नियच्छति ॥ १०८॥

धर्मादुत्कृष्यते [1]श्रेयस् तथा धर्मोऽप्यधर्मतः ।
रागवान् प्रकृतिं ह्येति विरक्तो ज्ञानवान् भवेत्* ॥ १०९॥

यदि ते पञ्चभिः पञ्च मुक्तानि मनसा सह ।
अथ तद्द्रक्ष्यते ब्रह्म मणौ सूत्रमिवाहितम् ॥ ११०॥

तदेव च यदा सूत्रं सौवर्णे वर्तते पुनः ।
मुक्तास्वथ प्रवालेषु मृण्मये राजते तथा ॥ १११॥

तद्वद्गोषु मनुष्येषु तद्वद्धस्तिमृगादिषु ।
तद्वत् कीटपतङ्गेषु प्रसक्तात्मा स्वकर्मभिः ॥ ११२॥

येन येन शरीरेण यद्यत् कर्म करोत्ययम् ।
तेन तेन शरीरेण तत्तत् फलमुपाश्नुते ॥ ११३॥

यथा ह्येकरसा भूमिर् ओषध्यात्मानुसारिणी ।
तथा कर्मानुगा बुद्धिर् अन्तरात्माऽनुदर्शिनी ॥ ११४॥

ज्ञानपूर्वोद्भवा लिप्सा लिप्सा पूर्वाभिसन्धिता ।
अभिसन्धिपूर्वकं कर्म कर्मपूर्वं ततः फलम् ॥ ११५॥

---

1. ख—श्रेयस्तथा श्रेयोऽप्यसंमतः

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

फलं धर्मात्मकं विद्यात् कर्म ज्ञेयात्मकं तथा ।
ज्ञेयं ज्ञानात्मकं विद्याज् ज्ञानं सदसदात्मकम् ॥ ११६॥

ज्ञानानां च फलानां च ज्ञेयानां कर्मणां तथा ।
क्षयान्ते यत् फलं दिव्यं ज्ञानं ज्ञेये प्रतिष्ठितम् ॥ ११७॥

महद्धि परमं भूतं युक्ताः पश्यन्ति योगिनः ।
अबुधास्तं न पश्यन्ति ह्यात्मस्थं गुणबुद्धयः ॥ ११८॥

पृथिवीरूपतो रूपम् अपामिह महत्तरम् ।
अद्भ्यो महत्तरं तेजस् तेजसः पवनो महान् ॥ ११९॥

पवनाच्च महद्व्योम तस्मात् परतरं मनः ।
मनसो महती बुद्धिर् बुद्धेः कालो महान् स्मृतः ॥ १२०॥

कालात् स भगवान् विष्णुर् यस्य सर्वमिदं जगत् ।
नादिर्न मध्यं नैवान्तस् तस्य देवस्य विद्यते ॥ १२१॥

अनादित्वादमध्यत्वाद् अनन्तत्वाच्च सोऽव्ययः ।
अत्येति [1]सुखदुःखानि दुःखं ह्यन्तवदुच्यते ॥ १२२॥

तद्ब्रह्म परमं प्रोक्तं तद्धाम परमं पदम् ।
तद्गत्वा कालविषयाद् विमुक्ता मुक्तिमाश्रिताः ॥ १२३॥

गुणैस्तत्स्थैः प्रकाशन्ते निर्गुणत्वात् ततः परम् ।
निवृत्तिलक्षणो धर्मस् तथाऽऽनन्त्याय कल्पते ॥ १२४॥

1. ख-ग—सर्वं

ऋचो यजूंषि सामानि शरीराणि व्यपाश्रिताः ।
जिह्वाग्रेषु प्रवर्तन्ते यत्नसाध्याविनाशिनः ॥ १२५॥

न चैवमिष्यते ब्रह्म शरीराश्रयसम्भवम् ।
न यत्नसाध्यं तद्ब्रह्म नादिमध्यं न चान्तवत् ॥ १२६॥

ऋचामादिस्तथा साम्नां यजुषामादिरुच्यते ।
अन्तश्चादिमतां दृष्टो न चादिर्ब्रह्मणस्स्मृतः ॥ १२७॥

अनादित्वादमध्यत्वात् तदनन्तत्वाच्च सोऽव्ययः ।
अव्ययत्वाच्च निर्द्वन्द्वो द्वन्द्वाभावात्ततः परम् ॥ १२८॥

अदृष्टतोऽनुपायाच्चाप्यभिसन्धेश्च कर्मणः ।
न तन्मर्त्याः प्रपश्यन्ति येन गच्छन्ति [1]तत् परम् ॥ १२९॥

विषयेषु च संसर्गाच् छाश्वतस्य च संशयात् ।
मनसा चान्यदाकाङ्क्षन् परं न प्रतिपद्यते ॥ १३०॥

गुणान् यदिह पश्यन्ति तदिच्छन्त्यपरे जनाः ।
[2]परं नैवाभिकाङ्क्षन्ति निर्गुणत्वाद्गुणार्थिनः ॥ १३१॥

गुणैर्यस्त्ववरैर्युक्तः कथं विद्याद्गुणानिमान् ।
अनुमानाद्धि मन्तव्यं गुणैरवयवैः परम् ॥ १३२॥

सूक्ष्मेण मनसा विद्मो वाचा वक्तुं न शक्नुमः ।

1. अ-ग—तत् पदम्
2. ख—पुनर्नैवाभिपश्यन्ति

मनो हि मनसा ग्राह्यं दर्शनेन च दर्शनम् ॥ १३३॥

ज्ञानेन निर्मलीकृत्य बुद्धिं बुद्ध्या तथा मनः ।
मनसा चेन्द्रियग्रामम् अक्षरं प्रतिपद्यते ॥ १३४॥

बुद्धिप्रहीणो मनसा समृद्धस्
तथाऽनिराशीर्गुणतामुपैति ।
परं त्यजन्त्येव विलोभ्यमाना
हुताशनं वायुरिवेन्धनस्थम् ॥ १३५॥

गुणादाने विप्रयोगे च तेषां
मनस्सदा विद्धि परावराभ्याम् ।
अनेनैव विधिना सम्प्रवृत्तो
गुणादाने ब्रह्म शरीरमेति ॥ १३६॥

अव्यक्तात्मा पुरुषो व्यक्तकर्मा
सोऽव्यक्तत्वं गच्छति ह्यन्तकाले ।
तैरेवायं चेन्द्रियैर्वर्धमानैर्
ग्लायद्भिर्वा वर्तते कर्मरूपः ॥ १३७॥

सर्वैरयं चेन्द्रियैस्सम्प्रयुक्तो
देहं प्राप्तः पञ्चभूताश्रयस्स्यात् ।
न सामर्थ्याद्गच्छति कर्मणेह
हीनस्तेन परमेणाव्ययेन ॥ १३८॥

पृथ्व्या नरः पश्यति नान्तमस्या
ह्यन्तश्चास्या भविता चेति विद्धि ।
परं न यातीह विलोभ्यमानो
यथा प्लवं वायुरिवार्णवस्थम् ॥ १३९॥

दिवाकरो गुणमुपलभ्य निर्गुणो
यथा भवेद्व्यपगतरश्मिमण्डलः ।
तथा ह्यसौ मुनिरिव निर्विशेषवान्
स निर्गुणं प्रविशति ब्रह्म चाव्ययम् ॥ १४०॥

[1]अनागसां सुकृतिमतां परां गतिं
स्वयम्भुवं प्रभवनिधानमव्ययम् ।
सनातनं यदमृतमक्षरं ध्रुवं
निचाय्य तं शममममृतत्वमश्नुते ॥ १४१॥

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
[अस्मिन्नध्याये १४१॥ श्लोकाः]

---

1. अ-क—नास्तीदमर्धम्

## ॥ नवत्यधिकशततमोऽध्यायः ॥*††



भीष्मेण युधिष्ठिरं प्रति निबन्धनेन स्वमातरं प्रति अरण्यत्वेन रूपितस्य संसारचक्रस्य विवरणम् ॥ १ ॥ तथा नारदसावित्रीसंवादः ॥ २ ॥ नारदेन तपसा श्रीभगवदपरोक्षीकरणम् ॥ ३ ॥

युधिष्ठिरः—

पितामह महाप्राज्ञ दुःखशोकसमाकुले ।
संसारचक्रे लोकानां निर्वेदो नास्ति किन्विदम् ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
निबन्धनस्य संवादं भोगवत्या नृपोत्तम ॥ २

मुनिं निबन्धनं शुष्कं धमनीयाकृतिं तथा ।
निरारम्भं निरालम्बम् असज्जन्तं च कर्मणि ॥ ३
पुत्रं दृष्ट्वाऽप्युवाचार्ता माता भोगवती तदा ॥ ३॥

भोगवती—

उत्तिष्ठ मूढ किं शेषे निरपेक्षस्सुहृज्जनैः ।
निरालम्बो धनोपाये पैतृकं तव किं धनम् ॥ ४॥

निबन्धनः—

पैतृकं मे महन्मातस् सर्वदुःखालयं त्विह ।
अस्त्येतत्तद्विघाताय यतिष्ये तत्र मा शुचः ॥ ५॥

*†† कृष्णाचार्यमुद्रितकोशस्थ - ध-कोशपाठानुसारेण अयमध्यायो मुद्रितः

इदं शरीरमत्युग्रं पित्रा दत्तमसंशयम् ।
तमेव पितरं गत्वा धनं तिष्ठति शाश्वतम् ॥ ६॥

कश्चिन्महति संसारे वर्तमानो धनेच्छया ।
वनदुर्गमभिप्राप्तो महत् क्रव्यादसङ्कुलम् ॥ ७॥

सिंहव्याघ्रगजाकारैर् अतिघोरैर्महाशनैः ।
समन्तात् सुपरिक्षिप्तं स दृष्ट्वा व्यथते पुमान् ॥ ८॥

स तद्वनं ह्यनुचरन् विप्रधावन्नितस्ततः ।
वीक्षमाणो दिशस्सर्वाश् शरणार्थं प्रधावति ॥ ९॥

अथापश्यद्वनं रूढं समन्ताद्वागुरावृतम् ।
वनमध्ये च तत्रासीद् उदपानस्समावृतः ॥ १०॥

वल्लिभिस्तृणसञ्छिन्नैर् गूढाभिरभिसंवृतः ।
स पपात द्विजस्तत्र विजने सलिलाशये ॥ ११॥

विलग्नश्चाभवत्तस्मिँल्लतासन्तानसङ्कुले ।
बाहुभ्यां सम्परिष्वक्तास् तया परमसत्त्वया ॥ १२॥

स तथा लम्बते तत्र ऊर्ध्वपादो ह्यधश्शिराः ।
अधस्तत्रैव जातश्च जम्बूवृक्षस्सुदुस्तरः ॥ १३॥

कूपस्य तस्य वेलाया अपश्यत् सुमहाफलम् ।
वृक्षं बहुविधं व्योमं वल्लीपुष्पसमाकुलम् ॥ १४॥

नानारूपा मधुकरास् तस्मिन् वृक्षेऽभवन् किल ।

तेषां मधूनां बहुधा धारा प्रववृते तदा ॥　　१५॥

विलम्बमानस्स पुमान् धारां पिबति सर्वदा ।
न तस्य तृष्णा विरता पीयमानस्य सङ्कटे ॥　　१६॥

परीप्सति च तां नित्यम् अतृप्तस्स पुनः पुनः ।
एवं स वसते तत्र दुःखि दुःखी पुनः पुनः ॥　　१७॥

मया तु तद्धनं देयं तव दास्यामि चेच्छसि ॥　　१८

भीष्मः—

तस्य च प्रार्थितस्सोऽथ दत्त्वा मुक्तिमवाप सः ।
स च त्यक्त्वाऽर्थसङ्कल्पं जगाम परमां गतिम् ॥　　१९

एवं संसारचक्रस्य स्वरूपज्ञा नृपोत्तम ।
परं वैराग्यमागम्य गच्छन्ति परमं पदम् ॥　　२०

युधिष्ठिरः—

एवं संसारचक्रस्य स्वरूपं विदितं न मे ।
पैतृकं तु धनं प्रोक्तं किं तद्विद्वन् महात्मना ॥　　२१

कान्तारमिति किं प्रोक्तं को हस्ती स तु कूपकः ।
किंसंज्ञिको महावृक्षो मधु वाऽपि पितामह ॥　　२२

एतं मे संशयं विद्धि धनशब्दं किमुच्यते ।
कथं लब्धं धनं तेन तथा च किमिदं त्विह ॥　　२३

भीष्मः—

उपाख्यानमिदं सर्वं मोक्षविद्भिरुदाहृतम् ।

सुमतिं विन्दते येन बन्धनाशश्च भारत ॥ २४

एतदुक्तं हि कान्तारं महान् संसार एव सः ।
ये ते प्रतिष्ठिता व्याला व्याधयस्ते प्रकीर्तिताः ॥ २५

या सा नारी महाघोरा वर्णरूपविनाशिनी ।
तामाहुश्च जरां प्राज्ञाः परिष्वक्तं यया जगत् ॥ २६

यस्तत्र कूपे वसते महाहिः काल एव सः ।
यो वृक्षस्स च मृत्युर्हि स्वकृतं तस्य तत् फलम् ॥ २७

ये तु कृष्णास्सिता राजन् मूषिका रात्र्यहानि वै ॥ २७॥

द्विषट्कपदसंयुक्तो यो हस्ती षण्मुखाकृतिः ।
स च संवत्सरः प्रोक्तः पाशमासर्तवो मुखाः ॥ २८॥

एतत् संसारचक्रस्य स्वरूपं व्याहृतं मया ।
एवं लब्धधनं राजंस् तत्स्वरूपं विनाशय ॥ २९॥

एतज्ज्ञात्वा तु सा राजन् परं वैराग्यमास्थिता ।
यथोक्तविधिना भूयः परं पदमवाप सः ॥ ३०॥

धत्ते धारयते चैव एतस्मात् कारणाद्धनम् ।
तद्गच्छ चामृतं शुद्धं हिरण्यममृतं तपः ॥ ३१॥

तत्स्वरूपो महादेवः कृष्णो देवकिनन्दनः ।
तस्य प्रसादाद्दुःखस्य नाशं प्राप्स्यसि मानद ॥ ३२॥

एकः कर्ता स कृष्णश्च ज्ञानिनां परमा गतिः ॥ ३३

इदमाश्रित्य देवेन्द्रो देवा रुद्रास्तथाऽश्विनौ ।
स्वे स्वे पदे विविशिरे भुक्तिमुक्तिविदो जनाः ॥ ३४

भूतानामन्तरात्माऽसौ स नित्यपदसंवृतः ।
श्रूयतामस्य सद्भावस् सम्यग्ज्ञानं यथा तव ॥ ३५

भवेदेतन्निबोध त्वं नारदाय पुरा हरिः ।
दर्शयित्वाऽऽत्मनो रूपं यदवोचत् स्वयं विभुः ॥ ३६

पुरा देवऋषिश्श्रीमान् नारदः परमार्थवान् ।
चचार पृथिवीं कृत्स्नां तीर्थान्यनुचरन् प्रभुः ॥ ३७

हिमवत्पादमाश्रित्य विचार्य च पुनः पुनः ।
स ददर्श ह्रदं तत्र पद्मोत्पलसमाकुलम् ॥ ३८

ददर्श कन्यां तत्तीरे सर्वाभरणभूषिताम् ।
शोभमानां श्रिया राजन् क्रीडन्तीमुत्पलैस्तथा ॥ ३९

सा महात्मानमालोक्य नारदेत्याह भामिनी ।
तस्यास्समीपमासाद्य तस्थौ विस्मितमानसः ॥ ४०

वीक्षमाणं तमाज्ञाय सा कन्या चारुवासिनी ।
विजजृम्भे महाभागा स्मयमाना पुनः पुनः ॥ ४१

तस्मात् समभवद्वक्त्रात् पुरुषाकृतिसंयुतः ।
रत्नबिन्दुचिताङ्गस्तु सर्वाभरणभूषितः ॥ ४२

आदित्यसदृशाकारश् शिरसा धारयन् मणिम् ।

पुनरेव तदाकारसदृशस्समजायत ॥ ४३

तृतीयस्तु महाराज विविधाभरणैर्युतः ।
प्रदक्षिणं तु तां कृत्वा विविधध्वनयस्तु ताम् ॥ ४४
ततस्सर्वेण विप्रर्षिः कन्यां पप्रच्छ तां शुभाम् ॥ ४४॥

नारदः—

का त्वं परमकल्याणि पद्मेन्दुसदृशानने ।
न जाने त्वां महादेवि ब्रूहि सत्यमनिन्दिते ॥ ४५॥

कन्या—

सावित्री नाम विप्रर्षे शृणु भद्रं तवास्तु वै ।
किं करिष्यामि तद्ब्रूहि तव यच्चेतसि स्थितम् ॥ ४६॥

नारदः—

अभिवादये त्वां सावित्रि कृतार्थोऽहमनिन्दिते ।
एतं मे संशयं देवि वक्तुमर्हसि शोभने ॥ ४७॥

यस्तु वै प्रथमोत्पन्नः कोऽसौ स पुरुषाकृतिः ।
बिन्दवस्तु महादेवि मूर्ध्नि ज्योतिर्मयाकृतिः ॥ ४८॥

कन्या—

अग्रजः प्रथमोत्पन्नो यजुर्वेदस्तथाऽपरः ।
तृतीयस्सामवेदस्तु संशयो व्येतु ते मुने ॥ ४९॥

वेदाश्च बिन्दुसंयुक्ता यज्ञस्य फलसंश्रिताः ।
यत्तदृष्टं महज्ज्योतिर् ज्योतिरित्युच्यते बुधैः ॥ ५०॥

भीष्मः

ऋषे ज्ञेयं मया चाऽपीत्युक्त्वा चान्तरधीयत ॥ ५१

ततस्स विस्मयाविष्टो नारदः पुरुषर्षभ ।

ध्यानयुक्तस्स तु चिरं न बुबोध महामतिः ॥ ५२

ततस्स्नात्वा महातेजा वाग्यतो नियतेन्द्रियः ।

तुष्टाव पुरुषव्याघ्रो जिज्ञासुश्च तदद्भुतम् ॥ ५३

ततो वर्षशते पूर्णे भगवाँल्लोकभावनः ।

प्रादुश्चकार विश्वात्मा ऋषेः परमसौहृदात् ॥ ५४

तमागतं जगन्नाथं सर्वकारणकारणम् ।

अखिलामरमौल्यङ्घ्रिरुक्मारुणपदद्वयम् ॥ ५५

वैनतेयपदस्पर्शकिणशोभितजानुकम् ।

पीताम्बरलसत्काञ्चीदामबद्धकटीतटम् ॥ ५६

श्रीवत्सवक्षसं चारुमणिकौस्तुभकन्धरम् ।

मन्दस्मितमुखाम्भोजं चलदायतलोचनम् ॥ ५७

नम्रचापानुकरणनम्रभ्रूयुगशोभितम् ।

नानारत्नमणीवज्रस्फुरन्मकरकुण्डलम् ॥ ५८

इन्द्रनीलनिभाभं तं केयूरमकुटोज्ज्वलम् ।

देवैरिन्द्रपुरोगैश्च ऋषिसङ्घैरभिष्टुतम् ॥ ५९

नारदो जयशब्देन ववन्दे शिरसा हरिम् ॥ ५९॥

ततस्स भगवाञ् श्रीमान् मेघगम्भीरया गिरा ।
प्राहेशस्सर्वभूतानां नारदं पतितं क्षितौ ॥ ६०॥

श्रीभगवान्—
भद्रमस्तु ऋषे तुभ्यं वरं वरय सुव्रत ।
यत्ते मनसि सुव्यक्तम् अस्ति च प्रददामि तत् ॥ ६१॥

भीष्मः—
स चेमं जयशब्देन प्रसीदेत्यातुरो मुनिः ।
प्रोवाच हृदि संरूढं शङ्खचक्रगदाधरम् ॥ ६२॥

नारदः—
विवक्षितं जगन्नाथ मया ज्ञातं त्वयाऽच्युत ।
तत् प्रसीद हृषीकेश श्रोतुमिच्छामि तद्वरे ॥ ६३॥

भीष्मः—
ततस्स्मयन् महाविष्णुर् अभ्यभाषत नारदम् ॥ ६४

श्रीभगवान्—
यद्दृष्टं मम रूपं तु वेदानां शिरसि त्वया ।
निर्द्वन्द्वा निरहङ्काराश् शुचयश्शुद्धलोचनाः ॥ ६५
तं मां पश्यन्ति सततं तान् पृच्छ यदिहेच्छसि ॥ ६५॥
ये योगिनो महाप्राज्ञा मदंशा ये व्यवस्थिताः ।
तेषां प्रसादं देवर्षे मत्प्रसादमवैहि तत् ॥ ६६॥

भीष्मः—
इत्युक्त्वा स जगामाथ भगवान् भूतभावनः ।
तस्माद्व्रज हृषीकेशं कृष्णं देवकिनन्दनम् ॥ ६७॥

एतमाराध्य गोविन्दं गता मुक्तिं महर्षयः ।
एष कर्ता विकर्ता च सर्वकारणकारणम् ॥ ६८॥

मयाऽप्येतच्छ्रुतं राजन् नारदात्तु निबोध तत् ।
स्वयमेव समाचष्ट नारदो भगवान् मुनिः ॥ ६९॥

समस्तसंसारविघातकारणं
भजन्ति ये विष्णुमनन्यमानसाः ।
ते यान्ति सायुज्यमतीव दुर्लभम्
इतीव नित्यं हृदि वर्णयन्ति ॥ ७०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि नवत्यधिकशततमोऽध्यायः ॥ १९० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
[ अस्मिन्नध्याये ७०॥ श्लोकाः ]

## ॥ एकनवत्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति भूतादिजगत्सृष्टिप्रकारनिरूपणम् ॥ १ ॥ तथा नारदोदितनृसिंहादिभगवत्प्रादुर्भावचरित्रनिरूपणपूर्वकं श्रीकृष्णस्य सर्वोत्तमत्वप्रतिपादनेन तद्ध्यानविधानम् ॥ २ ॥

युधिष्ठिरः—

पितामह महाप्राज्ञ पुण्डरीकाक्षमच्युतम् ।
कर्तारमकृतं विष्णुं भूतानां प्रभवाप्ययम् ॥ १

नारायणं हृषीकेशं गोविन्दमपराजितम् ।
तत्त्वेन भरतश्रेष्ठ श्रोतुमिच्छामि केशवम् ॥ २

भीष्मः—

श्रुतोऽयमर्थो रामस्य जामदग्न्यस्य जल्पतः ।
नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च ॥ ३

असितो देवलस्तात वाल्मीकिश्च महातपाः ।
मार्कण्डेयश्च गोविन्दं कथयन्त्यद्भुतं महत् ॥ ४

केशवो भरतश्रेष्ठ भगवानीश्वरः प्रभुः ।
पुरुषस्सर्वमित्येव श्रूयते बहुधा विभुः ॥ ५

किं तु यानि विदुर्लोके ब्राह्मणाश्शार्ङ्गधन्वनि ।
महात्मनि महाबाहो शृणु तानि युधिष्ठिर ॥ ६

यानि चाहुर् मनुष्येन्द्र ये पुराणविदो जनाः ।
श्रुत्वा सर्वाणि गोविन्दे कीर्तयिष्यामि तान्यहम् ॥ ७

महाभूतानि भूतात्मा महात्मा पुरुषोत्तमः ।
[1]वायुर्ज्योतिस्तथा चापः खं च गां चान्वकल्पयत् ॥ ८

सृष्ट्वा महान्ति भूतानि सर्वभूतेश्वरः प्रभुः ।
अप्स्वेव शयनं चक्रे महात्मा पुरुषोत्तमः ॥ ९

सर्वतेजोमयस्तस्मिञ् शयानश्शयने शुभे ।

1. ब—अर्धेतयं नास्ति

सोऽग्रजं सर्वभूतानां सङ्कर्षणमचिन्तयत् ॥　　१०

आश्रयं सर्वभूतानां मनसेतीह शुश्रुमः ।
स धारयति भूतात्मा उभे भूतभविष्यती ॥　　११

[1]प्रद्युम्नमसृजत्तस्मात् सर्वतेजः प्रकाशकम् ।
अनिरुद्धस्ततो जज्ञे सर्वशक्तिर्महाद्युतिः ॥　　१२

अप्सु व्योमगतश्श्रीमान् योगनिद्रामुपेयिवान् ॥　　१२॥

तत्र तस्मिन् महाभागो प्रादुर्भूते महात्मनि ।
[2]भास्करप्रतिमं दिव्यं नाभ्यां पद्ममजायत ॥　　१३॥

स तत्र भगवान् दिव्यः पुष्करे भासयन् दिशः ।
ब्रह्मा समभवत्तात सर्वभूतपितामहः ॥　　१४॥

ततस्तस्मिन् महाबाहो प्रादुर्भूते महात्मनि ।
तमसः पूर्वजो जज्ञे मधुर्नाम महासुरः ॥　　१५॥

तमुग्रमुग्रकर्माणम् उग्रां बुद्धिं समास्थितम् ।
ब्रह्मणोऽपचितिं कुर्वञ् जघान पुरुषोत्तमः ॥　　१६॥

[3]तदा प्रभृति तं सर्वे देवदानवमानवाः ।
मधुसूदन इत्याहुर् ऋषभं सर्वसात्त्वताम् ॥　　१७॥

ब्रह्मा तु ससृजे पुत्रान् मानसान् दक्षसप्तमान् ।

---

1. ख—अर्धत्रयं नास्ति　　2. ख—अर्धचतुष्टयं नास्ति
3. ख-ग—तस्य तात वधात्सर्वे

मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ॥ १८॥

मरीचिः काश्यपं तात पुत्रमग्रजमग्रजः ।
मानसं जनयामास तैजसं ब्रह्मवित्तमम् ॥ १९॥

अङ्गुष्ठादसृजद् ब्रह्मा मरीचेरपि पूर्वजम् ।
सोऽभवद्भरतश्रेष्ठ दक्षो नाम प्रजापतिः ॥ २०॥

तस्य पूर्वमजायन्त दश तिस्रश्च भारत ।
प्रजापतेर्दुहितरस् तासां ज्येष्ठाऽभवद्दितिः ॥ २१॥

सर्वधर्मविशेषज्ञः पुण्यकीर्तिर्महायशाः ।
मारीचः काश्यपस्तात सर्वासामभवत् पतिः ॥ २२॥

उत्पाद्य तु महाभागस् [1]ततस्त्वरजसो दश ।
ददौ धर्माय धर्मज्ञ दक्ष एव प्रजापतिः ॥ २३॥

धर्मस्य वसवः पुत्रा रुद्राश्चामिततेजसः ।
विश्वे देवाश्च साध्याश्च मरुतश्चैव भारत ॥ २४॥

अपरास्तु यवीयस्यस् ताभ्योऽन्यास्सप्तविंशतिः ।
सोमस्तासां महाभागस् सर्वासामभवत् पतिः ॥ २५॥

इतरास्तु व्यजायन्त गन्धर्वांस्तुरगान् द्विजान् ।
गावः किम्पुरुषान् मत्स्यान् [2]द्विरदांश्च वनस्पतीन् ॥ २६॥

आदित्यानदितिर्जज्ञे देवश्रेष्ठान् महाबलान् ।

---

1. ख-ग—तासामवरजा 2. ख—उद्भिदांश्च

तेषां विष्णुर्वामनोऽ[1]भूद् गोविन्दश्चाभवत् प्रभुः ॥ २७॥

तस्य विक्रमणाच्चापि देवानां श्रीरवर्धत ।
दानवाश्च पराभूता दैतेयी चासुरी प्रजा ॥ २८॥

विप्रचित्तिप्रधानांश्च दानवानसृजद्दनुः ।
दितिस्तु सर्वानसुरान् महासत्त्वान् व्यजायत ॥ २९॥

अहोरात्रं च कालं च तथर्तून् मधुसूदनः ।
पूर्वाह्णं चापराह्णं च सर्वमेवान्वकल्पयत् ॥ ३०॥

बुध्वापस्सोऽसृजन्मेघांस् तथा स्थावरजङ्गमान् ।
पृथिवीं सोऽसृजद्विश्वां सहितां भूरितेजसा ॥ ३१॥

ततः कृष्णो महाबाहुः पुनरेव युधिष्ठिर ।
ब्राह्मणानां शतं श्रेष्ठं मुखादभ्यसृजत् प्रभुः ॥ ३२॥

बाहुभ्यां क्षत्रियशतं वैश्यानामूरुतश्शतम् ।
पद्भ्यां शूद्रशतं चैव केशवो भरतर्षभ ॥ ३३॥

स एवं चतुरो वर्णान् समुत्पाद्य महातपाः ।
अध्यक्षं सर्वभूतानां धातारमकरोत् प्रभुः ॥ ३४॥

[2]वेदविद्याविधातारं ब्रह्माणममितद्युतिम् ।
भूतमातृगणाध्यक्षं विरूपाक्षं च सोऽसृजत् ॥ ३५॥

---

1. ख—ऽभूदजघन्यो जघन्यजः

2. ख—अर्धषट्कं नास्ति

अध्यक्षं पुण्यपापानां पितॄणां समवर्तिनम् ।
असृजत् सर्वभूतात्मा निधीशं च धनेश्वरम् ॥ ३६॥

यादसामसृजन्नाथं वरुणं च जलेश्वरम् ।
वासवं सर्वदेवानाम् अध्यक्षमकरोत् प्रभुः ॥ ३७॥

यावद्यावदभूच्छ्रद्धा देहं धारयितुं नृणाम् ।
तावत्तावदजीवंस्ते नासीद्यमकृतं भयम् ॥ ३८॥

न तेषां मैथुनो धर्मो बभूव भरतर्षभ ।
सङ्कल्पादेव चैतेषां गर्भस्समुपपद्यते ॥ ३९॥

ततस्त्रेतायुगे काले संस्पर्शाज्जायते प्रजा ।
न ह्यभून्मैथुनो धर्मस् तेषामपि जनाधिप ॥ ४०॥

[1]द्वापरे मैथुनो धर्मः प्रजानामभवन्नृप ।
तथा कलियुगे राजन् द्वन्द्वमापेदिरे जनाः ॥ ४१॥

एष भूतपतिस्तात साध्यक्षश्च प्रकीर्तितः ।
निरध्यक्षांश्च कौन्तेय कीर्तयिष्यामि तानपि ॥ ४२॥

दक्षिणापथजन्मानस् सर्वे करभृतस्तव ।
[2]आन्ध्राः पुलिन्दाश्शबराश् चूचुपा मद्रकैस्सह ॥ ४३॥

उत्तरापथजन्मानः कीर्तयिष्यामि तानपि ॥ ४४

ये तु काम्भोजगान्धाराः किराता बर्बरैस्सह ।

---

1. अ—नास्तीदमर्धम्  2. ख—पौण्ड्राः

एते पापरतास्तात चरन्ति पृथिवीमिमाम् ॥　　४५

बकश्वकाकगृध्राणां सधर्माणो नराधिप ।
नैते कृतयुगे तात चरन्ति पृथिवीमिमाम् ॥　　४६
त्रेताप्रभृति वर्धन्ते ते जना भरतर्षभ ॥　　४६॥

ततस्तस्मिन् महाघोरे सन्ध्याकाले युगान्तरे ।
राजानस्समसज्जन्त समासाद्येतरेतरम् ॥　　४७॥

एवमेष कुरुश्रेष्ठ प्रादुर्भावो महात्मनः ।
एवं देवर्षिराचष्ट नारदस्सर्वलोकदृक् ॥　　४८॥

नारदोऽप्यथ कृष्णस्य परं मेने नराधिप ।
शाश्वतत्वं महाभाग यथावद्भरतर्षभ ॥　　४९॥

एवमेष महाबाहुः केशवस्सत्यविक्रमः ।
अचिन्त्यः पुण्डरीकाक्षो नैष केवलमानुषः ॥　　५०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
[ अस्मिन्नध्याये ५०॥ श्लोकाः ]

---

## ॥ द्विनवत्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति मरीच्यादिब्रह्मपुत्रवंशकथनपूर्वकं प्राच्यादिदिग्गतमहर्षिनामनिर्देशः ॥

युधिष्ठिरः—

के पूर्वमासन् पतयः प्रजानां भरतर्षभ ।
के चर्षयो महाभागा दिक्षु प्रत्येकशस्स्थिताः ॥ १

भीष्मः—

श्रूयतां भरतश्रेष्ठ यन्मां त्वं परिपृच्छसि ।
प्रजानां पतयो ये च दिक्षु प्रत्येकशस्स्थिताः ॥ २

एकस्स्वयम्भूर्भगवान् आद्यो ब्रह्मा सनातनः ।
ब्रह्मणस्सप्त पुत्रा वै महात्मानस्स्वयम्भुवः ॥ ३

मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महाभागस् सदृशो वै स्वयम्भुवा ॥ ४

सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः ।
[1]अत ऊर्ध्वं प्रवक्ष्यामि सर्वानेव प्रजापतीन् ॥ ५

अत्रिवंशसमुत्पन्नो ब्रह्मयोनिस्सनातनः ।
प्राचीनबर्हिर्भगवांस् तस्मात् प्राचेतसो दश ॥ ६

1. ख—अर्धत्रयं नास्ति

दशानां तनयस्त्वेको दक्षो नाम प्रजापतिः ।
[1]तस्य द्वे नामनी लोके दक्षः क इति चोच्यते ॥ ७

मरीचेः काश्यपः पुत्रस् तस्य द्वे नामनी स्मृते ।
अरिष्टनेमिरित्येकं काश्यपेत्यपरं विदुः ॥ ८

[2]अङ्गश्च पौरवश्श्रीमान् राजा भौमश्च वीर्यवान् ।
सहस्रं यश्च दिव्यानां युगानां पर्युपासिता ॥ ९

अर्यमा चैव भगवान् ये चान्ये तनया विभो ।
एते प्रदेशाः कथिता भुवनानां प्रभावनाः ॥ १०

शशबिन्दोस्तु भार्याणां सहस्राणि दशाच्युत ।
एकैकस्यां सहस्रं तु तनयानामभूत्तदा ॥ ११

एवं शतसहस्राणि दश तस्य महात्मनः ।
पुत्राणां च न ते किञ्चिद् इच्छन्त्यन्यं प्रजापतिम् ॥ १२

प्रजामाचक्षते विप्राः पुराणाश्शाशबिन्दवीम् ।
स वृष्णिवंशप्रभवो महावंशः प्रजापतेः ॥ १३

एते प्रजानां पतयस् समुद्दिष्टा यशस्विनः ॥ १३॥

शशबिन्दुस्तु राजर्षिर् महायोगी महामनाः ।
अध्यात्मवित् सहस्राणां भार्याणां दशमध्यगः ॥ १४॥

---

1. क-घ—तस्मिन्; ख—कस्य
2. ख—अङ्गश्चैवौरसश्श्रीमान् राजा भोजश्च

स योगी योगमापन्नस् ततस्सायुज्यतां गतः ॥ १५

अतः परं प्रवक्ष्यामि देवांस्त्रिभुवनेश्वरान् ॥ १५॥

भगोऽशश्चार्यमा चैव मित्रोऽथ वरुणस्तथा ।
सविता चैव धाता च विवस्वांश्च महाबलः ॥ १६॥

त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते ।
त एते द्वादशादित्याः कश्यपस्यात्मसम्भवाः ॥ १७॥

नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनावपि ।
मार्तण्डस्यात्मजावेतावष्टमस्य प्रजापतेः ॥ १८॥

त्वष्टुश्चैवात्मजश्श्रीमान् विश्वरूपो महायशाः ।
अजैकपादहिर्बुध्न्यो विरूपाक्षोऽथ रैवतः ॥ १९॥

हरश्च बहुरूपश्च त्र्यम्बकश्च [1]सुरेश्वरः ।
सावित्रश्च जयन्तश्च पिनाकी चापराजितः ॥ २०॥

[2]एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः ।
पूर्वमेव महाभागा वसवोऽष्टौ प्रकीर्तिताः ॥ २१॥

एत एवंविधा देवा [3]धर्मस्यैव प्रजापतेः ।
ते च [4]पूर्वं सुराश्चेति द्विविधाः पितरस्स्मृताः ॥ २२॥

शीलयौवनिनस्त्वन्ये तथाऽन्ये सिद्धसाध्ययोः ।

1. ग-घ—महेश्वरः 2. ख—नास्तीदमर्धम्
3. ख—मनोरेव 4. ख-ग—पूर्वो

ऋभवो मरुतश्चैव देवानां चोदितो गणः ॥ २३॥

एवमेते समाम्नाता विश्वेदेवास्तथाऽश्विनौ ।
आदित्याः क्षत्रियास्तेषां विशस्तु मरुतस्तथा ॥ २४॥

अश्विनौ तु मतौ शूद्रौ तपस्युग्रे समाहितौ ।
स्मृतास्त्वङ्गिरसो देवा ब्राह्मणा इति निश्चयः ॥ २५॥

इत्येतत् सर्वदेवानां चातुर्वर्ण्यं प्रकीर्तितम् ॥ २६

एतान् वै प्रातरुत्थाय देवान् यस्तु प्रकीर्तयेत् ।
स्वजादन्यकृताच्चैव सर्वपापात् प्रमुच्यते ॥ २७

यवक्रीतोऽथ रैभ्यश्च अर्वावसुपरावसू ।
औशिजश्चैव कक्षीवान् नीलश्चाङ्गिरसस्सुताः ॥ २८

ऋषिर्मेधातिथेः पुत्रः कण्वो बर्हिषदस्तथा ।
त्रैलोक्यभावनाश्चाथ प्राच्यां सप्तर्षयस्स्मृताः ॥ २९

[1]उन्मुचो विमुचश्चैव स्वस्त्यात्रेयश्च वीर्यवान् ।
[2]प्रमुखश्चेध्मवाहश्च भगवान् सुदृढव्रतः ॥ ३०

मित्रावरुणयोः पुत्रस् तथाऽगस्त्यः प्रतापवान् ।
इत्येते ऋषयो नित्यम् आश्रिता दक्षिणां दिशम् ॥ ३१

[3]दृषद्गुः कवषो [4]रैभ्यः परिव्याधश्च वीर्यवान् ।

---

1. ख—उन्मुखो विमुखश्चैव
2. ख—प्रमुचश्चोर्ध्वबाहुश्च
3. ख—रुशङ्कुः
4. ख-घ—धौम्यः

एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः ॥ ३२

अत्रेः पुत्रश्च [1]दुर्वासास् तथा सारस्वतः प्रभुः ।
एते चैव महात्मानः पश्चिमामाश्रिता दिशम् ॥ ३३

[2]अत्रिश्चैव वसिष्ठश्च काश्यपश्च महानृषिः ।
गौतमस्स भरद्वाजो विश्वामित्रोऽथ कौशिकः ॥ ३४

तथैव पुत्रो भगवान् ऋचीकस्य महात्मनः ।
जमदग्निश्च सप्तैते उदीचीमाश्रिता दिशम् ॥ ३५

एते प्रतिदिशं सर्वे कीर्तितास्तिग्मतेजसः ।
साक्षिभूता महात्मानो भुवनानां प्रभावनाः ॥ ३६

एवमेते महात्मानस् स्थिताः प्रत्येकशो दिशः ।
एतेषां कीर्तनं कृत्वा सर्वपापैः प्रमुच्यते ॥ ३७

यस्यां यस्यां दिशि ह्येते तां दिशं शरणं गतः ।
मुच्यते सर्वपापेभ्यस् स्वस्तिमांश्च गृहं व्रजेत् ॥ ३८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
[ अस्मिन्नध्याये ३८ श्लोकाः ]

---

1. ख—भगवान् 2. ख—आत्रेयश्च

## ॥ त्रिनवत्यधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति हरेर्वराहावतारनिरूपणम् ॥



युधिष्ठिरः—

पितामह महाप्राज्ञ युधि सत्यपराक्रम ।
श्रोतुमिच्छामि कात्स्र्न्येन कृष्णमव्ययमीश्वरम् ॥ १

यच्चास्य तेजस्सुमहद् यच्च कर्म पुरातनम् ।
तन्मे सर्वं यथातत्त्वं ब्रूहि त्वं पुरुषर्षभ ॥ २

तिर्यग्योनिगतं रूपं कथं धारितवान् हरिः ।
केन कार्यविसर्गेण [1]तन्मे ब्रूहि पितामह ॥ ३

भीष्मः—

पुराऽहं मृगयां यातो मार्कण्डेयाश्रमे स्थितः ।
तत्रापश्यं मुनिगणान् समासीनान् सहस्रशः ॥ ४

ततस्ते मधुपर्केण पूजां चक्रुरथो मयि ।
प्रतिगृह्य तु तां पूजां प्रत्यनन्दमृषीनहम् ॥ ५

कथैषा कथिता तत्र काश्यपेन महर्षिणा ।
मनःप्रह्लादिनीं दिव्यां तामिहैकमनाश्शृणु ॥ ६

1. ख—तदाख्याहि पितामह

काश्यपः—

[1]धर्मो हि भगवान् विष्णुर् वराहो यज्ञरूपधृक् ।
तन्मयश्च जगत् सर्वम् आत्मा सर्वस्य चात्मवान् ॥ ७

पुरा दानवमुख्या हि क्रोधलोभसमन्विताः ।
बलेन मत्ताश्शतशो नरकाद्या महासुराः ॥ ८

तथैव चान्ये बहवो दानवा युद्धदुर्मदाः ।
न सहन्ते स्म देवानां समृद्धिं तामनुत्तमाम् ॥ ९

दानवैरर्द्यमानास्तु देवा देवर्षयस्तथा ।
न शर्म लेभिरे राजन् क्लिश्यमानास्सहस्रशः ॥ १०

पृथिवीं चार्तरूपां ते समपश्यन् दिवौकसः ॥ १०॥

दानवैरभिसङ्कीर्णां घोररूपैर्महाबलैः ।
भारार्तामपकृष्टां च दुःखितां [2]शान्तिमिच्छतीम् ॥ ११॥

अथादितेयास्सन्त्रस्ता ब्रह्माणमिदमब्रुवन् ॥ १२

देवाः—

कथं शक्ष्यामहे ब्रह्मन् दानवैरुपमर्दनम् ॥ १२॥

काश्यपः—

स्वयम्भूस्तानुवाचेदं निसृष्टोऽत्र विधिर्मया ॥ १३

ते वरेणाभिसम्मत्ता बलेन च मदेन च ।

---

1. अ-क-ग-घ—अर्धद्वयं नास्ति
2. ख-ग—संनिमज्जतीम्

न च वेत्स्यन्ति सम्मूढा विष्णुमव्यक्तदर्शनम् ॥ १४

वराहरूपिणं देवम् अधृष्यममरैरपि ॥ १४॥

एष वेगेन गत्वा वै यत्र ते दानवाधमाः ।

अन्तर्भूमिगता घोरा निवसन्ति सहस्रशः ॥ १५॥

शमयिष्यति तच्छ्रुत्वा जहृषुस्सुरसत्तमाः ॥ १६

ततो विष्णुर्महातेजा वाराहं रूपमास्थितः ।

अन्तर्भूमिं सम्प्रविश्य जगाम दितिजान् प्रति ॥ १७

दृष्ट्वा च सहितास्सर्वे दैत्यास्सत्त्वममानुषम् ।

प्रसह्य सहितास्सर्वे सन्तस्थुः कालचोदिताः ॥ १८

सर्वे च समभिद्रुत्य वराहं जगृहुस्समम् ॥ १८॥

सङ्क्रुद्धाश्च वराहं ते कर्षयन्तस्ततस्ततः ।

दानवेन्द्रा महावीर्या महाकाया बलोद्धताः ॥ १९॥

नाशक्नुवंश्च किञ्चित्ते तस्य कर्तुं तदा विभोः ॥ २०

ततोऽगमन् विस्मयं ते दानवेन्द्रा भयार्दिताः ।

संशयं गतमात्मानं मेनिरे च सहस्रशः ॥ २१

ततो देवादिदेवस्स योगात्मा योगसारथिः ।

योगमास्थाय भगवांस् तदा भरतसत्तम ॥ २२

विननाद महानादं क्षोभयन् दैत्यदानवान् ।

सन्नादिता येन लोकास् सर्वाश्चैव दिशो दश ॥ २३

तेन सन्नादशब्देन [1]लेभिरे क्षोभमात्मनः ।
सम्भ्रान्ताश्चाभवन् सर्वे देवाश्शक्रपुरोगमाः ॥ २४

निर्विचेष्टं जगच्चापि बभूवातिभृशं तदा ।
स्थावरं जङ्गमं चापि तेन नादेन मोहितम् ॥ २५

ततस्ते दानवास्सर्वे तेन नादेन भीषिताः ।
पतिता गतासवश्चैव विष्णुतेजोविमोहिताः ॥ २६

[2]रसातलगतांश्चैव वराहस्त्रिदशद्विषः ।
खुरैस्स दारयामास मांसमेदोस्थिसञ्चयान् ॥ २७

नादेन तेन महता सनातन इति स्मृतः ।
पद्मनाभो महायोगी [3]भूताचार्यस्स भूतराट् ॥ २८

ततो देवगणास्सर्वे पितामहमुपाद्रवन् ।
समागम्य महात्मानम् ऊचुश्चैनं जगत्पतिम् ॥ २९

देवाः—

नादोऽयं कीदृशो देव नैनं विद्म वयं प्रभो ।
कोऽसौ हि कस्य वा नादो येन विह्वलितं जगत् ॥ ३०

[4]देवाश्च दानवाश्चैव मोहितास्तस्य तेजसा ॥ ३०॥

---

1. ख-ग—लोकास्संक्षोभमागमन्
2. घ—नास्तीदमर्धम्
3. ख—योगाचार्यं
4 ख—नास्तीदमर्धम्

एतस्मिन्नन्तरे विष्णुर् वाराहं रूपमास्थितः ।
उदतिष्ठत्तदा देवस् स्तूयमानो महर्षिभिः ॥ ३१॥

पितामहः—

निहत्य दानवपतीन् महावर्ष्मा महाबलः ।
एष देवो महायोगी भूतात्मा भूतभावनः ॥ ३२॥

सर्वभूतेश्वरो योगी [1]मुनिरात्मा तथाऽऽत्मनः ।
स्थिरीभवत कृष्णोऽयं सर्वपापप्रणाशनः ॥ ३३॥

कृत्वा कर्म तु साध्वेतन्निनदत्यमितप्रभः ।
समायातस्स्वमात्मानं महाभागो महाद्युतिः ॥ ३४॥

पद्मनाभो महायोगी [2]भूतात्मा भूतभावनः ।
न सन्तापो न भीः कार्या शोको वा सुर[3]सत्तमाः ॥ ३५॥

विधिरेष प्रभावश्च कालस्सङ्क्षयकारकः ।
लोकान् [4]धारयताऽनेन नादो मुक्तो महात्मना ॥ ३६॥

स एष हि महाभागस् सर्वलोकनमस्कृतः ॥
अच्युतः पुण्डरीकाक्षस् सर्वभूत[5]समुद्भवः ॥ ३७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
[ अस्मिन्नध्याये ३७॥ श्लोकाः ]

---

1. ग—यंनिरात्मा　　2. ग-घ—सर्वात्मा सर्वलोककृत्
3. ग-घ—सत्तमैः　　4. ख—धारयमाणेन
5. घ—हिते रतः

## ॥ चतुर्नवत्यधिकशततमोऽध्यायः* ॥



भीष्मेण युधिष्ठिरं प्रति वासुदेवतत्त्वकथनम् ॥

युधिष्ठिरः—

पितामह महाप्राज्ञ केशवस्य महात्मनः ।
वक्तुमर्हसि तत्त्वेन माहात्म्यं पुनरेव तु ॥ १

न तृप्याम्यहमप्येनं पश्यञ् शृण्वंश्च भारत ।
एवं कृष्णं महाबाहो तस्मादेतद्ब्रवीहि मे ॥ २

भीष्मः—

शृणु राजन् कथामेतां वैष्णवीं पापनाशनीम् ।
नारदो मां पुरा प्राह यामहं ते वदामि ताम् ॥ ३

देवर्षिर्नारदः पूर्वं तत्त्वं वेत्स्यामि वै हरेः ।
इति सञ्चिन्त्य मनसा दध्यौ ब्रह्म सनातनम् ॥ ४

हिमालये शुभे दिव्ये दिव्यं वर्षशतं किल ।
अनुच्छ्वसन्निराहारस् संयतात्मा जितेन्द्रियः ॥ ५

ततोऽन्तरिक्षे वागासीत् तं मुनिप्रवरं प्रति ।
मेघगम्भीरनिर्घोषा दिव्या वाह्याऽशरीरिणी ॥ ६

अशरीरिणी वाक्—

किमर्थं त्वं समापन्नो ध्यानं मुनिवरोत्तम ।

* कृष्णाचार्यमुद्रितकोशस्थ-ध-कोशपाठानुसारेणायमध्यायो मुद्रितः

अहं ददामि ते ज्ञानं धर्माद्यं वा वृणीष्व माम् ॥　　७

भीष्मः—

तच्छ्रुत्वा मुनिरालोच्य सम्भ्रमाविष्टमानसः ।
किं नु स्यादिति सञ्चिन्त्य वाक्यमाहापरं प्रति ॥　　८

नारदः—

कस्त्वं भवानण्डं बिभेद मध्ये
समास्थितो वाक्यमुदीरयन् माम् ।
न रूपमन्यत्तव दृश्यते वै
ईदृग्विधस्त्वं समधिष्ठितोऽसि ॥　　९

भीष्मः—

पुनस्तमाह स मुनिम् अनन्तोऽहं बृहत्तरः ।
न मां मूढा विजानन्ति ज्ञानिनो मां विदन्त्युत ॥　　१०
तं प्रत्याह मुनिश्श्रीमान् प्रणतो विनयान्वितः ॥　　१०॥

नारदः—

भवन्तं ज्ञातुमिच्छामि तव तत्त्वं ब्रवीहि मे ॥　　११

भीष्मः—

तस्य तद्वचनं श्रुत्वा नारदं प्राह लोकपः ॥　　११॥

विष्णुः—

ज्ञानेन मां विजानीहि नान्यथा शक्तिरस्ति ते ॥　　१२

नारदः—

कीदृग्विधं तु तज्ज्ञानं येन जानामि ते तनुम् ।
अनन्त तन्मे ब्रूहि त्वं यद्यनुग्रहवानहम् ॥　　१३

लोकपालः—

विकल्पहीनं विपुलं तस्य चूरं शिवं परम् ।
ज्ञानं तत् तेन जानासि साधनं प्रति ते मुने ॥ १४

अत्रावृत्य स्थितं ह्येतत् तच्छुद्धमितरन्मृषा ।
एतत्ते सर्वमाख्यातं सङ्क्षेपान्मुनिसत्तम ॥ १५

नारदः—

त्वमेव तव यत्तत्त्वं ब्रूहि लोकगुरो मम ।
भवन्तं ज्ञातुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ १६

भीष्मः—

ततः प्रहस्य भगवान् मेघगम्भीरया गिरा ।
प्राहेशस्सर्वभूतानां न मे चास्यं श्रुतिर्न च ॥ १७

न घ्राणजिह्वे दृक् चैव त्वचा नास्ति तथा मुने ।
कथं वक्ष्यामि चात्मानम् अशरीरस्तथाऽप्यहम् ॥ १८

तज्ज्ञात्वा विस्मयाविष्टो मुनिराह प्रणम्य तम् ॥ १८॥

नारदः—

येन त्वं पूर्वमात्मानम् अनन्तोऽहं बृहत्तरः ।
ज्ञातोऽहमिति मां प्रीतः प्रोक्तवानसि तत् कथम् ॥ १९॥

भीष्मः—

पुनस्तमाह भगवांस् तवाप्यक्षाणि सन्ति वै ।
त्वमेनं ब्रूहि चात्मानं यदि शक्नोषि नारद ॥ २०॥

आत्मा यथा तव मुने विदितस्तु भविष्यति ।

मां च जानासि तेन त्वम् एकं साधनमावयोः ॥ २१॥

इत्युक्त्वा भगवान् देवस् ततो नोवाच किञ्चन ।
नारदोऽप्युत्स्मयन् खिन्नः क्व गतोऽसाविति प्रभुः ॥ २२॥
स्थित्वा स दीर्घकालं च मुनिर्व्यामूढमानसः ।
आह मां भगवान् देवस् त्वनन्तोऽहं बृहत्तरः ॥ २३॥
तेनाहमिति सर्वस्य को वाऽनन्तो बृहत्तरः ॥ २४

केयमुर्वी ह्यनन्ताख्या बृहती नूनमेव सा ।
यस्यां जानन्ति भूतानि विलीनानि ततस्ततः ॥ २५

एनां पृच्छामि तरुणीं सैषा नूनमुवाच माम् ॥ २५॥

इत्येवं स मुनिश्श्रीमान् कृत्वा निश्चयमात्मनः ।
स भूतलं समाविश्य प्रणिपत्येदमब्रवीत् ॥ २६॥

नारदः—

आश्चर्याऽसि च धन्याऽसि बृहती त्वं वसुन्धरे ।
त्वामत्र वेत्तुमिच्छामि यादृग्भूताऽसि शोभने ॥ २७॥

भीष्मः—

तच्छ्रुत्वा धरणी देवी स्मयमानाऽब्रवीदिदम् ॥ २८

भूमिः—

नाहं हि बृहती विप्र न चानन्ता च सत्तम ।
कारणं मम यो गन्धो गन्धात्मानं ब्रवीहि तम् ॥ २९

भीष्मः—

ततो मुनिस्तद्धि तत्त्वं प्रणिपत्येदमब्रवीत् ॥ २९॥

नारदः—

†कारणं मे जलं मत्तो बृहत्तरतमं हि तत् ॥ ३०

भीष्मः—

स समुद्रं मुनिर्गत्वा प्रणिपत्येदमब्रवीत् ॥ ३०॥

नारदः—

आश्चर्योऽसि च धन्योऽसि ह्यनन्तोऽसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ ३१॥

भीष्मः—

तच्छ्रुत्वा सरितां नाथस् समुद्रो मुनिमब्रवीत् ॥ ३२

समुद्रः—

कारणं मेऽत्र सम्पृच्छ रसात्मानं बृहत्तरम् ।
ततो बृहत्तरं विद्वंस् त्वं पृच्छ मुनिसत्तम ॥ ३३

भीष्मः—

ततो मुनिर्यथायोगं जलं तत्त्वमवेक्ष्य तत् ।
जलात्मानं प्रणम्याह जलतत्त्वस्थितो मुनिः ॥ ३४

नारदः—

आश्चर्योऽसि च धन्योऽसि ह्यनन्तोऽसि बृहत्तरः ।
भवन्तं श्रोतुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ ३५

भीष्मः—

ततो रसात्मकस्सो नु मुनिमाह पुनः पुनः ॥ ३५॥

† असानन्वयाद्ग्रन्थपातोऽस्तीति गम्यते

रसात्मकः—

ममापि कारणं पृच्छ तेजोरूपं विभावसुम् ।
नाहं बृहत्तरो ब्रह्मन् नाप्यनन्तश्च सत्तम ॥ ३६॥

भीष्मः—

ततोऽग्निं प्रणिपत्याह मुनिर्विस्मितमानसः ।
यज्ञात्मानं महावासं सर्वभूतनमस्कृतम् ॥ ३७॥

नारदः—

आश्चर्योऽसि च धन्योऽसि ह्यनन्तश्च बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ ३८॥

भीष्मः—

ततः प्रहस्य भगवान् मुनिं स्विष्टकृदब्रवीत् ॥ ३९

अग्निः—

नाहं बृहत्तरो ब्रह्मन् नाप्यनन्तश्च सत्तम ।
कारणं मम रूपं यत् तं पृच्छ मुनिसत्तम ॥ ४०

भीष्मः—

ततो योगक्रमेणैव प्रतीतं तं प्रविश्य सः ।
रूपात्मानं प्रणम्याह नारदो वदतां वरः ॥ ४१

नारदः—

आश्चर्योऽसि च धन्योऽसि ह्यनन्तोऽसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ ४२

भीष्मः—

उत्स्मयित्वा तु रूपात्मा तं मुनिं प्रत्युवाच ह ॥ ४२॥

रूपात्मा—

वायुर्मे कारणं ब्रह्मंस् तं पृच्छ मुनिसत्तम ।
मत्तो बहुतरश्श्रीमान् अनन्तश्च महाबलः ॥ ४३॥

भीष्मः—

स मारुतं प्रणम्याह भगवान् मुनिसत्तमः ।
योगसिद्धो महायोगी ज्ञानविज्ञानपारगः ॥ ४४॥

नारदः—

आश्चर्योऽसि च धन्योऽसि ह्यनन्तोऽसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ ४५॥

भीष्मः—

ततो वायुर्हि सम्प्राह नारदं मुनिसत्तमम् ॥ ४६

वायुः—

कारणं पृच्छ भगवन् स्पर्शात्मानं ममाद्य वै ।
मत्तो बृहत्तरश्श्रीमान् अनन्तश्च तथैव सः ॥ ४७

भीष्मः—

ततोऽस्य वचनं श्रुत्वा स्पर्शात्मानमुवाच सः ॥ ४७॥

नारदः—

आश्चर्योऽसि च धन्योऽसि ह्यनन्तोऽसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ ४८॥

भीष्मः—

तस्य तद्वचनं श्रुत्वा स्पर्शात्मा मुनिमब्रवीत् ॥ ४९

स्पर्शात्मा—

नाहं बृहत्तरो ब्रह्मन् नाप्यनन्तश्च सत्तम ॥ ४९॥

कारणं मम चैवेमम् आकाशं च बृहत्तरम् ।

तं पृच्छ मुनिशार्दूल सर्वव्यापिनमव्ययम् ॥ ५०॥

भीष्मः—

तच्छ्रुत्वा नारदश्श्रीमान् वाक्यं वाक्यविशारदः ।

आकाशं समुपागम्य प्रणम्याह कृताञ्जलिः ॥ ५१॥

नारदः—

आश्चर्योऽसि च धन्योऽसि ह्यनन्तोऽसि बृहत्तरः ।

भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ ५२॥

भीष्मः—

आकाशस्तमुवाचेदं प्रहसन् मुनिसत्तमम् ॥ ५३

आकाशः—

नाहं बृहत्तरो ब्रह्मञ् शब्दो वै कारणं मम ।

तं पृच्छ मुनिशार्दूल स वै मत्तो बृहत्तरः ॥ ५४

भीष्मः—

ततो ह्याविश्य चाकाशं शब्दात्मानमुवाच ह ।

स्वरव्यञ्जनसंयुक्तं नानाहेतुविभूषितम् ॥ ५५

वेदाख्यं परमं गुह्यं वेदकारणमच्युतम् ॥ ५५॥

नारदः—

आश्चर्योऽसि च धन्योऽसि ह्यनन्तोऽसि बृहत्तरः ।

भवन्तं श्रोतुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ ५६॥

भीष्मः—

वेदात्मा प्रत्युवाचेदं नारदं मुनिपुङ्गवम् ॥ ५७

शब्दः—

मया कारणभूतेन सर्ववेत्ता पितामहः ।
ब्रह्मणो बुद्धिसंस्थानम् आस्थितोऽहं महामुने ॥ ५८

तस्माद्बृहत्तरो मत्तः पद्मयोनिर्महामतिः ।
तं पृच्छ मुनिशार्दूल सर्वकारणकारणम् ॥ ५९

भीष्मः—

ब्रह्मलोकं ततो गत्वा नारदो मुनिपुङ्गवैः ।
सेव्यमानं महात्मानं लोकपालैर्मरुद्गणैः ॥ ६०

समुद्रैश्च सरिद्भिश्च भूततत्त्वैस्सभूधरैः ।
गन्धर्वैरप्सरोभिश्च ज्योतिषां च गणैस्तथा ॥ ६१

स्तुतिस्तोमग्रहस्तोभैस् तथा वेदैर्मुनीश्वरैः ।
उपास्यमानं ब्रह्माणं लोकनाथं परात् परम् ॥ ६२

हिरण्यगर्भं विश्वेशं चतुर्वक्त्रेण भूषितम् ।
प्रणम्य प्राञ्जलिः प्रह्वस् तमाह मुनिपुङ्गवः ॥ ६३

नारदः—

आश्चर्योऽसि च धन्योऽसि ह्यनन्तोऽसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ ६४

भीष्मः—

तच्छ्रुत्वा भगवान् ब्रह्मा सर्वलोकपितामहः ।
उत्स्मयन् मुनिमाहेदं कर्ममूलस्य लोपकम् ॥ ६५

ब्रह्मा—

नाहं बृहत्तरो ब्रह्मन् नाप्यनन्तश्च सत्तम ।
लोकानां मम सर्वेषां नाथभूतो बृहत्तरः ॥ ६६

नन्दगोपकुले गोपकुमारैः परिवारितः ।
समस्तजगतां गोप्ता गोपवेषेण संस्थितः ॥ ६७

मद्रूपं च समास्थाय जगत्सृष्टिं करोति सः ।
ऐशानमास्थितश्श्रीमान् हन्ति नित्यं हि पाति च ॥ ६८

विष्णुस्स्वरूपरूपोऽसौ कारणं स हरिर्मम ।
तं पृच्छ मुनिशार्दूल स चानन्तो बृहत्तरः ॥ ६९

भीष्मः—

ततोऽवतीर्य भगवान् ब्रह्मलोकान्महामुनिः ।
नन्दगोपकुले विष्णुम् एनं कृष्णं जगत्पतिम् ॥ ७०

बालक्रीडनकासक्तं वत्सजालविभूषितम् ।
पाययित्वाऽथ बध्नन्तं धूलिधूम्राननं परम् ॥ ७१

गाहमानैर्हसद्भिश्च नृत्यद्भिश्च समन्ततः ।
पाणिवादनकैश्चैव संवृतं वेणुवादकैः ॥ ७२

प्रणिपत्याब्रवीदेनं नारदो भगवान् मुनिः ॥ ७२॥

नारदः—

आश्चर्योऽसि च धन्योऽसि ह्यनन्तश्च बृहत्तरः ।
वेत्ताऽसि चाव्ययश्चासि वेत्तुमिच्छामि यादृशम् ॥ ७३॥

भीष्मः—

ततः प्रहस्य भगवान् नारदं प्रत्युवाच ह ॥ ७४

श्रीभगवान्—

मत्तः परतरं नास्ति मत्तस्सर्वं प्रतिष्ठितम् ।
मत्तो बृहत्तरं नान्यद् अहमेव बृहत्तरः ॥ ७५

आकाशे च स्थितः पूर्वम् उक्तवानहमेव ते ।
न मां वेत्ति जनः कश्चिन्माया मम दुरत्यया ॥ ७६

भक्त्या त्वनन्यया युक्ता मां विजानन्ति योगिनः ॥ ७६॥

प्रियोऽसि मम भक्तोऽसि मम तत्त्वं विलोकय ।
ददामि तव तज्ज्ञानं येन तत्त्वं प्रपश्यसि ॥ ७७॥

अन्येषां चैव भक्तानां मम योगरतात्मनाम् ।
ददामि दिव्यं ज्ञानं च येन तत्त्वं प्रपश्यसि ॥ ७८॥

अन्येषां चैव भक्तानां मम योगरतात्मनाम् ।
ददामि दिव्यं ज्ञानं च तेन ते यान्ति मत्पदम् ॥ ७९॥

भीष्मः—

एवमुक्त्वा ययौ कृष्णो नन्दगोपगृहं हरिः ।

एतत् ते कथितं राजन् विष्णुतत्त्वमनुत्तमम् । ८०॥
भजस्वैनं विशालाक्षं जपन् कृष्णेति सत्तम ॥ ८१

मोहयन् मां तथा त्वां च शृणोत्येष मयेरितान् ।
धर्मात्मा च महाबाहो भक्तान् रक्षति नान्यथा ॥ ८२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
[अस्मिन्नध्याये ८२ श्लोकाः]

---

## ॥ पञ्चनवत्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति नारदाय श्रीनारायणोक्तस्य प्रयाणकाले श्रीभगवदनुस्मृतिप्रकारस्य कथनम् ॥

---

युधिष्ठिरः—

[1]पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
प्रयाणकाले किं जप्यं मोक्षिभिस्तत्त्वचिन्तकैः ॥ १

किमनुस्मरन् कुरुश्रेष्ठ मरणे पर्युपस्थिते ।
प्राप्नुयात् परमां सिद्धिं श्रोतुमिच्छामि तत्त्वतः ॥ २

भीष्मः—

[2]सद्युक्तिसहितस्सूक्ष्म उक्तः प्रश्नस्त्वयाऽनघ ।

---

1. खकोशे ऽयमध्यायो नास्ति 2. ग—त्वयुक्तश्च

शृणुष्वावहितो राजन् नारदेन पुरा श्रुतम् ॥ ३

श्रीवत्साङ्कं जगद्बीजम् अनन्तं लोकसाक्षिणम् ।
पुरा नारायणं देवं नारदः परिपृष्टवान् ॥ ४

नारदः—

त्वामक्षरं परं ब्रह्म निर्गुणं तमसः परम् ।
आहुर्वेद्यं परं धाम ब्रह्मादिकमलोद्भवम् ॥ ५

भगवन् भूतभव्येश श्रद्दधानैर्जितेन्द्रियैः ।
कथं भक्तैर्विचिन्त्योऽसि योगिभिर्देहमोक्षिभिः ॥ ६

किं च जप्यं जपेन्नित्यं काल्यमुत्थाय मानवः ।
कथं युञ्जन् सदा ध्यायेद् ब्रूहि तत्वं सनातनम् ॥ ७

भीष्मः—

श्रुत्वा तस्य तु देवर्षेर् वाक्यं वाचस्पतिस्स्वयम् ।
प्रोवाच भगवान् विष्णुर् नारदं वरदः प्रभुः ॥ ८

श्रीभगवान्—

हन्त ते कथयिष्यामि इमां दिव्यामनुस्मृतिम् ।
यामधीत्य प्रयाणे तु मद्भावायोपपद्यते ॥ ९

ओङ्कारमग्रतः कृत्वा मां नमस्कृत्य नारद ।
एकाग्रः प्रयतो भूत्वा इमं मन्त्रमुदीरयेत् ॥ १०

ओं नमो भगवते वासुदेवायेति ॥ १०॥

भीष्मः—

इत्युक्तो नारदः प्राह प्राञ्जलिः प्रणतस्थितः ।
सर्वदेवेश्वरं विष्णुं सर्वात्मानं हरिं प्रभुम् ॥　　११॥

नारदः—

अव्यक्तं शाश्वतं देवं प्रभवं पुरुषोत्तमम् ।
प्रपद्ये प्राञ्जलिर्विष्णुम् अक्षरं परमं पदम् ॥　　१२॥

पुराणं प्रभवं नित्यम् अक्षयं लोकसाक्षिणम् ।
प्रपद्ये पुण्डरीकाक्षम् ईशं भक्तानुकम्पिनम् ॥　　१३॥

लोकनाथं सहस्राक्षम् [1]अद्भुतं परमं पदम् ।
भगवन्तं प्रपन्नोऽस्मि भूतभव्यभवत्प्रभुम् ॥　　१४॥

स्रष्टारं सर्वलोकानाम् अनन्तं [2]विश्वतोमुखम् ।
पद्मनाभं हृषीकेशं प्रपद्ये सत्यमच्युतम् ॥　　१५॥

हिरण्यगर्भममृतं भूगर्भं परतः परम् ।
प्रभोः प्रभुमनाद्यन्तं प्रपद्ये तं रविप्रभम् ॥　　१६॥

सहस्रशीर्षं पुरुषं महर्षिं तत्त्वभावनम् ।
प्रपद्ये सूक्ष्ममचलं वरेण्यमभयप्रदम् ॥　　१७॥

नारायणं पुराणर्षिं योगात्मानं सनातनम् ।
[3]संस्थानं सर्वतत्त्वानां प्रपद्ये ध्रुवमीश्वरम् ॥　　१८॥

---

1. घ—मक्षरं　　2. ग-घ—सर्वतो
3. ग—संघातं सर्व

यः प्रभुस्सर्वभूतानां येन सर्वमिदं ततम् ।
चराचरगुरुर्विष्णुस् स मे देवः प्रसीदतु ॥ १९॥

यस्मादुत्पद्यते ब्रह्मा पद्मयोनिः पितामहः ।
ब्रह्मयोनिर्हि विश्वात्मा स मे विष्णुः प्रसीदतु ॥ २०॥

[1]यः पुरा प्रलये प्राप्ते नष्टे स्थावरजङ्गमे ।
ब्रह्मादिषु प्रलीनेषु नष्टे लोके परावरे ॥ २१॥

आभूतसम्प्लवे चैव प्रलीने प्रकृतौ महान् ।
एकस्तिष्ठति विश्वात्मा स मे विष्णुः प्रसीदतु ॥ २२॥

चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥ २३॥

पर्जन्यः पृथिवी सस्यं कालो धर्मः क्रियाक्रिये ।
[2]गुणाकरस्स मे बभ्रुर् वासुदेवः प्रसीदतु ॥ २४॥

अग्नीषोमार्कताराणां ब्रह्मरुद्रेन्द्रयोगिनाम् ।
यस्तेजयति तेजांसि स मे विष्णुः प्रसीदतु ॥ २५॥

योगावास नमस्तुभ्यं सर्वावास वरप्रद ।
यज्ञगर्भ हिरण्याङ्ग पञ्चयज्ञ नमोऽस्तु ते ॥ २६॥

चतुर्मूर्ते परं धाम लक्ष्म्यावास परार्चित ।
सर्वावास नमस्तेऽस्तु वासुदेव प्रधानकृत् ॥ २७॥

---

1. अ—अर्धचतुष्टयं नास्ति    2. ग—गुणात्परः

अजस्त्वमगमः पन्था ह्यमूर्तिर्विश्वमूर्तिधृत् ।
[1]त्रिकर्तः पञ्चकालज्ञ नमस्ते ज्ञानसागर ॥ २८॥

अव्यक्ताद्व्यक्तमुत्पन्नं व्यक्ताद्यस्तु परोऽक्षरः ।
यस्मात् परतरं नास्ति तमस्मि शरणं गतः ॥ २९॥

[2]न प्रधानो न च महान् पुरुषश्चेतनो ह्यजः ।
अनयोर्यः परतरस् तमस्मि शरणं गतः ॥ ३०॥

चिन्तयन्तो हि यं नित्यं ब्रह्मेशानादयः प्रभुम् ।
निश्चयं नाधिगच्छन्ति तमस्मि शरणं गतः ॥ ३१॥

जितेन्द्रिया महात्मानो ज्ञानध्यानपरायणाः ।
यं प्राप्य न निवर्तन्ते तमस्मि शरणं गतः ॥ ३२॥

[3]एकांशेन जगत् सर्वम् अवष्टभ्य विभुस्स्थितः ।
अग्राह्यो निर्गुणो नित्यस् तमस्मि शरणं गतः ॥ ३३॥

सोमार्काग्निमयं तेजो या च तारामयी द्युतिः ।
दिवि सञ्जायते योऽयं स महात्मा प्रसीदतु ॥ ३४॥

गुणादिर्निर्गुणश्चाद्यो लक्ष्मीवांश्चेतनो ह्यजः ।
सूक्ष्मस्सर्वगतो योगी स [4]महात्मा प्रसीदतु ॥ ३५॥

---

1. घ—त्रिगर्तः पञ्चकर्मज्ञ 2. ग—अर्धद्वयं नास्ति
3. ग—त्रिपादूर्ध्वं स्थितो योऽसावेकांशेन भुवि स्थितः । [पाठान्तरम् ]
घ—एकाङ्गेन
4. ग—ममात्मा

अव्यक्तं [1]समधिष्ठाता ह्यचिन्त्यस्सदसत्परः ।
[2]आस्थितः प्रकृतिं भुङ्क्ते स महात्मा प्रसीदतु ॥ ३६॥

क्षेत्रज्ञः पञ्चधा भुङ्क्ते प्रकृतिं पञ्चभिर्मुखैः ।
महान् गुणांश्च यो भुङ्क्ते स महात्मा प्रसीदतु ॥ ३७॥

सूर्यमध्ये स्थितस्सोमस् तस्य मध्ये च या स्थिता ।
भूतबाह्या च या दीप्तिस् स महात्मा प्रसीदतु ॥ ३८॥

नमस्ते सर्वतस्सर्व सर्वतोक्षिशिरोमुख ।
निर्विकार नमस्तेऽस्तु साक्षी क्षेत्रे व्यवस्थितः ॥ ३९॥

अतीन्द्रिय नमस्तुभ्यं लिङ्गैर्व्यक्तैर्न मीयसे ।
ये च त्वां नाभिजानन्ति संसारे संसरन्ति ते ॥ ४०॥

कामक्रोधविनिर्मुक्ता रागद्वेषविवर्जिताः ।
नान्यभक्ता विजानन्ति न पुनर्नारका द्विजाः ॥ ४१॥

एकान्तिनो हि निर्द्वन्द्वा निराशीः कर्मकारिणः ।
ज्ञानाग्निदग्धकर्माणस् त्वां विशन्ति विनिश्चिताः ॥ ४२॥

अशरीरं शरीरस्थं समं सर्वेषु देहिषु ।
पुण्यपापविनिर्मुक्ता भक्तास्त्वां प्रविशन्त्युत ॥ ४३॥

अव्यक्तं बुद्ध्यहङ्कारमनोभूतेन्द्रियाणि च ।

---

1. घ—समभिध्याता अचिन्त्यः
2. अ-क—अर्धद्वयं नास्ति

त्वयि तानि च तेषु त्वं न तेषु त्वं न ते त्वयि ॥ ४४॥
एकत्वान्यत्वनानात्वं ये विदुर्यान्ति ते परम् ।
समोऽसि सर्वभूतेषु न ते द्वेष्योऽस्ति न प्रियः ॥ ४५॥
समत्वमभिकाङ्क्षेऽहं भक्त्या वै नान्यचेतसा ॥ ४६
चराचरमिदं सर्वं भूतग्रामं चतुर्विधम् ।
त्वया त्वय्येव तत् प्रोतं सूत्रे मणिगणा इव ॥ ४७
स्रष्टा भोक्तासि कूटस्थो ह्यतत्त्वस्तत्त्वसंज्ञितः ।
[1]अकर्म हेतुरचलः पृथगात्मन्यवस्थितः ॥ ४८
न ते भूतेषु संयोगो भूततत्त्वगुणातिगः ।
अहङ्कारेण बुद्ध्या वा न ते योगस्त्रिभिर्गुणैः ॥ ४९
[2]न ते धर्मोऽस्त्यधर्मो वा नारम्भो जन्म वा पुनः ।
जरामरणमोक्षार्थं त्वां प्रपन्नोऽस्मि [3]सर्वशः ॥ ५०
विषयैरिन्द्रियैर्वाऽपि न मे भूयस्समागमः ।
पृथिवीं यातु मे घ्राणं यातु मे रसना जलम् ॥ ५१
रूपं हुताशनं यातु स्पर्शो यातु च मारुतम् ।
श्रोत्रमाकाशमप्येतु मनो वैकारिकं पुनः ॥ ५२
इन्द्रियाण्यपि संयान्तु स्वासु स्वासु च योनिषु ।

---

1. ग—अकर्ता;　　घ—अकर्मा
2. ग—न मे धर्मो ह्यधर्मो वा
3. ग-घ—सर्वग

पृथिवी यातु सलिलम् आपोऽग्निमनलोऽनिलम् ॥ ५३

वायुराकाशमप्येतु मनश्चाकाश एव च ।
अहङ्कारं मनो यातु मोहनं सर्वदेहिनाम् ॥ ५४

अहङ्कारस्ततो बुद्धिं बुद्धिरव्यक्तमच्युत ॥ ५४॥

प्रधाने प्रकृतिं याते गुणसाम्ये व्यवस्थिते ।
वियोगस्सर्वकरणैर् गुणैर्भूतैश्च मे भवेत् ॥ ५५॥

निष्कैवल्यपदं तात काङ्क्षेऽहं परमं तव ।
एकीभावस्त्वया मेऽस्तु न मे जन्म भवेत् पुनः ॥ ५६॥

त्वद्बुद्धिस्त्वद्गतप्राणस् त्वद्भक्तस्त्वत्परायणः ।
त्वामेवाहं स्मरिष्यामि मरणे पर्युपस्थिते ॥ ५७॥

पूर्वदेहकृता ये मे व्याधयः प्रविशन्तु माम् ।
अर्दयन्तु च दुःखानि ऋणं मे प्रतिमुञ्चतु ॥ ५८॥

अनुध्यातोऽसि देवेश न मे जन्म भवेत् पुनः ।
तस्माद्ब्रवीमि कर्माणि ऋणं मे न भवेदिति ॥ ५९॥

उपतिष्ठन्तु मां सर्वे व्याधयः पूर्वसञ्चिताः ।
अनृणो गन्तुमिच्छामि तद्विष्णोः परमं पदम् ॥ ६०॥

श्रीभगवान्—

अहं भगवतस्तस्य मम चासौ सनातनः ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ६१॥

कर्मेन्द्रियाणि संयम्य पञ्च बुद्धीन्द्रियाणि च ।
दशेन्द्रियाणि मनसि अहङ्कारे तथा मनः ॥ ६२॥

अहङ्कारं तथा बुद्धौ बुद्धिमात्मनि योजयेत् ।
यतबुद्धीन्द्रियः पश्यन् बुद्ध्या बुद्ध्येत् परात् परम् ॥ ६३॥

ममायमिति यस्याहं येन सर्वमिदं ततम् ।
आत्मनाऽऽत्मनि संयोज्य परमात्मन्यनुस्मरेत् ॥ ६४॥

ततो बुद्धेः परं बुद्ध्वा लभते न पुनर्भवम् ॥ ६५

मरणे समनुप्राप्ते यश्चैवं मामनुस्मरेत् ।
अपि पापसमाचारस् स याति परमां गतिम् ॥ ६६

ओं नमो भगवते तस्मै देहिनां परमात्मने ।
नारायणाय भक्तानाम् एकनिष्ठाय शाश्वते ॥ ६७

इमामनुस्मृतिं दिव्यां वैष्णवीं सुसमाहितः ।
स्वपन् विबुध्यंश्च पठन् यत्र तत्र समभ्यसेत् ॥ ६८

पौर्णमास्याममायां च द्वादश्यां च विशेषतः ।
श्रावयेच्छ्रद्दधानांश्च मद्भक्तांश्च विशेषतः ॥ ६९

यद्यहङ्कारमाश्रित्य यज्ञदानतपःक्रियाः ।
कुर्वंस्तत् फलमाप्नोति पुनरावर्तनं तु तत् ॥ ७०

अभ्यर्चयन् पितॄन् देवान् पठञ्जुह्वन् बलिं ददत् ।
ज्वलन्नग्निं स्मरेद्यो मां स याति परमां गतिम् ॥ ७१

यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ।
यज्ञं दानं तपस्तस्मात् कुर्यादाशीर्विवर्जितः ॥ ७२

नम इत्येव यो ब्रूयान्मद्भक्तश्श्रद्धयाऽन्वितः ।
तस्याक्षयो भवेल्लोकश् श्वपाकस्यापि नारद ॥ ७३

किं पुनर्ये यजन्ते मां साधका विधिपूर्वकम् ।
श्रद्धावन्तो यतात्मानस् ते मां यान्ति मदाश्रिताः ॥ ७४

कर्माण्याद्यन्तवन्तीह मद्भक्तो नान्तमश्नुते ।
मामेव तस्माद्देवर्षे ध्याहि नित्यमतन्द्रितः ॥ ७५
अवाप्स्यसि ततस्सिद्धिं द्रक्ष्यस्येव पदं मम ॥ ७५॥

अज्ञानाय च यो ज्ञानं दद्याद्धर्मोपदेशतः ।
कृत्स्नां वा पृथिवीं दद्यात् तेन तुल्यं [1]च तत् फलम् ॥ ७६॥

तस्मात् प्रदेयं साधुभ्यो जन्मबन्धभयापहम् ।
एवं दत्त्वा नरश्रेष्ठ श्रेयो वीर्यं च विन्दति ॥ ७७॥

अश्वमेधसहस्राणां सहस्रं यस्समाचरेत् ।
नासौ पदमवाप्नोति मद्भक्तैर्यदवाप्यते ॥ ७८॥

भीष्मः—

एवं पृष्टः पुरा तेन नारदेन सुरर्षिणा ।
यदुवाच तदा शम्भुस् तदुक्तं तव सुव्रत ॥ ७९॥

---

1. ख—न तत् फलम्

त्वमप्येकमना भूत्वा ध्याहि ध्येयं गुणातिगम् ।
भजस्व सर्वभावेन परमात्मानमव्ययम् ॥ ८०॥

श्रुत्वैतन्नारदो वाक्यं दिव्यं नारायणेरितम् ।
अत्यन्तभक्तिमान् देव एकान्तत्वमुपेयिवान् ॥ ८१॥

नारायणमृषिं देवं दशवर्षाण्यनन्यभाक् ।
इदं जपन् वै प्राप्नोति तद्विष्णोः परमं पदम् ॥ ८२॥

किं तस्य बहुभिर्मन्त्रैर् भक्तिर्यस्य जनार्दने ।
नमो नारायणायेति मन्त्रस्सर्वार्थसाधकः ॥ ८३॥

इमां रहस्यां परमामनुस्मृतिम्
अधीत्य बुद्धिं लभते च नैष्ठिकीम् ।
विहाय दुःखान्यवमुच्य सङ्कटात्
स वीतरागो विचरेन्महीमिमाम् ॥ ८४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
[ अस्मिन्नध्याये ८४॥ श्लोकाः ]

---

## ॥ षण्णवत्यधिकशततमोऽध्यायः* ॥



भीष्मेण युधिष्ठिरं प्रति गरुडेनात्मानं प्रत्युक्तश्रीभगवन्महिमानुवादः ॥

युधिष्ठिरः—

देवासुरमनुष्येषु ऋषिमुख्येषु वा पुनः ।
विष्णोस्तत्त्वं यथाख्यातं को विद्वाननुवेत्ति तत् ॥ १

एतन्मे सर्वमाचक्ष्व न मे तृप्तिर्हि तत्त्वतः ।
वर्तते भरतश्रेष्ठ सर्वज्ञोऽसीति मे मतिः ॥ २

भीष्मः—

कारितोऽहं त्वया राजन् यद्वृत्तं च पुरा मम ।
गरुडेन पुरा मह्यं संवादोऽभून्नृपोत्तम ॥ ३

पुराऽहं तप आस्थाय वासुदेवपरायणः ।
ध्यायन् स्तुवन्नमस्यंश्च यजमानस्तमेव च ।
गङ्गाद्वीपे समासीनो दशवर्षाणि भारत ॥ ४

माता च मम सा देवी जननी लोकपावनी ।
समासीना समीपे मे रक्षणार्थं ममाच्युत ॥ ५

तस्मिन् कालेऽद्भुतश्श्रीमान् सर्ववेदमयः प्रभुः ।
सुपर्णः पततां श्रेष्ठो मेरुमन्दरसन्निभः ॥ ६

* कृष्णाचार्यमुद्रितकोशस्थ – घ–कोशपाठानुसारेणायमध्यायो मुद्रितः

आजगाम विशुद्धात्मा गङ्गां द्रष्टुं महायशाः ॥ ६॥

तमागतं महात्मानं प्रत्युद्गम्याहमर्थितः ।
प्रणिपत्य यथान्यायं कृताञ्जलिरवस्थितः ॥ ७॥

सोऽपि देवो महाभागाम् अभिनन्द्य च जाह्नवीम् ॥
तया च पूजितश्श्रीमान् उपोपाविशदासने ॥ ८॥

ततः कथान्तरे तं वै वचनं चेदमब्रवम् ॥ ९

वेदवेद महावीर्य वैनतेय महाबल ।
नारायणं हृषीकेशं वहमानोऽनिशं हरिम् ॥ १०

जानासि तं यथा वक्तुं यादृग्भूतो जनार्दनः ।
ममापि तस्य सद्भावं वक्तुमर्हसि सत्तम ॥ ११

गरुडः—

शृणु भीष्म यथान्यायं पुरा त्वमिव सत्तमाः ।
अनेके मुनयस्सिद्धा मानसोत्तरवासिनः ॥ १२

पप्रच्छुर्मां महाप्राज्ञा वासुदेवपरायणाः ॥ १२॥

मुनयः—

पक्षीन्द्र वासुदेवस्य तत्त्वं वेत्सि परं पदम् ।
त्वया समो न तस्यास्ति सन्निकृष्टप्रियोऽपि च ॥ १३॥

गरुडः—

तेषामहं वचश्श्रुत्वा प्रणिपत्य महाहरिम् ।
अब्रवं च यथावृत्तं मम नारायणस्य च ॥ १४॥

शृणुध्वं मुनिशार्दूला हृत्वा सोममहं पुरा ।
आकाशे पतमानस्तु वाक्यं तत्र शृणोमि वै ॥ १५॥

आकाशवाणी—

साधु साधु महाबाहो प्रीतोऽस्मि तव दर्शनात् ।
वृणीष्व वचनं मत्तः पक्षीन्द्र गरुडाधुना ॥ १६॥

त्वामहं भक्तितत्त्वज्ञो ब्रवै वचनमुत्तमम् ॥ १७

गरुडः—

इत्याह स्म ध्रुवं तत्र मामाह भगवान् पुनः ॥ १७॥

श्रीभगवान्—

ऋषिरस्मि महावीर्य न मां जानाति वा मयि ।
असूयति च मां मूढ तच्छ्रुत्वा गर्वमास्थितः ॥ १८॥

गरुडः—

अहं देवनिकायानां मध्ये वचनमब्रवम् ॥ १९

ऋषे पूर्वं वरं मत्तस् त्वं वृणीष्व ततो ह्यहम् ।
वृणे त्वत्तो वरं पश्चाद् इत्येवं मुनिसत्तमाः ॥ २०

तस्मात्त्वां भगवान् देवश् श्रीमाञ् श्रीवत्सलक्षणः ।
अद्य पश्यति पक्षीन्द्र वाहनं भव मे सदा ॥ २१

वृणेऽहं वरमेतद्धि त्वत्तोऽद्य पतगेश्वर ॥ २१॥

तथेति तं वीक्ष्य मातामनहङ्कारमास्थितम् ? ।
जेतुकामो ह्यहं विष्णुं मायया मायिनं हरिम् ॥ २२॥

त्वत्तो ह्यहं वृणे त्वद्य वरं ऋषिवरोत्तम ।
तवोपरिष्टात् स्थास्यामि वरमेतत् प्रयच्छ मे ॥　　२३॥

तथेति च हसन् प्राह हरिर्नारायणः प्रभुः ॥　　२४

श्रीभगवान्—

ध्वजं च मे भव सदा त्वमेव विहगेश्वर ।
उपरिष्टात् स्थितिस्तेऽस्तु मम पक्षीन्द्र सर्वदा ॥　　२५

गरुडः—

इत्युक्त्वा भगवान् देवश् शङ्खचक्रगदाधरः ।
सहस्रचरणश्श्रीमान् सहस्रादित्यसन्निभः ॥　　२६

सहस्रशीर्षा पुरुषस् सहस्रनयनो महान् ।
सहस्रमकुटोऽचिन्त्यस् सहस्रवदनो विभुः ॥　　२७

विद्युन्मालानिभैर्दिव्यैर् नानाभरणराजिभिः ।
क्वचित् संदृश्यमानस्तु चतुर्बाहुः क्वचिद्धरिः ॥　　२८

क्वचिज्ज्योतिर्मयोऽचिन्त्यः क्वचित् स्कन्धे समाहितः ।
एवं मम जयन्देवस् तत्रैवान्तरधीयत ॥　　२९

ततोऽहं विस्मयापन्नः कृत्वा कार्यमनुत्तमम् ।
अस्याविमुच्य जननीं मया सह मुनीश्वराः ॥　　३०

अचिन्त्योऽयमहं भूयः कोऽसौ मामब्रवीत् पुरा ।
कीदृग्विधस्स भगवान् इति मत्वा तमास्थितः ॥　　३१

अनन्तरं देवदेवं स्कन्धे मम समाश्रितम् ।
अद्राक्षं पुण्डरीकाक्षं वहमानोऽहमद्भुतम् ॥ ३२

अवशस्तस्य भावेन यत्र यत्र स चेच्छति ।
विस्मयापन्नहृदयो ह्यहं किमिति चिन्तयन् ॥ ३३
अन्तर्जलमहं सर्वं वहमानोऽगमं पुनः ॥ ३३॥

सेन्द्रैर्देवैर्महाभागैर् ब्रह्माद्यैः कल्पजीविभिः ।
स्तूयमानो ह्यहमपि तैस्तैरभ्यर्चितः पृथक् ॥ ३४॥

क्षीरोदस्योत्तरे कूले दिव्ये मणिमये शुभे ।
वैकर्णनाम सदनं हरेस्तस्य महात्मनः ॥ ३५॥

दिव्यं तेजोमयं श्रीमद् अचिन्त्यममरैरपि ।
तेजोनिलमयैस्स्तम्भैर् नानासंस्थानसंस्थितैः ॥ ३६॥

विभूषितं हिरण्येन भास्वरेण समन्ततः ।
दिव्यं ज्योतिस्समायुक्तं गीतवादित्रशोभितम् ॥ ३७॥

शृणोमि शब्दं तत्राहं न पश्यामि शरीरिणम् ।
न च स्थलं न चान्यच्च पादयोस्तं समन्ततः ॥ ३८॥
वेपमानो ह्यहं तत्र विष्ठितोऽहं कृताञ्जलिः ॥ ३९

ततो ब्रह्मादयो देवा लोकपालास्तथैव च ।
सनन्दनाद्या मुनयस् तथाऽन्ये परजीविनः ॥ ४०

प्राप्तास्तत्र सभाद्वारि देवगन्धर्वसत्तमाः ।

ब्रह्माणं पुरतः कृत्वा कृताञ्जलिपुटास्तदा ॥ ४१

ततस्तदन्तरे तस्मिन् क्षीरोदार्णवशीकरैः ।
बोध्यमानो महाविष्णुर् आविर्भूत इवाबभौ ॥ ४२

फणासहस्रमालाढ्यं शेषमव्यक्तसंस्थितम् ।
पश्याम्यहं मुदाऽऽकाशे यस्योपरि जनार्दनम् ॥ ४३

दीर्घवृत्तैस्समैः पीनैः केयूरवलयोज्वलैः ।
चतुर्भिर्बाहुभिर्युक्तं ............ ॥ ४४

पिताम्बरेण संवीतं कौस्तुभेन विराजितम् ।
वक्षस्थलेन संयुक्तं पद्मयाऽधिष्ठितेन च ॥ ४५

ईषदुन्मीलिताक्षं तं सर्वकारणकारणम् ।
क्षीरोदस्योपरि बभौ नीलाभ्रं परमं यथा ॥ ४६

न कश्चिद्वदते कश्चिन्न व्याहरति कश्चन ।
ब्रह्मादिस्तम्बपर्यन्तं माशब्दमिति रोषितम् ॥ ४७
भ्रुकुटीकुटिलाक्षास्ते नानाभूतगणास्स्थिताः ॥ ४७॥

ततोऽचिन्त्यो हरिश्श्रीमान् आलोक्य च पितामहम् ।
कृत्वा च प्रस्थितं तत्र जगतां हितकाम्यया ॥ ४८॥

गच्छध्वमिति मामुक्त्वा गरुडेत्याह मां ततः ॥ ४९

ततोऽहं प्रणिपत्याग्रे कृताञ्जलिरवस्थितः ।
आगच्छेति च मामुक्त्वा पूर्वोत्तरपथं गतः ॥ ५०

अतीव मृदुभावेन गच्छन्निव स दृश्यते ॥ ५०॥

अयुतं नियुतं चाहं प्रयुतं चार्बुदं तथा ।
पतमानोऽहमनिशं योजनानि ततस्ततः ॥ ५१॥

ननु तत्त्वमहं भक्तो विष्ठितोऽस्मि प्रशास्तु नः ।
आगच्छ गरुडेत्येवं पुनराह स माधवः ॥ ५२॥

ततो भूयो ह्यहं पातं पतमानो विहायसम् ।
आजगाम ततो घोरं शतकोटिसमावृतम् ॥ ५३॥

तामसानीव भूतानि पर्वताभानि तत्र ह ।
समानानीव पद्मानि ततोऽहं भीत आस्थितः ॥ ५४॥

ततो मां किङ्करो घोरश् शतयोजनमायतम् ।
निगृह्य पाणिना तस्माच् चिक्षेप च स लोष्टवत् ॥ ५५॥

तत्तमोऽहमतिक्रम्य ह्यापं चैव विहायसम् ।
हुङ्कारघोषं तत्राहम् अशनीपातसन्निभान् ॥ ५६॥

कर्णमूले ह्यशृण्वन्तस् ततो भूतैस्समास्थितः ॥ ५७

ततोऽहं देवदेवेश त्राहि मां पुष्करेक्षण ।
इत्यब्रवमहं तत्र ततो विष्णुरुवाच माम् ॥ ५८

सुषिरस्य मुखे कश्चिन्मां चिक्षेप भयङ्करः ।
अतीतोऽहं क्षणादग्निम् अपश्यं वायुमण्डलम् ॥ ५९

आकाशमिव सम्प्रेक्ष्य क्षेप्तुकाममुपागतः ।

तत्राहं दुःखितो भूतः क्रोशमानो ह्यवस्थितः ॥　　६०

क्षणान्तरेण घोरेण क्रुद्धो हि परमात्मना ।
स्वपक्षराजिना दृष्ट्वा मां चिक्षेप भयङ्करः ॥　　६१

...गरुडकुलं सहस्रादित्यसन्निभम् ।
मां दृष्ट्वाऽप्यथ संस्थेऽथ ह्यल्पकालोऽतिदुर्बलः ॥　　६२

अहो विहङ्गमः प्राप्त इति विस्मयमानसाः ।
मां दृष्ट्वोचुरहं तत्र पश्यामि गरुडध्वजम् ॥　　६३

सहस्रयोजनायामं सहस्रादित्यवर्चसम् ।
सहस्रगरुडारूढं गरुडास्ते महाबलाः ॥　　६४

अत्याश्चर्यमिमं देव वपुषाऽस्मत्कुलोद्भवः ।
स्वल्पप्राणस्स्वल्पकायः कोऽसौ पक्षी इहागतः ॥　　६५

तच्छ्रुत्वाऽहं नष्टगर्वो भीतो लज्जासमन्वितः ।
स्वयं बुद्धश्च संविग्नस् ततो ह्यशृणवं पुनः ॥　　६६

आगच्छ गरुडेत्येव ततोऽहं यानमास्थितः ।
परार्ध्ये च ततो गत्वा योजनानां शतं पुनः ॥　　६७

तत्रापश्यमहं यो वै ब्रह्माणं परमेष्ठिनम् ॥　　६७॥

तत्रापि चापरं तत्र शतकोटिपितामहान् ।
पुनरेहीत्युवाचोच्चैर् भगवान् मधुसूदनः ॥　　६८॥

महाकुलं ततोऽपश्यं प्रमाणानि तमव्ययम् ।
कपित्थफलसङ्काशम् अन्धकारैस्समाश्रितम् ॥　　६९॥

तत्र स्थितो हरिश्श्रीमान् अण्डमेकं बिभेद ह ।
महद्भूतं हि मां गृह्य दत्त्वा वै प्राक्षिपत् पुनः ॥ ७०॥

तन्मध्ये सागरान् सप्त ब्रह्माणं च तथा सुरान् ।
पश्याम्यहं यथायोगं मातरं स्वकुलं तथा ॥ ७१॥

एवं मयाऽनुभूतं हि तत्त्वान्वेषणकाङ्क्षिणा ।
शिबिकासदृशं मां वै पश्यध्वं मुनिसत्तमाः ॥ ७२॥

इत्येवमब्रवं विप्रान् भीष्म यन्मे पुराऽभवत् ।
तत् ते सर्वं यथान्यायम् उक्तवानस्मि सत्तम ॥ ७३॥

योगिनस्तं प्रपश्यन्ति ज्ञानं दृष्ट्वा परं हरिम् ।
नान्यथा शक्यरूपोऽसौ ज्ञानगम्यः परः पुमान् ॥ ७४॥

अनन्यया च भक्त्या च प्राप्तुं शक्यो महाहरिः ॥ ७५

भीष्मः—

इत्येवमुक्त्वा भगवान् सुपर्णः पक्षिराट् प्रभुः ।
आमन्त्र्य जननीं मे वै तत्रैवान्तरधीयत ॥ ७६

तस्माद्राजेन्द्र सर्वात्मा वासुदेवः प्रधानकृत् ।
ज्ञानेन भक्त्या सुलभो नान्यथेति मतिर्मम ॥ ७७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

॥ ८८ ॥ मोक्षधर्मपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

[अस्मिन्नध्याये ७७ श्लोकाः]

## ॥ सप्तनवत्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति शिष्याय गुरूक्तवार्ष्णेयाध्यात्मतत्त्वानुवादः ॥ १ ॥ जगत्सृष्ट्यादिप्रतिपादनम् ॥ २ ॥ ब्रह्मचर्योपायादिप्रतिपादनम् ॥ ३ ॥ वैराग्यादिमोक्षसाधनप्रतिपादनम् ॥ ४ ॥

---

युधिष्ठिरः—

योगं मे परमं तात मोक्षस्य वद भारत ।
तमहं तत्त्वतो ज्ञातुम् इच्छामि वदतां वर ॥　　१

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
संवादं मोक्षसंयुक्तं शिष्यस्य गुरुणा सह ॥　　२

[1]कश्चिद्ब्राह्मणमासीनम् आचार्यमृषिसत्तमम् ।
शिष्यः परममेधावी श्रेयोर्थी सुसमाहितः ॥　　३

चरणावुपसङ्गृह्य स्थितः प्राञ्जलिरब्रवीत् ॥　　३॥

शिष्यः—

उपासनात् प्रसन्नोऽसि यदि वै भगवन् मम ।
संशयो मे महान् कश्चित् तं मे व्याख्यातुमर्हसि ॥　　४॥

कुतश्चाहं कुतश्च त्वं तत् सम्यग्ब्रूहि [2]यत् परम् ॥　　५

कथं च सर्वभूतेषु समेषु द्विजसत्तम ।

---

1. ग-घ—कश्चिद्　　2. ख—तत्त्वतः　　ग—तत्परम्

सम्यग्वृत्ता निवर्तन्ते विपरीताः क्षयोदयाः ॥ ६

वेदेषु चैव यद्वाच्यं लौकिकं व्यापकं च यत् ।
एतद्विद्वन् यथातत्त्वं सर्वं व्याख्यातुमर्हसि ॥ ७

गुरुः--

शृणु शिष्य महाप्राज्ञ ब्रह्मगुह्यमिदं परम् ।
अध्यात्मं सर्वभूतानाम् आगमानां च यद्वसु ॥ ८

वासुदेवस्सर्वमिदं विश्वस्य ब्रह्मणो मुखम् ।
सत्यं दानं तपो यज्ञस् तितिक्षा दम आर्जवम् ॥ ९

पुरुषं सनातनं विष्णुं यं तं वेदविदो विदुः ।
सर्गप्रलयकर्तारम् अव्यक्तं ब्रह्म शाश्वतम् ॥ १०

तदिदं ब्रह्म वार्ष्णेयम् इतिहासं शृणुष्व मे ॥ १०॥

ब्राह्मणो ब्राह्मणैश्श्राव्यो राजन्यः क्षत्रियैस्तथा ।
माहात्म्यं देवदेवस्य विष्णोरमिततेजसः ॥ ११॥

अर्हस्त्वमसि कल्याणं वार्ष्णेयाध्यात्ममुत्तमम् । १२

कालचक्रमनाद्यन्तं भावाभावस्वलक्षणम् ।
त्रैलोक्ये सर्वभूतेषु चक्रवत् परिवर्तते ॥ १३

यत्तदक्षरमव्यक्तम् अमृतं ब्रह्म शाश्वतम् ।
वदन्ति पुरुषव्याघ्र केशवं पुरुषोत्तमम् ॥ १४

पितॄन् देवानृषींश्चैव तथा वै यक्षराक्षसान् ।

नागासुरमनुष्यांश्च सृजते परमोऽव्ययः ॥ १५
तथैव वेदान् शास्त्राणि लोकधर्मांश्च शाश्वतान् ।
प्रलये प्रकृतिं प्राप्य युगादौ सृजते पुनः ॥ १६
यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ १७
अथ यद्यद् यथा भावि कालयोगाद्युगादिषु ।
तत्तदुत्पद्यते ज्ञानं लोकयात्राविधानजम् ॥ १८
युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वम् अनुज्ञातास्स्वयम्भुवा ॥ १९
वेदविद्भगवान् ब्रह्मा वेदाङ्गानि बृहस्पतिः ।
भार्गवो नीतिशास्त्रं तु जगाद जगतां हितम् ॥ २०
गान्धर्वं नारदो वेद भारद्वाजो धनुर्ग्रहम् ।
देवर्षिचरितं गार्ग्यो दत्तात्रेयश्चिकित्सितम् ॥ २१
न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः ।
हेत्वागमसदाचारैर् यदुक्तं तदुपास्यते ॥ २२
अनाद्यन्तं परं ब्रह्म न देवा नर्षयो विदुः ।
एकस्तद्वेद भगवान् धाता नारायणः प्रभुः ॥ २३
नारायणादृषिगणास् तथा मुख्यास्सुरासुराः ।
राजर्षयः पुराणाश्च परमं दुःखभेषजम् ॥ २४

पुरुषाधिष्ठितान् भावान् प्रकृतिस्सूयते परा ।
हेतुयुक्तमतस्सर्वं जगत् सम्परिवर्तते ॥ २५

दीपादन्ये यथा दीपाः प्रवर्तन्ते सहस्रशः ।
प्रकृतिस्सूयते तद्वद् आनन्त्यान्नापचीयते ॥ २६

अव्यक्तकर्मजा बुद्धिर् अहङ्कारं प्रसूयते ।
आकाशं चाप्यहङ्काराद् वायुराकाशसम्भवः ॥ २७

वायोस्तेजस्ततश्चाप अद्भ्यो हि वसुधोद्गता ।
मूलप्रकृतयोऽष्टौ तु जगदेतास्ववस्थितम् ॥ २८

ज्ञानेन्द्रियाण्यतः पञ्च पञ्च कर्मेन्द्रियाण्यपि ।
शब्दादिविषयाः पञ्च विकाराष्षोडशं मनः ॥ २९

श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणं ज्ञानेन्द्रियाण्यथ ।
पादौ पायुरुपस्थं च हस्तौ वाक्कर्मणामपि ॥ ३०

शब्दस्स्पर्शोऽथ रूपं च रसो गन्धस्तथैव च ।
विज्ञेयं व्यापकं चित्तं तेषु सर्वगतं मनः ॥ ३१

रसज्ञाने तु जिह्वेयं व्याहृते वाक् तथैव च ।
इन्द्रियैर्विविधैर्युक्तं सर्वैर्व्यस्तं मनस्तथा ॥ ३२

विद्यात्तु षोडशैतानि दैवतानि विभागशः ।
देहेषु ज्ञानकर्तारम् उपासीनमुपासते ॥ ३३

श्रोत्रं शब्दगुणं चैव चक्षुरग्नेर्गुणस्तथा ।
[1]तद्वद्वारिगुणा जिह्वा घ्राणं तु पृथिवीगुणः ॥ ३४

[2]स्पर्शं वायुगुणं विद्यात् सर्वभूतेषु सर्वदा ।
मनस्सत्त्वगुणं प्राहुस् सत्त्वमव्यक्तजं तथा ॥ ३५
सर्वभूतात्मभूतस्थं तस्माद्बुद्ध्येत बुद्धिमान् ॥ ३५॥

एते भावा जगत् सर्वं वहन्ति सचराचरम् ।
श्रिता विरजसं देवं यमाहुः परमं पदम् ॥ ३६॥

नवद्वारं पुरं पुण्यम् एतैर्भावैस्समन्वितम् ।
व्याप्य शेते महानात्मा तस्मात् पुरुष उच्यते ॥ ३७॥

अजरश्चामरश्चैव व्यक्ताव्यक्तोपदेशवान् ।
व्यापकस्सगुणी सूक्ष्मस् सर्वभूतगुणाश्रयः ॥ ३८॥

यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान् ।
ज्ञानात्मानं तथा विद्यात् पुरुषं सर्वजन्तुषु ॥ ३९॥

सोऽत्र वेदयते वेद्यं स शृणोति स पश्यति ।
करणं तस्य देहोऽयं स कर्ता सर्वकर्मणाम् ॥ ४०॥

अग्निर्दारुगतो यद्वद् भिन्ने दारौ न दृश्यते ।
तथैवात्मा शरीरस्थ ऋते योगान्न दृश्यते ॥ ४१॥

---

1. ख—तद्वद्रसोमगुणा जिह्वा गन्धश्च पृथिवीगुणः ।　　[पाठान्तरम्]
2. ख—नास्तीदमर्धम्

अग्निर्यथा ह्युपायेन मथित्वा दारु दृश्यते ।
तथैवात्मा शरीरस्थो योगेनैवात्र दृश्यते ॥ ४२॥

नदीष्वापो यथा युक्ता यथा सूर्ये मरीचयः ।
सन्तन्वानास्सदा यान्ति तथा देहाश्शरीरिणाम् ॥ ४३॥

स्वप्नयोगे यथैवात्मा पञ्चेन्द्रियसमागतः ।
देहमुत्सृज्य वै याति तथैवात्रोपलभ्यते ॥ ४४॥

कर्मणा व्याप्यते सर्वं कर्मणैवोपपद्यते ।
कर्मणा नीयतेऽन्यत्र स्वकृतेन बलीयसा ॥ ४५॥

स तु देही यथा देहं त्यक्त्वाऽन्यं प्रतिपद्यते ।
तथा तं सम्प्रवक्ष्यामि भूतग्रामं स्वकर्मजम् ॥* ४६॥

चतुर्विधानि भूतानि चराणि स्थावराणि च ।
अव्यक्तप्रभवान्याहुर् अव्यक्तनिधनानि च ॥ ४७॥

अव्यक्तलक्षणं विद्याद् अव्यक्तात्मात्मकं मनः ॥ ४८

यथाऽश्वत्थः कर्णिकायाम् अन्तर्भूतो महाद्रुमः ।
निष्पन्नो दृश्यते व्यक्तम् अव्यक्तात् सम्भवस्तथा ॥ ४९

अभिद्रवत्ययस्कान्तम् अयोनि[1]श्चेतनावुभौ ॥ ४९॥

स्वभावहेतुजा भावा यद्वदन्यदपीदृशम् ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. अ—श्चेतनं यथा

तद्वदव्यक्तजा भावाः कर्तुः करणलक्षणाः ॥ ५०॥
अचेतनाश्चेतयितुः कारणादभिसङ्गताः ॥ ५१

न भूः खं द्यौर्न भूतानि नर्षयो नासुरास्सुराः ।
नान्यदासीदृते जीवम् आसेदुर्न तु संहतिम् ॥ ५२

सर्वं नित्यं सर्वगतं मनो हेतुत्वलक्षणम् ।
अज्ञानकर्म निर्दिष्टम् एतत् कारणलक्षणम् ॥ ५३

न कारणेन संयुक्तं कार्यं सङ्ग्रहकारकम् ।
येन तद्वर्तते चक्रम् अनादिनिधनं महत् ॥ ५४

अव्यक्तनाभं व्यक्तारं विकारपरिमण्डलम् ।
क्षेत्रज्ञाधिष्ठितं चक्रं स्निग्धाक्षं वर्तते ध्रुवम् ॥ ५५

स्निग्धत्वात्तिलवत् सर्वं चक्रेऽस्मिन् पीड्यते जगत् ।
तिलपीडैरिवाक्रम्य भोगैरज्ञानसम्भवैः ॥ ५६

कर्म तत् कुरुते तेषाम् अहङ्कारपरिग्रहम् ।
कार्यकारणसंयोगे स हेतुरुपपादितः ॥ ५७

नात्येति कारणं कार्यं न कार्यं कारणं तथा ।
कार्ये ह्यनूनकरणे कालो भवति कारणम् ॥ ५८

हेतुयुक्ताः प्रकृतयो विकाराश्च परस्परम् ।
अन्योन्यमभिवर्तन्ते पुरुषाधिष्ठितास्सदा ॥ ५९

सत्त्वरजस्तामसैर्भावैर् युक्तो हेतुबलान्वितः ।

क्षेत्रज्ञमेवानुयाति पांसुर्वातेरितो यथा ॥ ६०

न स तैस्स्पृश्यते भावैर् न ते तेन महात्मना ।
सरजस्कोऽरजस्कश्च स वै वायुर्यथा भवेत् ॥ ६१

तथैतदन्तरं विद्यात् सत्त्वक्षेत्रज्ञयोर्बुधः ।
अभ्यासात् सततं युक्तो न गच्छेत् प्रकृतिं पुनः ॥ ६२

सन्देहमेतमुत्पन्नम् अच्छिनद्भगवानृषिः ।
यथावत्तां समीक्षेत कृतलक्षणसंविदम् ॥ ६३

बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ।
ज्ञानदग्धैस्तथा क्लेशैर् नात्मा सम्बध्यते पुनः ॥* ६४

निवृत्तिलक्षणो धर्मो येषां समुपपद्यते ।
तेषां विज्ञाननिष्ठानाम् अन्यत् तत्त्वं न रोचते ॥ ६५

दुर्लभा वेदविद्वांसो वेदान्तेषु व्यवस्थिताः ।
[1]प्रयोजनं महत्त्वं तु मार्गमिच्छन्ति सत्कृतम् ॥ ६६

सद्भिराचरितत्वात् तु वृत्तमेतदगर्हितम् ।
इयं सा बुद्धिरन्यैव यया यायात् परां गतिम् ॥ ६७

शरीरवानुपादत्ते मोहात् सर्वं परिग्रहम् ।
कामक्रोधादिभिर्भावैर् युक्तो राजसतामसैः ॥ ६८

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
1. क-ख-ग—प्रयोजनमतत्त्वं च

नाशुद्धमाचरेत्तस्माद् अभीप्सन् देहयापनम् ।
कर्मणो [1]विचयं कुर्वन् न लोकानाप्नुयाच्छुभान् ॥ ६९

लोहयुक्तं यथा हेम विपक्वं न विराजते ।
तथाऽपक्वकषायाख्यं विज्ञानं न प्रकाशते ॥ ७०

यश्चाधर्मं चरेन्मोहात् कामलोभावनुप्लवन् ।
धर्म्यं पन्थानमुत्क्रम्य सानुबन्धो विनश्यति ॥ ७१

शब्दादीन् विषयांस्तस्मान्न संरागादुपप्लवेत् ।
क्रोधो हर्षो विषादश्च जायन्ते हि परस्परात् ॥ ७२

पञ्चभूतात्मके देहे सत्त्वराजसतामसे ।
कमभिष्टुवते चायं किं वा क्रोशति किं वदेत् ॥ ७३

स्पर्शरूपरसाद्येषु सङ्गं गच्छन्ति बालिशाः ।
नावगच्छन्त्यविज्ञानाद् [2]आत्मानं पार्थिवं गुणम् ॥ ७४

मृन्मयं शरणं यद्वन्मृदैव परिलिप्यते ।
पार्थिवोऽयं तथा देहो मृद्विकारैर्न नश्यति ॥ ७५

मधु तैलं पयस्सर्पिर् मांसानि लवणं गुडम् ।
धान्यानि फलमूलानि मृद्विकारास्सहाम्भसा ॥ ७६

यद्वत् कान्तारमातिष्ठन्नौत्सुक्यं समनुव्रजेत् ।
श्रमादाहारमादद्याद् अस्वाद्वपि हि यापयन् ॥ ७७

---

1. अ-क-ख-घ—विवरं  2. ग—आत्मजं

तद्वत् संसारकान्तारम् आतिष्ठन् शमतत्परः ।
यात्रार्थमद्यादाहारं व्याधितो भेषजं यथा ॥ ७८

सत्यशौचार्जवत्यागैर् वर्चसा विक्रमेण च ।
क्षान्त्या धृत्या च मत्या च मनसा तपसैव च ॥ ७९
भावान् सर्वान् यथावृत्तान् संसहेत यथाक्रमम् ॥ ७९॥
शान्तिमिच्छन्नदीनात्मा संयच्छेदिन्द्रियाणि च ॥ ८०

सत्त्वेन रजसा चैव तमसा चैव मोहिताः ।
चक्रवत् परिवर्तन्ते ह्यज्ञानाज्जन्तवो भृशम् ॥ ८१

तस्मात् सम्यक् परीक्षेत दोषानज्ञानसम्भवान् ।
अज्ञानप्रभवं नित्यम् अहङ्कारं परित्यजेत् ॥ ८२

महाभूतानीन्द्रियाणि गुणास्सत्त्वं रजस्तमः ।
त्रैलोक्यं सेश्वरं सर्वम् अहङ्कारे प्रतिष्ठितम् ॥ ८३

यथैव नियतः कालो दर्शयत्यार्तवान् गुणान् ।
तद्वद्भूतेष्वहङ्कारं विद्याद्भूतप्रवर्तकम् ॥ ८४

सम्मोहकं तमो विद्यात् कृष्णमज्ञानसम्भवम् ।
प्रीतिदुःखनिबद्धांश्च समस्तांस्त्रीनथो गुणान् ॥ ८५
सत्त्वस्य रजसश्चैव तमसश्च निबोध तान् ॥ ८५॥

प्रसादो हर्षजः प्रीतिर् अस[1]म्मोहस्स्मृतिर्मतिः ।

---

1. क-घ—मोहः ख—न्देहो धृतिः क्षमा ग—मोहस्स्मृतिर्धृतिः

एतान् सत्त्वगुणान् विद्याद् इमान् राजसतामसान् ॥ ८६॥

कामः क्रोधः प्रमादश्च लोभमोहौ भयं क्लमः ।
विषादशोकावरतिर् मानदर्पावनार्यता ॥ ८७॥

दोषाणामेवमादीनां परीक्ष्य गुरुलाघवम् ।
विमृशेदात्मसंस्थानम् एकैकमनुसन्ततम् ॥ ८८॥

शिष्यः—

के दोषा मनसा त्यक्ताः के बुद्ध्या शिथिलीकृताः ।
के पुनः पुनरायान्ति के मोहादचला इव ॥ ८९॥

[1]केषां बलाबलं बुद्ध्या हेतुभिर्विमृशेद्बुधः ।
[2]एतन्मे संशयं तात छेत्तुमर्हस्यशेषतः ॥ ९०॥

गुरुः—

दोषैर्मूलादवच्छिन्नैर् विशुद्धात्मा विमुच्यते ॥ ९१
[3]ते पुनः पुनरायान्ति ते मोहादचला इव ॥ ९१॥

विनाशयति सम्भूतम् अयस्मयमयो यथा ।
[4]तथाऽकृतात्मा सहजैर् दोषैर्नश्यति तामसैः ॥ ९२॥

[5]सहजैरविशुद्धात्मा दोषैर्नश्यति राजसैः ॥ ९३
राजसं तामसं चैव शुद्धात्मा कालसम्भवम् ।

---

1. ख—अर्धचतुष्टयं नास्ति
2. ख—नास्तीदमर्धम्
3. ख—नास्तीदमर्धम्
4. ख—नास्तीदमर्धम्
5. ख—नास्तीदमर्धम्

शमयेत् सत्त्वमास्थाय स्वबुद्ध्या केवलं द्विजः ॥　　९४

तत् सर्वं देहिनां बीजं सर्वमात्मवतां क्षमम् ।
तस्मादात्मवता वर्ज्यं रजश्च तम एव च ॥　　९५

रजस्तमोभ्यां निर्मुक्तं सत्त्वं निर्मलतामियात् ।
आहारान् वर्जयेन्नित्यं राजसांस्तामसानपि ॥　　९६

अथ वा मन्त्रवद्ब्रूयुर् मांसादानं यजुष्कृतम् ।
स वै हेतुरनादाने शुद्धधर्मानुपालने ॥　　९७

रजसा धर्मयुक्तानि कार्याण्यपि समश्नुयात् ॥　　९७॥

अर्थयुक्तानि चात्यर्थे सर्वान् कामांश्च सेवते ।
[1]तमसा लोभयुक्तानि क्रोधजानि च सेवते ॥　　९८॥

हिंसाविहाराभिरतस् तन्द्रीनिद्रासमन्वितः ।
सत्त्वस्थस्सात्त्विकान् भावाञ् शुद्धान् पश्यत्यमोहितः ॥ ९९॥

स देही विमलश्श्रीमान् [2]योगबुद्धिसमन्वितः ॥*　　१००

रजसा साध्यते मोहस् तमश्चैव द्विजर्षभ ।
क्रोधलोभौ भयं दर्प एतेषां सादनाच्छुचिः ॥　　१०१

परमं परमात्मानं देवमक्षरमव्ययम् ।

---

1. ख—नास्तीदमर्धम्
2. ख—श्रद्धाविद्या　　ग—योगी बुद्धि
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

विष्णुमव्यक्तसंस्थानं विशुद्धं देवमाप्नुयात् ॥　　१०२

तस्य मायापिनद्धाङ्गा ज्ञानभ्रष्टा निराशिषः ।
मानवा ज्ञानसम्मोहात् तत्तत्कामं प्रयान्ति वै ॥　　१०३

[1]कामात् क्रोधमवाप्याथ [2]लोभमोहौ च मानवाः ।
[3]मानाद्दर्पमहङ्कारम् अहङ्कारात् ततः क्रियाः ॥　　१०४

क्रियाभिस्स्नेहसम्बन्धं स्नेहाच्छोकमनन्तकम् ॥　　१०४॥

अथ दुःखसमारम्भाञ् जराजन्मकृतश्रमः ।
जन्मनो गर्भवासं तु शुक्लशोणितसम्भवम् ॥　　१०५॥

पुरीषमूत्रविक्लेदं शोणितप्रभवाविलम् ॥　　१०६

तृष्णाभिभूतस्तैर्बद्धस् तानेवाभिपरिप्लवन् ।
संसारतन्त्रवाहिन्यस् तत्र बुद्ध्येत योषितः ॥　　१०७

प्रकृत्या क्षेत्रभूतास्ता नराः क्षेत्रज्ञलक्षणाः ।
तस्मादेता विशेषेण नरा नेयुर्विपश्चितः ॥　　१०८

कृत्या ह्येता घोररूपा मोहयन्त्यविचक्षणम् ।
रजसा निहिता मूर्तिर् इन्द्रियाणां सनातनी ॥　　१०९

---

1. ख—शान्तं मे संशयं तात छेत्तुमर्हस्यसंशयः ।

भीष्मः—

गौरवं तु गुणानां स्यात् तद्धेतूनां बलाबलात् ॥ [अधिकः पाठः].

2. ग—लोभमानौ　　घ—मोहमानो

3. घ—नास्तीदमर्धम्

तस्मात् तर्षात्मकाद्रागाद् बीजाज्जायन्ति जन्तवः ॥ १०९॥

स्वदेहजानस्वसंज्ञान् यद्वद्दुःखात् क्रिमींस्त्यजेत् ।
स्वसंज्ञानस्वकांस्तद्वत् सुतसंज्ञान् क्रिमींस्त्यजेत् ॥ ११०॥

शुक्लतो रसतश्चैव देहाज्जायन्ति जन्तवः ।
स्वभावात् कर्मयोगाद्वा तानुपेक्षेत बुद्धिमान् ॥ १११॥

रजस्तमसि पर्यस्तं सत्त्वं तमसि संस्थितम् ।
ज्ञानाधिष्ठितमज्ञानं बुद्ध्यहङ्कारलक्षणम् ॥ ११२॥

तद्बीजं देहिनामाहुस् तत्संस्थं जीवबन्धनम् ।
कर्मणा कालयुक्तेन संसारपरिवर्तकम् ॥ ११३॥

रमतेऽयं यथा स्वप्ने मनसा देहवानिव ।
कर्मगर्भैर्गुणैर्देही गर्भे तदुपपद्यते ॥ ११४॥

कर्मणा बीजभूतेन चोद्यते यद्यदिन्द्रियम् ।
जायते तदहङ्कारा‌द् रागयुक्तेन चेतसा ॥ ११५॥

शब्दरागाच्छ्रोत्रमस्य जायते भावितात्मनः ।
रूपरागात् तथा चक्षुर् घ्राणं गन्धजिघृक्षया ॥ ११६॥

संस्पर्शेभ्यस्तथा वायुः प्राणापानव्यपाश्रयः ।
व्यानोदानसमानाश्च पञ्चधा देहयापनम् ॥ ११७॥

स जातैर्जायते गात्रैः कर्मजैर्ब्रह्मणा वृतः ।

दुःखाद्यन्तैर्दुःखमध्यैर् नरश्शारीरमानसैः ॥　　११८॥

दुःखं विद्यादुपादानाद् अभिमानाच्च वर्धते ।
त्यागात् तेभ्यो निरोधस्स्यान्निरोधज्ञो विमुच्यते ॥　　११९॥

इन्द्रियाणां रजस्येव प्रभवप्रलयावुभौ ।
परीक्ष्य सञ्चरेद्विद्वान् यथावच्छास्त्रचक्षुषा ॥　　१२०॥

ज्ञात्वेन्द्रियाणीन्द्रियार्थान् नोपसर्पन्त्यतर्षुलाः ।
ज्ञातैश्च करणैर्देही न देहं पुनरर्हति ॥*　　१२१॥

अत्रोपायं प्रवक्ष्यामि यथावच्छास्त्रचक्षुषा ।
तद्विज्ञानाच्चरन् राजन् प्राप्नोति परमां गतिम् ॥　　१२२॥

सर्वेषामेव भूतानां पुरुषश्श्रेष्ठ उच्यते ।
पुरुषेभ्यो द्विजानाहुर् द्विजेभ्यो [1]मन्त्रदर्शिनः ॥　　१२३॥

सर्वभूतविशिष्टास्ते सर्वज्ञास्सर्वदर्शिनः ।
ब्राह्मणा वेदतत्त्वज्ञास् तत्त्वार्थगतिनिश्चयाः ॥　　१२४॥

नेत्रहीनो यथा ह्येकः कृच्छ्राणि लभतेऽध्वनि ।
ज्ञानहीनस्तथा लोके तस्माज्ज्ञानविदोऽधिकाः ॥　　१२५॥

तांस्तानुपासते धर्मान् धर्मकामा यथागमम् ।
न त्वेषामर्थसामान्यम् अन्तरेण गुणानिमान् ॥　　१२६॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. ख—ब्रह्म

वाग्देहमनसां शौचं क्षमा सत्यं धृतिस्स्मृतिः ।
सर्वधर्मेषु धर्मज्ञा ज्ञापयन्ति गुणानिमान् ॥ १२७॥

यदिदं ब्रह्मणो रूपं ब्रह्मचर्यमिति स्मृतम् ।
परं तत् सर्व[1]धर्मेभ्यस् तेन यान्ति परां गतिम् ॥ १२८॥

लिङ्गसंयोगहीनं यच् छरीरं स्पर्शवर्जितम् ।
श्रोत्रेणाश्रवणं चैव चक्षुषा चाप्यदर्शनम् ॥ १२९॥

वाक्सम्भाषाप्रवृत्ता च यन्मनः परिवर्जितम् ।
बुद्ध्या नाध्यवसायश्च ब्रह्मचर्यमकल्मषम् ॥ १३०॥

सम्यग्वृत्तिर्ब्रह्मलोकं प्राप्नुयान्मध्यमस्सुरान् ।
द्विजाग्र्यो जायते विद्वान् राजर्सीं वृत्तिमास्थितः ॥ १३१॥

सुदुष्करं ब्रह्मचर्यम् उपायं तत्र मे शृणु ।
सम्प्रवृत्तमुदीर्णं च निगृह्णीयाद्द्विजो मनः ॥ १३२॥

योषितां न कथा श्राव्या न निरीक्ष्या निरम्बराः ।
कथञ्चिद्दर्शनादासां दुर्बलानां विशेद्रजः ॥ १३३॥

रागोत्पत्तौ चरेत् कृच्छ्रम् अह्नस्त्रिः प्रविशेदपः ।
मग्नस्त्वप्स्वेव मनसा त्रिर्जपेदघमर्षणम् ॥ १३४॥

पाप्मानं निर्दहेदेवम् अन्तर्भूतं रजोमयम् ।
ज्ञानयुक्तेन मनसा सन्ततेन विचक्षणः ॥ १३५॥

---

1. क-ग-घ—भूतेभ्यस्

कुणपामेध्यसंयुक्तं यद्वदच्छिद्रबन्धनम् ।
तद्वद्देहगतं विद्याद् आत्मानं [1]देहबन्धनम् ॥ १३६॥

वातपित्तकफान् रक्तं त्वङ्मांसं स्नायु चास्थि च ।
मज्जां चैव सिराजालैस् तर्पयन्ति रसं नृणाम् ॥ १३७॥

दश विद्याद्धमन्योऽत्र पञ्चेन्द्रियगुणावहाः ।
याभिस्सूक्ष्माः प्रतायन्ते धमन्योऽन्यास्सहस्रशः ॥ १३८॥

एवमेतास्सिरा नद्यो रसोदा देहसागरम् ।
तर्पयन्ति यथाकालम् आपगा इव सागरम् ॥ १३९॥

मध्ये च हृदयस्यैका सिरा तत्र मनोवहा ।
शुक्रं सङ्कल्पजं नृणां सर्वगात्रैर्विमुञ्चति ॥ १४०॥

सर्वगात्रप्रतायिन्यस् तस्या ह्यनुगतास्सिराः ।
नेत्रयोः प्रतिपद्यन्ते वहन्त्यस्तैजसं गुणम् ॥ १४१॥

पयस्यन्तर्हितं सर्पिर् यद्वन्निर्मथ्यते खजैः ।
शुक्रं निर्मथ्यते तद्वद् देहसङ्कल्पजैः खजैः ॥ १४२॥

स्वप्नेऽप्येवं यथाऽभ्येति मनस्सङ्कल्पजैर्द्विज ।
शुक्रमस्पर्शजं देहात् सृजत्यस्य मनोवहा ॥ १४३॥

महर्षिर्भगवानत्रिर् वेद तच्छुक्रसम्भवम् ।
नृबीजमिन्द्रदैवत्यं तस्मादिन्द्रियमुच्यते ॥ १४४॥

---

1. ग—देहवर्धनम्

ये वै शुक्लगतिं विद्युर् भूतसङ्घातकारिकाम् ।
विरागा दग्धदोषास्ते नाप्नुयुर्देहसम्भवम् ॥ १४५॥

गुणानां साम्यमापद्य मनस्येव मनो दधत् ।
देहकर्म नुदन् प्राणान् अन्तकाले विमुच्यते ॥ १४६॥

भविता मनसो ज्ञानं मन एव प्रजायते ।
ज्योतिष्मद्विरजो दिव्यं मन्त्रसिद्धं महात्मनाम् ॥ १४७॥

तस्मात्तदविघाताय कर्म कुर्यादकल्मषम् ।
रजस्तमश्च हित्वैव न तिर्यग्गतिमाप्नुयात् ॥ १४८॥

तरुणाधिगतं ज्ञानं जरादुर्बलतां गतम् ।
परिपक्वबुद्धिः कालेन आदत्ते मानसं बलम् ॥ १४९॥

सुदुर्गमिह पन्थानम् आश्रित्य गुणवर्धनम् ।
यथा पश्येत् तथा दोषान् अतीत्यामृतमश्नुते ॥* १५०॥

दुरन्तेष्विन्द्रियार्थेषु सक्तास्सीदन्ति जन्तवः ।
ये त्वसक्ता महात्मानस् ते यान्ति परमां गतिम् ॥ १५१॥

जन्ममृत्युजरादुःखैर् व्याधिभिर्मनसः क्लमैः ।
दृष्ट्वेमं सन्ततं लोकं घटेन्मोक्षाय बुद्धिमान् ॥ १५२॥

वाङ्मनोभ्यां शरीरेण शुचिस्स्यादनहङ्कृतः ।
प्रशान्तो ज्ञानवान् भिक्षुर् निरपेक्षश्चरेत् सुखम् ॥ १५३॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

अथ वा मनसस्सङ्गं पश्येद्भूतानुकम्पया ।
अत्राप्युपेक्षां कुर्वीत ज्ञात्वा कर्मवशं जगत् ॥ १५४॥

यत् कृतं प्राक् छुभं कर्म पापं वा तदुपाश्नुते ।
तस्माच्छुभानि कर्माणि कुर्याद्वा बुद्धिकर्मभिः ॥ १५५॥

अहिंसा सत्यवचनं सर्वभूतेषु चार्जवम् ।
क्षमा दयाऽप्रमादश्च यस्यैते स सुखी भवेत् ॥ १५६॥

यश्चैनं परमं धर्मं सर्वभूतसुखावहम् ।
दुःखान्निवारणं वेद तत्त्वज्ञस्स सुखी भवेत् ॥ १५७॥

तस्मात् समाहितो भूत्वा मनो भूतेषु धारयेत् ।
नापध्यायेन्न स्पृहयेन्न बुद्ध्या चिन्तयेदसत् ॥ १५८॥

अथामोघप्रयत्नेन मनो ज्ञाने प्रवर्तयेत् ।
[1]विवेचयित्वा तद्वाक्यं धर्मसूक्ष्ममवेक्ष्य च ॥ १५९॥

सत्यां वाचमहिंस्रां च वदेदनपकारिणीम् ।
कल्कापेतामपरुषाम् अनृशंसामपैशुनाम् ॥ १६०॥

[2]विवक्षता हि सद्वाच्यं धर्मसूक्ष्ममवेक्षता ।
ईदृगल्पं च वक्तव्यम् अविक्षिप्तेन चेतसा ॥ १६१॥

---

1. ग-घ—नास्तीदमर्धम्
2. ख-ग—नास्तीदमर्धम्

वाक्[1]प्रबन्धान् हि संरोषाद् विरुद्धान् व्याहरेद्यदि ।
बुद्ध्या ह्यनिगृहीतेन मनसा कर्म तामसम् ॥ १६२॥

रजोभूतैर्हि करणैः कर्माणि प्रतिपद्यते ।
दुःखं प्राप्य च लोकेऽस्मिन् नरकायोपपद्यते ॥ १६३॥

तस्मान्मनोवाक्शरीरैर् आचरेद्धर्म्यमात्मनः ॥ १६४

प्रकीर्ण एष भारो हि यद्धद्धार्येत दस्युभिः ।
प्रतिलोमां दिशं बुद्ध्वा संसारमबुधस्तथा ॥ १६५

तानेव च यथा दस्यून् हत्वा गच्छे[2]च्छुभां दिशम् ।
तथा रजस्तमःकर्माण्युत्सृज्य प्राप्नुयात् सुखम् ॥ १६६

निस्सन्दिग्धमनीहो वै मुक्तस्सर्वपरिग्रहैः ।
विविक्तचारी लघ्वाशी तपस्वी नियतेन्द्रियः ॥ १६७

ज्ञानदग्धपरिक्लेशः प्रयोगरतिरात्मवान् ।
निष्प्रचारेण मनसा परं तदधिगच्छति ॥ १६८

धृतिमानात्मविद् बुद्धिं निगृह्णीयादसंशयम् ।
मनो बुद्ध्या निगृह्णीयाद् विषयान् मनसाऽऽत्मनः ॥ १६९

निगृहीतेन्द्रियस्यास्य कुर्वाणस्य मनो वशे ।

---

1. ख—प्रबन्धो हि संरागाद्विरागाद्
   ग—वाक्प्रसङ्गं हि संरागाद्विरागाद्या

2. ख-ग—च्छिवां

देवतास्ताः प्रसीदन्ति हृष्टा यान्ति तमीश्वरम् ॥ १७०

ताभिस्संयुक्तमनसो ब्रह्म तत् सम्प्रकाशते ।
शनैश्चोपगते सत्त्वे ब्रह्मभूयाय कल्पते ॥ १७१

अथ वा न प्रवर्तेत योगतन्त्रैरुपक्रमेत् ।
योगतन्त्रमयं तन्त्रं वृत्तं स्यात् तत्तदाचरेत् ॥ १७२

कणपिण्याककुल्माषशाकयावकसक्तवः ।
तथा मूलफलं भैक्षं पर्यायेणोपयोजयेत् ॥ १७३

आहारनियमं चैव देशे काले च सात्त्विकः ।
तत् परीक्ष्यानुवर्तेत यत् प्रवृत्त्यनुवर्तकम् ॥ १७४

प्रवृत्तं नोपरुन्धेत शनैरग्निमिवेन्धयेत् ।
ज्ञानैधितं ततो ज्ञानम् अर्कवत् सम्प्रकाशते ॥ १७५

ज्ञानाधिष्ठितमज्ञानं त्रीँल्लोकानधितिष्ठति ।
विज्ञानानुगतं ज्ञानम् अज्ञानादपकृष्यते ॥ १७६

पृथक्त्वात् सम्प्रयोगाच्च नासूयुर्वेद शाश्वतम् ।
स तयोरपवर्गज्ञो वीतरागो विमुच्यते ॥ १७७

वयोतीतो जरामृत्यू जित्वा ब्रह्म सनातनम् ।
अमृतं तदवाप्नोति यत्तदक्षरमव्ययम् ॥* १७८

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

निष्कल्मषं ब्रह्मचर्यम् इच्छता चरितुं सदा ।
निद्रा सर्वात्मना त्याज्या स्वप्नदोषमवेक्षता ॥ १७९

स्वप्ने हि रजसा देही तमसा चाभिभूयते ।
[1]देहान्तरमिवापन्नश् चरत्यपगतस्मृतिः ॥ १८०

ज्ञानाभ्यासाज्जागरिता जिज्ञासार्थं निरन्तरम् ।
विज्ञानाभिनिवेशात् तु जागर्त्यप्यनिशं सदा ॥ १८१

अत्राह को न्वयं भावस् स्वप्ने विषयवानिव ।
प्रलीनैरिन्द्रियैर्देही वर्तते देहवानिव ॥ १८२

अत्रोच्यते यथा ह्येतद् वेद योगेश्वरो हरिः ।
तथैतदुपपन्नार्थं वर्णयन्ति महर्षयः ॥ १८३

इन्द्रियाणां श्रमात् स्वप्नम् आहुस्सर्वगतं मनः ।
मनसस्त्वप्रलीनत्वात् तत्तदाहुर्निदर्शनम् ॥ १८४

कार्ये चासक्तमनसस् सङ्कल्पो जाग्रतो ह्यपि ।
यद्वन्मनोरथैश्वर्यं स्वप्ने तद्वन्मनोगतम् ॥ १८५

संसाराणामसङ्ख्यानां कामात्मा तदुपाश्नुते ।
मनस्यन्तर्हितं सर्वं वेद [2]सोत्तमपूरुषः ॥ १८६

गुणानामपि यद्यत्तत् कर्म जानात्युपस्थितम् ।

1. ख—देशा 2. ग—सोऽभ्तरपूरुषः

[1]तत्तच्छंसन्ति भूतानि मनो यद्भावितं तथा ॥ १८७
ततस्तदुपवर्तन्ते गुणा राजसतामसाः ।
सात्त्विका वा यथायोगम् आनन्तर्यफलोदयाः ॥ १८८
ततः पश्यन्त्यसम्बन्धान् वातपित्तकफोत्तरान् ।
रजस्तमोभवैर्भावैस् तदप्याहुर्दुरन्वयम् ॥ १८९
प्रसन्नैरिन्द्रियैर्यैर्यद्यत् सङ्कल्पयति मानसम् ।
तत्तत् स्वप्नेऽप्युपरते मनो बुद्धिर्निरीक्षते ॥ १९०
व्यापकं सर्वभूतेषु [2]वर्तते दीपवन्मनः ।
मनस्यन्तर्हितं द्वारं देहमास्थाय [3]मानुषम् ॥ १९१
यत्तत् सदसदव्यक्तं स्वपित्यस्मिन् निदर्शनम् ।
सर्वभूतात्मभूतस्थं तदध्यात्मगुणं विदुः ॥ १९२
लिप्सेत मनसा यश्च सङ्कल्पादैश्वरं गुणम् ।
आत्मप्रभावात्तं विन्देत् सर्वा ह्यात्मनि देवताः ॥ १९३
एवं हि तपसा युञ्ज्याद् अर्कवत्तमसः परम् ।
त्रैलोक्यप्रकृतिं देही तमसोऽन्ते महेश्वरम् ॥ १९४
तपो ह्यधिष्ठितं देवैस् तपोघ्नमसुरैस्तमः ।
एतद्दैवासुरैर्गुप्तं ज्ञानाज्ञानस्य लक्षणम् ॥ १९५

---

1. ग—तत्तच्छंसति भूतं यन्मनो यद्भावि तत्तथा । [पाठान्तरम्]
2. ग—वर्ततेऽप्रतिघं मनः 3. ख-ग-घ—मानसम्

सत्त्वं रजस्तमश्चेति देवासुरगुणान् विदुः ।
सत्त्वं देवगुणं विद्याद् इतरावासुरौ गुणौ ॥ १९६

ब्रह्म तत् परमं वेद्यम् अमृतं ज्योति[1]रक्षरम् ।
ये विदुस्सात्त्विकात्मानस् ते यान्ति परमां गतिम् ॥ १९७

हेतुमच्छक्यमाख्यातम् एतावज्ज्ञानचक्षुषा ।
प्रत्याहारेण वा शक्यम् अव्यक्तं ब्रह्म वेदितुम्* ॥ १९८

न स वेद परं [2]ब्रह्म यो न वेद चतुष्टयम् ।
व्यक्ताव्यक्ते [3]प्रवृत्तं च निवृत्तं धर्ममुत्तमम् ॥ १९९

व्यक्तं मृत्युपदं विद्याद् अव्यक्तममृतं पदम् ।
निवृत्तिलक्षणं धर्मम् [4]ऋषिर्नारायणोऽब्रवीत् ॥ २००

तत्रैवावस्थितं सर्वं त्रैलोक्यं सचराचरम् ।
निवृत्तिलक्षणं धर्मम् अव्यक्तं ब्रह्म शाश्वतम् ॥ २०१

प्रवृत्तिलक्षणं धर्मं प्रजापतिरथाब्रवीत् ।
अत्रैवावस्थितं सर्वं त्रैलोक्यं सचराचरम् ॥ २०२

प्रवृत्तिः पुनरावृत्तिर् निवृत्तिः परमा गतिः ।

---

1. क-ग-घ—रुत्तमम्

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

2. ख-ग—धर्मं

3. अ-क-ग-घ—च यत्तत्त्वं सम्प्रोक्तं परमर्षिणा

4. अ—इतो द्वौ पादौ न स्तः

तां गतिं परमामेति निवृत्तिपरमो मुनिः ॥ २०३

ज्ञानतत्त्वपरो नित्यं शुभाशुभनिदर्शनः ॥ २०३॥

तदेवमेतौ विज्ञेयावव्यक्तपुरुषावुभौ ।
अव्यक्तपुरुषाभ्यां तु यत् स्यादन्यन्महत्तरम् ॥ २०४॥

तं विशेषमवेक्षेत विशेषेण विचक्षणः ।
अनाद्यन्तावुभावेतावलिङ्गौ चाप्युभावपि ॥ २०५॥

उभौ नित्यावनुचरौ महद्भ्यश्च महत्तरौ ।
समानमेतदुभयोर् एवं ह्यन्यद्विशेषणम् ॥ २०६॥

प्रकृत्या सर्गधर्मिण्या तथा त्रिगुणसत्तया ।
विपरीतमतो विद्यात् क्षेत्रज्ञस्य स्वलक्षणम् ॥ २०७॥

प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम् ।
[1]क्षेत्रज्ञमाहुर्जीवं तु कर्तारं गुणसंवृतम् ॥ २०८॥

अग्राह्यौ पुरुषावेतावलिङ्गत्वादसङ्गिनौ ।
संयोगलक्षणोत्पत्तिः कर्मजा गृह्यते यया ॥ २०९॥

करणैः कर्मनिर्वृत्तैः कर्ता यत्तद्विचेष्टते ।
कीर्त्यते शब्दसंज्ञाभिः कोऽहमेष ह्यसाविति ॥ २१०॥

उष्णीषवान् यथा वस्त्रैस् त्रिभिर्भवति संवृतः ।
संवृतोऽयं तथा देही सत्त्वराजसतामसैः ॥ २११॥

---

1. ख—नास्तीदमर्धम्

तस्माच्चतुष्टयं वेद्यम् एतैर्हेतुभिराचितम् ।
तथासंज्ञो ह्ययं सम्यग् अन्तकाले न मुह्यति ॥ २१२॥

श्रियं दिव्या[1]श्रयां दिव्याम् अभिप्रेप्सुमनाऽशुचिः ।
शारीरैर्नियमैरुग्रैश् चरेन्निष्कल्मषं तपः ॥ २१३॥

त्रैलोक्यं तपसा व्याप्तम् अन्तर्भूतेन भास्वता ।
सूर्याचन्द्रमसौ चैव भासतस्तपसा दिवि ॥ २१४॥

[2]प्रतापस्तपसो ज्ञानं लोके संशब्दितं तपः ।
रजस्तमोघ्नं यत् कर्म तपसस्तत् स्वलक्षणम् ॥ २१५॥

ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ।
वाङ्मनोनियमस्सम्यङ्मानसं तप उच्यते ॥ २१६॥

विधिज्ञेभ्यो द्विजातिभ्यो ग्राह्यमन्नं तपस्विभिः ।
आहारनियमेनास्य पाप्मा नश्यति राजसः ॥ २१७॥

वैमनस्यं च विषये यान्त्यस्य करणानि च ।
तस्मात् तन्मात्रमादद्याद् यावदस्य प्रयोजनम् ॥ २१८॥

अन्तकाले च [3]नोपेक्षां शनैः कुर्यादनातुरः ।
एवं युक्तेन मनसा ज्ञानं समुपपद्यते ॥ २१९॥

---

1. ख-ग—मभिप्रेप्सुर्ब्रह्म वाङ्मनसा शुचिः
2. ख—प्रभाव ग—प्रसादस्त
3. ख-ग—नोत्कर्षात्

[1]रसवर्जो ह्ययं देही देहवाञ्छब्दवांश्चरेत् ।
काम्यैरव्याहतमतिर् वैराग्यात् प्रकृतौ स्थितः ॥　　२२०॥

आदेहादप्रमादाच्च देहान्ते विप्रमुच्यते ।
हेतुयुक्तस्सदोत्सर्गो भूतानां प्रलयस्तथा ॥　　२२१॥

परप्रत्ययसर्गे तु निश्चयश्च निवर्तते ।
एवं तत्प्रभवां प्रज्ञाम् आसते ये विपर्ययम् ॥　　२२२॥

धृत्या देहं धारयन्तो बुद्धिसंक्षिप्तचेतसः ।
स्थानेभ्यो ध्वंसमानाश्च सूक्ष्मत्वात् तदुपासते ॥　　२२३॥

[2]यथागतं च तत् सर्वं बुद्ध्या तन्नैव बुध्यते ।
देहान्तं कश्चिदन्वास्ते भावितात्मा निराश्रयः ॥　　२२४॥

युक्ता धारणया केचित् सत्यं केचिदुपासते ।
अभ्यस्यन्त्यपरे देवं विद्यासंशब्दिताक्षरम् ॥　　२२५॥

अन्तकालेऽप्युपासन्तस् तपसा दग्धकिल्बिषाः ।
सर्वे एते महात्मानो गच्छन्ति परमां गतिम् ॥　　२२६॥

सूक्ष्मं विशेषणं तेषाम् अवेक्षेच्छास्त्रचक्षुषा ।
देहं तु चरमं विद्याद् विनिर्मुक्तपरिग्रहम् ॥　　२२७॥

अन्तरिक्षादन्यतरं धारणासक्त[3]चेतसः ।

---

1. ख-ग—रजोवर्ज्यो　　2. अ—अर्धद्वयं नास्ति
3. ख—मानसम्

मर्त्यलोकाद्विमुच्यन्ते विद्यासंसक्तमानसाः ॥ २२८॥

ब्रह्मभूता विरजसस् ते यान्ति परमां गतिम् ।
एवमेकायनं धर्मम् आहुर्धर्मविदो जनाः ॥ २२९॥

यथाज्ञानमुपासन्तस् ते यान्ति परमां गतिम् ॥ २३०

कषायवर्जितं ज्ञानं येषामुत्पद्यतेऽमलम् ।
यान्ति तेऽपि पराँल्लोकान् विशुध्यन्तो यथाबलम् ॥ २३१

भगवन्तमजं दिव्यं विष्णुमव्यक्तसंज्ञितम् ।
भावेन यान्ति शुद्धा ये ज्ञानतृप्ता निराशिषः ॥ २३२

ज्ञात्वाऽऽत्मस्थं परं चैव न निवर्तन्ति तेऽव्ययाः ।
प्राप्य तत् परमं स्थानं मोदन्तेऽक्षरमव्ययम् ॥ २३३

एतावदेतद्विज्ञानम् एतदस्ति च नास्ति च ।
तृष्णाबद्धं जगत् सर्वं चक्रवत् परिवर्तते ॥ २३४

बिसतन्तुर्यथैवायम् अन्तस्थस्सन्ततो बिसे ।
तृष्णातन्तुरनाद्यन्तस् तथा देहगतस्सदा ॥ २३५

सूच्या सूत्रं यथा वस्त्रे संसारयति वायकः ।
तद्वत् संसारसूत्रं हि तृष्णासूच्या निबद्ध्यते ॥ २३६

विकारं प्रकृतिं चैव पुरुषं च सनातनम् ।
यो यथावद्विजानाति स वितृष्णो विमुच्यते ॥ २३७

प्रकाशं भगवानेतद् ऋषिर्नारायणोऽमृतम् ।
भूतानामनुकम्पार्थं जगाद जगतो हितम् ॥ २३८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥
[ अस्मिन्नध्याये २३८ श्लोकाः ]

---

## ॥ अष्टनवत्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति जनकाय पञ्चशिखोक्तनास्तिकादिमतखण्डनानुवादः ॥

---

युधिष्ठिरः—

केन वृत्तेन वृत्तज्ञो जनको मिथिलाधिपः ।
जगाम मोक्षं धर्मज्ञो भोगानुत्सृज्य बुद्धिमान् ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
येन वृत्तेन धर्मज्ञस् स जगाम महत् सुखम् ॥ २

जनको जनदेवस्तु मिथिलायां जनाधिप ।
और्ध्वदेहिकधर्माणाम् आसीद्युक्तो विचिन्तने ॥ ३

तस्य स्म शतमाचार्या वसन्ति सततं गृहे ।
दर्शयन्तः पृथग्धर्मान् नानापाषण्डवादिनः ॥ ४

न तेषां प्रेत्यभावे च प्रेत्य जातौ विनिश्चयः ।
[1]आगमस्थस्स भूयिष्ठम् आत्मतत्त्वेन तुष्यति ॥ ५

तत्र पञ्चशिखो नाम कापिलेयो महामुनिः ।
परिधावन्महीं कृत्स्नां जगाम मिथिलामपि ॥ ६

सर्वसंन्यासधर्माणां तत्त्वज्ञानविनिश्चये ।
स पर्यवसितार्थश्च निर्द्वन्द्वो नष्टसंशयः ॥ ७

[2]ऋषीणामाहुराचार्यं कामादवसितं नृषु ।
शाश्वतं सुखमत्यन्तम् अन्विच्छन्तं सुदुर्लभम् ॥ ८

यमाहुः कपिलं साङ्ख्याः परमर्षिं प्रजापतिम् ।
समेत्य तेन रूपेण विस्मापयितवान् स्वयम् ॥ ९

आसुरेः प्रथमं शिष्यं यमाहुश्चिरजीविनम् ।
पञ्चस्रोतसि यस्सत्रम् आस्ते वर्षसहस्रिकम् ॥ १०

तं समासीनमागम्य कापिलं मण्डलं महत् ।
पुरुषावस्थमव्यक्तं परमार्थमबोधयत् ॥ ११

इष्ट्वा सत्रेण संसिद्धो भूयश्च तपसाऽऽसुरिः ।
क्षेत्रक्षेत्रज्ञयोर्व्यक्तिं बुबुधे देवदर्शनः ॥ १२

यत्तदेकाक्षरं ब्रह्म नानारूपं प्रदृश्यते ।
आसुरिर्मण्डले तस्मिन् प्रतिपेदे तदव्ययम् ॥ १३

---

1. ख—अर्धचतुष्टयं नास्ति 2. ख-ग—ऋषीणामेकमाहुर्यं

तस्य पञ्चशिखश्शिष्यो मानुष्यवयसा धृतः ।
ब्राह्मणी कपिला नाम काचिदासीत् कुटुम्बिनी ॥ १४

तस्याः पुत्रत्वमागम्य स्त्रियास्स पिबति स्तनौ ।
ततस्स कापिलेयत्वं लेभे बुद्धिं च नैष्ठिकीम् ॥ १५

एतं मे भगवानाह कापिलेयस्य सम्भवम् ।
तस्य तत् कापिलेयत्वं सर्ववित्तिं च भारत ॥ १६

सामान्यं जनकं ज्ञात्वा धर्म[1]ज्ञानामनुत्तमम् ।
उपेत्य शतमाचार्यान् मोहयामास हेतुभिः ॥ १७

जनकस्त्वभिसंरक्तः कापिलेयस्य दर्शनात् ।
उत्सृज्य शतमाचार्यान् पृष्ठतोऽनुजगाम तम् ॥ १८

तस्मै परमकल्याय प्रणताय च धर्मतः ।
अब्रवीत् परमं मोक्षं यतस्साङ्ख्यं विधीयते ॥ १९

जातिनिर्वेदमुक्त्वा हि कर्मनिर्वेदमब्रवीत् ।
कर्मनिर्वेदमुक्त्वा हि सर्वनिर्वेदमब्रवीत् ॥ २०

यदर्थं कर्मसंसर्गः कर्मणां च फलोदयः ।
तदनाश्वासिकं मोहं विनाशि चलमध्रुवम् ॥ २१

दृश्यमाने विनाशे च प्रत्यक्षे लोकसाक्षिके ।
आगमात् परमस्तीति ब्रुवन्नपि पराजितः ॥ २२

---

1. ख—जिज्ञासुरुत्तमम्

[1]आत्मना ह्यात्मनः क्लेशं जन्ममृत्युजरामयम् ।
आत्मानं मन्यते मोहात् तदसम्यक् परं मतम् ॥ २३

अथ चेदेवमप्यस्ति यल्लोके नोपपद्यते ।
अजरोऽयममृत्युश्च राजाऽसौ मन्यते तथा ॥ २४

अस्ति नास्तीति चाप्येतत् तस्मिन्नसति लक्षणे ।
कमधिष्ठाय तु ब्रूयाल्लोकयात्राविनिश्चयम् ॥ २५

[2]प्रत्यक्षं हि तयोर्मूलं [3]कृतान्तश्च तयोरपि ।
[4]प्रत्यक्षेणागमो भिन्नः कृतान्तो वा न कश्चन ॥ २६

[5]यत्र तत्रानुमानं वा कथं भावयतोऽपि वा ।
नान्यो जीवश्शरीराद्धि नास्तिकानां मते मतः ॥ २७

रेतो वटस्य कणिका घृतधूमाधिवासनम् ।
जातिस्स्मृतिरयस्कान्तस् सूर्यकान्तोऽ[6]म्बिमोक्षणः ॥ २८

प्रेत्य भूत्वा व्ययश्चैव देवताभ्युपयाचनम् ।

---

1. ख—अनात्मा ह्यात्मनो मृत्युक्लेश ; ग—अनात्मा ह्यात्मनः क्लेशो
2. ग—प्रत्यक्षं ह्येतयोर्मूलं कृतान्तैतिह्ययोरपि ।
3. ख—दृष्टान्तैतिह्ययोरपि
   ग—कृतान्तैतिह्ययो ; घ—कृतान्तो वा न कश्चन ।
4. ग—प्रत्यक्षो ह्यागमोभिन्नः कृतान्तो वा न कश्चन । घ—प्रत्यक्षस्यागमो
5. अ—प्रत्यक्षं हि तयोर्मूलं कृतान्तो वा न कश्चन । [अधिकः पाठः]
6. ख-ग—ऽम्बुभक्षणम्

मृते कर्मनिवृत्तिश्च [1]प्रमाणत्वे कथं भवेत् ॥ २९

न त्वेते हेतवस्सन्ति ये केचिन्मूर्तिसंहिताः ।
अमूर्तस्य हि मूर्तेन सामान्यं नोपपद्यते ॥ ३०

अविद्याकर्मतृष्णाभिः केचिदाहुः पुनर्भवम् ।
कारणं लोभमोहौ च दोषाणां च निषेवणम् ॥ ३१

अविद्यां क्षेत्रमाहुर्हि कर्मबीजं तथा कृतम् ।
तृष्णासञ्जनितस्स्नेह एष तेषां पुनर्भवः ॥ ३२

तस्मिन् मूढे च दग्धे च देहे मरणधर्मिणि ।
[2]अन्योऽसौ म्रियते प्रेतस् तदाहुस्तत्त्वमक्षयम् ॥ ३३

यदा स्वरूपतश्चान्यो जातितश्श्रुतितोऽ[3]र्थतः ।
कथमस्मिन् स इत्येवं सम्बोधस्स्यादसंहितः ॥ ३४

एवं सति च का प्रीतिर् दानविद्यातपोबलैः ।
यद्यदाचरितं कर्म सर्व[4]मत्र प्रवर्तते ॥ ३५

यदि ह्ययमिहैवान्यैर् दुःखितैर्दुःखितो भवेत् ।
[5]सुखितैस्सुखितो वाऽपि दृष्टो ह्यस्य विनिर्णयः ॥ ३६

---

1. ख—प्रमाणमिति निश्चयः
2. ख—अन्योन्यं जायते स्नेहस्तमाहुस्तस्य सङ्क्षयः । [पाठान्तरम्]
   ग—अन्योऽसौ जायते प्रेत्य तमाहुस्सत्त्वसंप्लवम् । [पाठान्तरम्]
3. ख—ऽध्वनः
4. ख-ग—मन्यत् प्रपद्यते
5. ख—अर्धद्वयं नास्ति

यदा हि [1]मूलतो हन्याच्छरीरं न पुनर्भवेत् ।
पृथग्ज्ञानं यदन्यच्च तेनैतन्नोपपद्यते ॥ ३७

ऋतुस्संवत्सरास्तिथ्यश् शीतोष्णे च प्रियाप्रिये ।
यथा हीमानि पश्यन्ति तादृशस्सत्त्वसङ्क्षयः ॥ ३८

[2]जरयाऽभिपरीतस्य मृत्युना वा विनाशिना ।
दुर्बलं दुर्बलं पूर्वं गृह एव विनश्यति ॥ ३९

इन्द्रियाणि मनो वायुश् शोणितं मांसमस्थि च ।
आनुपूर्व्याद् विनश्यन्ति स्वं धातुमुपयान्ति च ॥ ४०

लोकयात्राविधानं च दानधर्मफलागमः ।
तदर्थं वेदशब्दाश्च व्यवहाराश्च लौकिकाः ॥ ४१

इति सम्यङ्मनस्येते बहवस्सन्ति हेतवः ।
एतदस्तीदमस्तीति न कश्चित् प्रतिपद्यते ॥ ४२

तेषां विमृशतामेवं तत्तत् समभिधावताम् ।
क्वचिन्निविशते बुद्धिस् तत्र जीर्यति वृक्षवत् ॥ ४३

एवमर्थैरनर्थैश्च दुःखितास्सर्वजन्तवः ।
आगमैरपकृष्यन्ते हस्तिनो हस्तिपैर्यथा ॥ ४४

---

1. ख—मुसलैर्हन्युः
2. घ—एतदस्तीदमस्तीति न किञ्चित्प्रतिपद्यते । [अधिकः पाठः]

अर्थांस्तथाऽत्यन्तसुखावहांश्च
　　लिप्सन्त एते बहवो विशुष्काः ।
महत्तरं दुःखमभिप्रपन्ना
　　हित्वा सुखं मृत्युवशं प्रयान्ति ॥　　४५

विनाशिनो ह्यध्रुवजीवितस्य
　　किं बन्धुभिर्मित्रपरिग्रहैश्च ।
विहाय यो गच्छति सर्वमेव
　　क्षणेन गत्वा विनिवर्तते च ॥　　४६

भूव्योमतोयानलवायवोऽपि
　　सदा शरीरं परिपालयन्ति ।
इतीदमालक्ष्य रतिः कुतो भवेद्
　　विनाशिनो ह्यस्य न कर्म विद्यते ॥　　४७

भीष्मः—

इदमनुपधिवाक्यमच्छलं
　　परमनिरामयमात्मसाक्षिकम् ।
नरपतिरभिवीक्ष्य विस्मितः
　　पुनरनुयोक्तुमिदं प्रचक्रमे ॥　　४८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥
[ अस्मिन्नध्याये ४८ श्लोकाः ]

## ॥ एकोनद्विशततमोऽध्यायः ॥*

भीष्मेण युधिष्ठिरं प्रति जनकं प्रत्युक्तपञ्चशिखवाक्यानुवादः ॥

भीष्मः—

जनको नरदेवस्तु ज्ञापितः परमर्षिणा ।
पुनरेवानुपप्रच्छ साम्पराये भवाभवौ ॥ १

जनकः—

भगवन् यदिदं प्रेत्य संज्ञा भवति कस्यचित् ।
एवं सति किमज्ञानं ज्ञानं वा किं करिष्यति ॥ २

पञ्चशिखः—

विवादादेव सिद्धोऽसौ कारणस्येव वेदना ।
चेतनो विद्यते ह्यत्र हैतुकं च मनोगतम् ॥ ३

आगमादेव सिद्धोऽसौ स्वतस्सिद्धा इति श्रुतिः ।
वर्तेते पृथगन्योन्यं न ह्यपाश्रित्य कर्मसु ॥ ४

चेतनो ह्यंशवस्तत्र स्वमूर्तं धारयन्त्यतः ।
स्वभावं पौरुषं कर्म ह्यात्मानं तमुपाश्रितम् ॥ ५

तमाश्रित्य प्रवर्तन्ते देहिनो देहबन्धनाः ॥ ५॥

गुणज्ञानमभिज्ञानं तस्य लिङ्गानुशब्दवत् ।
पृथिव्यादिषु भूतेषु तत्तदाहुर्निदर्शनम् ॥ ६॥

---

* कृष्णाचार्यमुद्रितकोशस्थ – घ–कोशपाठानुसारेणायमध्यायो मुद्रितः

आत्माऽसौ वर्तते भिन्नस् तत्र तत्र समन्वितः ।
परमात्मा तथैवैको देहेऽस्मिन्निति वै श्रुतिः ॥ ७॥

आकाशं वायुरूष्मा च स्नेहो यच्चापि पार्थिवम् ।
यथा त्रिधा प्रवर्तन्ते तथाऽसौ पुरुषस्स्मृतः ॥ ८॥

पयस्यन्तर्हितं यद्वत् तद्वद्व्याप्तं महात्मकम् ।
पूर्वं नैश्वर्ययोगेन तस्मादेतन्न शेषवान् ॥ ९॥

शब्दः कालः क्रिया देहो ममैकस्यैव कल्पना ।
स्वभावं तन्मयं त्वेदं मायारूपं तु भेदवत् ॥ १०॥

नानाख्यं परमं शुद्धं निर्विकल्पं परात्मकम् ।
लिङ्गादि देवमध्यास्ते ज्ञानं देवस्य तत्तथा ॥ ११॥

चिन्मयोऽयं हि नादाख्यश् शब्दश्चासौ मनो महान् ।
गतिमानुत सन्धत्ते वर्णमत्तत्पदान्वितम् ॥ १२॥

कायो नास्ति च तेषां वै अवकाशस्तथा परम् ।
एतेनोढा इति चाख्यातास् सर्वे ते धर्मदूषकाः ॥ १३॥

अबन्धनमविज्ञानाज् ज्ञानं तद्ध्रुवमव्ययम् ।
नानाभेदविकल्पेन येषामात्मा स्मृतस्सदा ॥ १४॥

प्रकृतेरपरस्तेषां बहवोऽप्यात्मवादिनः ।
विरोधो ह्यात्मसन्मायां न तेषां सिद्ध एव हि ॥ १५॥

अन्यदा च गृहीतै...वेदबाह्यास्ततस्स्मृताः ॥ १६

एकानेकात्मकं तेषां प्रतिषेधो हि भेदनुत् ।
तस्माद्वेदस्य हृदयम् अद्वैध्यमिति विद्धि तत् ॥ १७

वेदादृष्टेरयं लोकस् सर्वार्थेषु प्रवर्तते ।
तस्माच्च स्मृतयो जातास् सेतिहासाः पृथग्विधाः ॥ १८

न यत्र साध्यं तद्ब्रह्म नादिमध्यं न चान्तवत् ।
इन्द्रियाणि च भूरीणि परा च प्रकृतिर्मनः ॥ १९
आत्मा च परमश्शुद्धः प्रोक्तोऽसौ परमः पुमान् ॥ १९॥
उत्पत्तिलक्षणं चेदं विपरीतमथोभयोः ।
यो वेत्ति प्रकृतिं नित्यं तथा चैवात्मनस्तु ताम् ॥ २०॥
प्रदहत्येष कर्माख्यं दावोद्भूत इवानलः ॥ २१

चिन्मात्रपरमश्शुद्धस् सर्वाकृतिषु वर्तते ॥ २१॥

आकाशकल्पं विमलं नानाशक्तिसमन्वितम् ।
तापनं सर्वभूतानां ज्योतिषां मध्यमस्थितिम् ॥ २२॥
दुःखमस्ति न निर्दुःखं तद्विद्वान्न च लिप्यति ॥ २३

असावश्नाति यद्वत्तद् भ्रमरोऽश्नाति यन्मधु ।
एवमेष महानात्मा नात्मानमवबुध्यते ॥ २४

एवम्भूतस्त्वमित्यत्र स्वाधितो बुद्ध्यते परम् ।
बुधस्य बोधनं तत्र क्रियते सद्भिरित्युत ॥ २५

न बुधस्येति वै कश्चिन्न तथावच्छृणुष्व मे ॥ २५॥

शोकमस्य न गत्वा ते शास्त्राणां शास्त्रदस्यवः ।
लोकं निघ्नन्ति सम्भिन्ना ज्ञानिनोऽत्र वदन्त्युत ॥ २६॥

एवं तस्य विभोः कृत्यं धातुरस्य महात्मनः ।
क्षमन्ति ते महात्मानस् सर्वद्वन्द्वविवर्जिताः ॥ २७॥

अतोऽन्यथा महात्मानम् अन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ २८॥

तस्य संयोगयोगेन शुचिरप्यशुचिर्भवेत् ।
अशुचिश्च शुचिश्चापि ज्ञानादेहादयो यथा ॥ २९॥

दृश्यं न चैव दृष्टं स्याद् दृष्टं दृश्यं तु नैव च ॥ ३०

अतीतत्रितयास्सिद्धा ज्ञानरूपेण सर्वदा ।
एवं न प्रतिपद्यन्ते रागमोहमदान्विताः ॥ ३१

वेदबाह्या दुरात्मानस् संसारे दुःखभागिनः ।
आगमानुगतज्ञाना बुद्धियुक्ता भवन्ति ते ॥ ३२

बुद्ध्या भवति बुद्ध्या त्वं यद्बुद्धं चात्मरूपवत् ।
तमस्यन्धे न सन्देहात् परं यान्ति न संशयः ॥ ३३

नित्यनैमित्तिकान् कृत्वा पापहानिमवाप्य च ।
शुद्धसत्त्वा महात्मानो ज्ञाननिर्धूतकल्मषाः ॥ ३४

असक्ताः परिवर्तन्ते संसरन्त्यथ वायुवत् ।
न युज्यन्तेऽथ वा क्लेशैर् अहम्भावोद्भवैस्सह ॥ ३५

इतस्ततस्समाहृत्य ज्ञानं निर्वर्णयन्त्युत ।
ज्ञानान्वितस्तमो हन्याद् अर्कवत् स महामतिः ॥ ३६

एवमात्मानमन्वीक्ष्य नानादुःखसमन्वितम् ।
देहं पङ्कमले मग्नं निर्मलं परमार्थतः ॥ ३७

तमेवं सर्वदुःखात्तु मोचयेत् परमात्मवान् ।
ब्रह्मचर्यव्रतोपेतस् सर्वसङ्गबहिष्कृतः ॥ ३८
लघ्वाहारो विशुद्धात्मा परं निर्वाणमृच्छति ॥ ३८॥

इन्द्रियाणि मनो वायुश् शोणितं मांसमस्थि च ।
आनुपूर्व्याद्विनश्यन्ति स्वं धातुमुपयान्ति च ॥ ३९॥

कारणानुगतं कार्यं यदि तच्च विनश्यति ।
अलिङ्गस्य कथं लिङ्गं युज्यते तन्मृषा दृढम् ॥ ४०॥

न त्वेव हेतवस्सन्ति ये केचिन्मूर्तिसंस्थिताः ।
अमर्त्यस्य च मर्त्येन सामान्यं नोपपद्यते ॥ ४१॥

लोकदृष्टो यथा जातेस् स्वेदजः पुरुषस्त्रियाम् ।
कृतानुस्मरणात् सिद्धो वेदगम्यः परः पुमान् ॥ ४२॥
प्रत्यक्षानुगतो वेदो नामहेतुभिरिष्यते ॥ ४३

यथा शाखा हि वै शाखा तरोस्सम्बध्यते तदा ।
श्रुत्या तथा परोऽप्यात्मा दृश्यते सोऽप्यलिङ्गवान् ॥ ४४

अलिङ्गसाध्यं तद्ब्रह्म बहवस्सन्ति हेतवः ॥ ४४॥

लोकयात्राविधानं च दानधर्मफलागमः ।
तदर्थं वेदशब्दाश्च व्यवहाराश्च लौकिकाः ॥ ४५॥

इति सम्यग्ज्ञानस्यैते बहवस्सन्ति हेतवः ।
एतदस्तीदमस्तीति न किञ्चित् प्रतिदृश्यते ॥ ४६॥

तेषां विमृशतामेवं तत्तत् समभिधावताम् ।
कश्चिन्निविशते बुद्धिस् तत्र जीर्यति वृक्षवत् ॥ ४७॥

एवमर्थैरनर्थैश्च दुःखितास्सर्वजन्तवः ।
आगमैरपकृष्यन्ति हस्तिनो हस्तिपैर्यथा ॥ ४८॥

न जातु कामः कामानाम् उपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ४९॥

अर्थांस्तथाऽत्यन्तदुःखावहांश्च
लिप्सन्त एके बहवो विशुष्काः ।
महत्तरं दुःखमभिप्रपन्ना
हित्वा सुखं मृत्युवशं प्रयान्ति ॥ ५०॥

विनाशिनो ह्यध्रुवजीवितस्य
किं बन्धुभिर्मन्त्रपरिग्रहैश्च ।
विहाय यो गच्छति सर्वमेव
क्षणेन गत्वा न निवर्तते च ॥ ५१॥

खं भूमितोयानलवायवो हि
सदा शरीरं प्रतिपालयन्ति ।
इतीदमालक्ष्य कुतो रतिर्भवेद्
विनाशिनो ह्यस्य न कर्म विद्यते ॥ ५२॥

भीष्मः—

इदमनुपधिवाक्यमच्छलं
परमनिरामयमात्मसाक्षिकम् ।
नरपतिरनुवीक्ष्य विस्मितः
पुनरनुयोक्तुमिदं प्रचक्रमे ॥ ५३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनद्विशततमोऽध्यायः ॥ १९९ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥
[अस्मिन्नध्याये ५३॥ श्लोकाः]

## ॥ द्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति जनकाय पञ्चशिखोक्तसांपरायिकभावादिप्रतिपादकवाक्यानुवादः ॥

भीष्मः—

जनको जनदेवस्तु ज्ञापितः परमर्षिणा ।
पुनरेवानुपप्रच्छ [1]साम्पराये भवाभवौ ॥ १

1. ख-ब—विभ्रान्तमिव चातुरम्

जनक:—[1]

भगवन् यदिदं प्रोक्तं संज्ञा भवति कस्यचित् ।
एवं सति किमज्ञानं ज्ञानं वा किं करिष्यति ॥ २

सर्वमुच्छेदनिष्ठं स्यात् पश्य चैतद्द्विजोत्तम ।
अप्रमत्तः प्रमत्तो वा किं विशेषं करिष्यति ॥ ३

असंसर्गो हि भूतेषु संसर्गो वा विनाशिषु ।
कस्मै क्रियेत तत्त्वेन निश्चयः कोऽत्र तत्त्वतः ॥ ४

भीष्मः—

तमसा हि प्रतिच्छन्नं विभ्रान्तमिव चातुरम् ।
पुनः प्रशमयन् वाक्यैः कविः पञ्चशिखोऽब्रवीत् ॥ ५

पञ्चशिखः—

उच्छेदनिष्ठा नेहास्ति भावनिष्ठा न विद्यते ।
अयं ह्यपि समाहारश् शरीरेन्द्रियचेतसाम् ॥ ६

वर्तते पृथगन्योन्यम् अप्यपाश्रित्य कर्मसु ॥ ६॥

धावतः पञ्च तेषां तु खं वायुर्ज्योतिरम्बु भूः ।
ते स्वभावेन तिष्ठन्ति वियुज्यन्ते स्वभावतः ॥ ७॥

आकाशो वायुरूष्मा च स्नेहो यश्चापि पार्थिवः ।
एष पञ्चसमाहारश् शरीरमिति नैकधा ॥ ८॥

---

1. ख-घ—पुनः प्रशमयन् वाक्यैस् साम्पराये भवाभवौ ।

2. ख—शरीरमपि [अधिकः पाठः]

ज्ञानमूष्मा च वायुश्च त्रिविधः [1]कर्मसङ्ग्रहः ॥ ९

इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना मनः ।
प्राणापानौ विकारश्च धातवश्चात्र [2]निस्सृताः ॥ १०

श्रवणं स्पर्शनं जिह्वा दृष्टिर्नासा तथैव च ।
इन्द्रियाणीति पञ्चैते चित्तपूर्वंगमा गुणाः ॥ ११

तत्र विज्ञानसंयुक्ता त्रिविधा वेदना ध्रुवा ।
सुखदुःखेति यामाहुर् अदुःखेत्यसुखेति च ॥ १२

शब्दस्स्पर्शश्च रूपं च रसो गन्धश्च भारत ।
एते ह्यामरणाद्युक्ताष् षड्गुणा ज्ञानसिद्धये ॥ १३

तेषु कर्मनिसर्गश्च सर्वतत्त्वार्थ[3]दर्शनः ।
[4]तत्राहुः परमं कर्म बुद्धिरित्यव्ययं महत् ॥ १४

इमं गुणसमाहारम् आत्मभावेन पश्यतः ।
असम्यग्दर्शिनो दुःखम् अनन्तं नोपशाम्यति ॥ १५

अनात्मेति यदा दृष्टं नाहं न च ममेत्यपि ।
वर्तते किमधिष्ठाना प्रसक्ता दुःखसन्ततिः ॥ १६

तत्तु सम्यङ्मतं नाम त्यागशास्त्रमनुत्तमम् ।
शृणु यत्तव मोक्षाय भाष्यमाणं भविष्यति ॥ १७

---

1. ख—काय 2. ख-घ—निर्वृताः
3. ख-ग—निश्चयः 4. ख—तमाहुः परमं शुक्रं

त्याग एव हि सर्वेषां उक्तानामपि कर्मणाम् ।
नित्यदुःखविनीतानां क्लेशदुःखावहो मतः ॥ १८

द्रव्यत्यागे तु कर्माणि भोगत्यागे व्रतान्यपि ।
सुखत्यागे तपोयोगस् सर्वत्यागे समापनम् ॥ १९

तस्य मार्गोऽयमद्वैधस् सर्वत्यागस्य दर्शितः ।
विप्रहाणाय दुःखानां दुर्गतिर्ह्यन्यथा भवेत् ॥ २०

पञ्च ज्ञानेन्द्रियाण्युक्त्वा मनष्षष्ठानि चेतसि ।
मनष्षष्ठानि वक्ष्यामि पञ्च कर्मेन्द्रियाण्यपि ॥ २१

हस्तौ कर्मेन्द्रियं ज्ञेयम् अथ पादौ गतीन्द्रियम् ।
[1]प्रजनानन्दयोश्शेफो विसर्गे पायुरिन्द्रियम् ॥ २२

वाक्च शब्द[2]विवेकार्था कृतिं पञ्चात्मिकां विदुः ।
एवमेकादशैतानि [3]बुद्ध्या तूपहृतं मनः ॥ २३

कर्णौ शब्दश्च तृप्तिश्च त्रयं श्रवणसङ्ग्रहे ।
तथा स्पर्शे तथा रूपे तथा च रसगन्धयोः ॥ २४

एवं पञ्चत्रिकाश्चैते गुणास्तदुपलब्धये ।
तेन यस्त्रिविधो भावः पर्यायात् समुपस्थितः ॥ २५

---

1. अ-क-नास्तीदमर्धम्
2. ख—विशेषार्था कृतिं
3. ख-ग-घ—बुद्ध्याऽनुपहृतं

सात्त्विको राजसश्चैव तामसश्चैव ते त्रयः ।
त्रिविधा वेदना येषु प्रसृता सर्वसादिनी ॥ २६

प्रहर्षः प्रीतिरानन्दस् सुखं संशान्तचित्तता ।
अकुतश्चित् कुतश्चिद्वा [1]चित्ततस्सात्त्विका गुणाः ॥ २७

अतुष्टिः परितापश्च शोको लोभस्तथाऽक्षमा ।
लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुतः ॥ २८

अविवेकस्तथा मोहः प्रमादस्स्वप्नतन्द्रिता ।
कथञ्चिदभिवर्तन्ते विविधास्तामसा गुणाः ॥ २९

तत्र यत् प्रीतिसंयुक्तं काये मनसि वा भवेत् ।
[2]वर्तते सात्त्विको भाव इत्युपेक्षेत तं तथा ॥ ३०

यत्तु सन्तापसंयुक्तम् अप्रीतिकरमात्मनः ।
प्रवृत्तं रज इत्येवं ततस्तदपि चिन्तयेत् ॥ ३१

अथ यन्मोहसंयुक्तं काये मनसि वा भवेत् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ ३२

खं च श्रोत्राश्रयीभूतं शब्दश्श्रोत्रं समाश्रितः ।
नोभयं शब्दविज्ञाने विज्ञानस्येतरस्य वा ॥ ३३

एवं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी ।

---

1. अ-ख—चिन्तितस्सात्त्विको गुणः
2. ख—अर्धचतुष्टयं नास्ति

स्पर्शे रूपे रसे गन्धे तानि चेतो मनश्च तत् ॥　३४

स्वकर्मयुगपद्भावो दशस्वेतेषु तिष्ठति ।
चित्तमेकादशं विद्धि बुद्धिर्द्वादशमी भवेत् ॥　३५

तेषामयुगपद्भावाद् उच्छेदो नास्ति तामसः ।
आस्थितो युगपद्भावे व्यवहारस्स लौकिकः ॥　३६

इन्द्रियाण्युपसृत्यापि दृष्टपूर्वश्रुतागमान् ।
चिन्तयन्ननुपर्येति त्रिभिरेवान्वितो गुणैः ॥　३७

यस्तु मोहगतं चित्तम् आशुसंसारमध्रुवम् ।
करोत्युप[1]रतं काये तमाहुस्तामसं गुणम् ॥　३८

यद्यदागमसंयुक्तं न कृच्छ्रादुपशाम्यति ।
अथ तत्राप्युपादत्ते तमो व्यक्तमिवानृतम् ॥　३९

एवमेष प्रसङ्ख्यातस् स्वकर्मप्रत्ययी गुणः ।
कथञ्चिद्वर्तते सम्यक् केषाञ्चिद्विनिवर्तते ॥　४०

[2]तेषामाहुस्समाहारं क्षेत्रमध्यात्मचिन्तकाः ।
स्थितो मनसि यो भावस् स वै क्षेत्रज्ञ उच्यते ॥　४१

एवं सति क उच्छेदश् शाश्वतो वा कथं भवेत् ।
स्वभावाद्वर्तमानेषु सर्वभूतेषु हेतुतः ॥　४२

यथाऽर्णवं गता नद्यो व्यक्तिं जहति नाम च ।

---

1. ख—रमं　　2. ख-ग—ते तमाहुः

न तु स्वतां नियच्छन्ति तादृशस्सत्त्वसङ्क्षयः ॥ ४३

एवं सति कुतस्संज्ञा प्रेत्यभावे पुनर्भवेत् ।
प्रतिसम्मिश्रिते जीवे गृह्यमाणे च मध्यतः ॥ ४४

इमां तु यो वेद विमोक्षबुद्धिम्
आत्मानमन्विच्छति चाप्रमत्तः ।
न लिप्यते कर्मफलैरनिष्टैः
पत्रं बिसस्येव जलेन सिक्तम् ॥ ४५

दृढैश्च पाशैर्बहुभिर्विमुक्तः
प्रजानिमित्तैरपि दैवतैश्च ।
यदा ह्यसौ सुखदुःखे जहाति
मुक्तस्तदाऽग्र्यां गतिमेत्यलिङ्गाम् ॥ ४६

श्रुतिप्रमाणागममङ्गलैश्च
युक्तो नरो मृत्युभयादतीतः ।
क्षीणे च पुण्ये विगते च पापे
तयोर्निमित्ते च फले विनष्टे ॥ ४७

अलेपमाकाशमलिङ्गमेवम्
आस्थाय पश्यन्ति महद्ध्येसक्ताः ॥ ४७॥

यथोर्णनाभिः परिवर्तमानस्
तन्तुक्षये तिष्ठति पात्यमानः ।

तथा विमुक्तः प्रजहाति दुःखं
विध्वंसते लोष्टमिवाप्रतीच्छन् ॥ ४८॥

यथा रुरुश्शृङ्गमथो पुराणं
हित्वा त्वचं वाऽप्युरगो यथैव ।
विहाय गच्छत्यनवेक्षमाणस्
तथा विमुक्तो विजहाति दुःखम् ॥ ४९॥

द्रुमं यथा वाऽप्युदके पतन्तम्
उत्सृज्य पक्षी प्रपतत्यसक्तः ।
तथा ह्यसौ सुखदुःखे विहाय
मुक्तः पराद्ध्र्यो गतिमेत्यलिङ्गाम् ॥ ५०॥

भीष्मः—

इदममृतपदं विदेहराजस्
स्वयमिह पञ्चशिखेन भाष्यमाणम् ।
निखिलमभिसमीक्ष्य निश्चितार्थः
परमसुखी विजहार वीतशोकः ॥ ५१॥

अपि च भवति मैथिलेन गीतं
नगरमुपाहितमग्निनाऽभिवीक्ष्य ।
न खलु मम तुषोऽपि दह्यतेऽत्र
स्वयमिदमाह किल स्म भूमिपालः ॥ ५२॥

इमं तु यः पठति विमोक्षनिश्चयं
न हीयते सततमवेक्षते तथा ।
उपद्रवान् नानुभवत्यदुःखितः
प्रमुच्यते कपिलमिवैत्य मैथिलः ॥ ५३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्विशततमोऽध्यायः ॥ २०० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
[ अस्मिन्नध्याये ५३॥ श्लोकाः ]

## ॥ एकाधिकद्विशततमोऽध्यायः ॥*

भीष्मेण युधिष्ठिरं प्रति जनकोपाख्यानकथनम् ॥

युधिष्ठिरः—

किं कारणं महाप्राज्ञ दह्यमानश्च मैथिलः ।
मिथिलां नेह धर्मात्मा प्राह वीक्ष्य विदाहिताम् ॥ १

भीष्मः—

श्रूयतां नृपशार्दूल यदर्थं दीपिता पुरा ।
वह्निना दीपिता सा तु तन्मे शृणु महामते ॥ २

जनको जनदेवस्तु कर्माण्याध्याय चात्मनि ।

* कृष्णाचार्यमुद्रितकोशस्थ-ध-कोशपाठानुसारेणायमध्यायो मुद्रितः

सर्वभावमनुप्राप्य भावेन विचचार सः ॥ ३

यजन् ददंस्तथा जुह्वन् पालयन् पृथिवीमिमाम् ।
अध्यात्मविन्महाप्राज्ञस् तन्मयत्वेन निष्ठितः ॥ ४

स तस्य हृदि सङ्कल्पं ज्ञातुमैच्छत् स्वयम्प्रभुः ।
सर्वलोकाधिपस्तत्र द्विजरूपेण संयुतः ॥ ५

मिथिलायां महाबुद्धिर् व्यलीकं किञ्चिदाचरन् ।
स गृहीत्वा द्विजश्रेष्ठैर् नृपाय प्रतिवेदितः ॥ ६

अपराधं समुद्दिश्य तं राजा प्रत्यभाषत ॥ ६॥

जनकः—

न त्वां ब्राह्मण दण्डेन नियोक्ष्यामि कथञ्चन ।
मम राज्याद्विनिर्गच्छ यावत् सीमा भुवो मम ॥ ७॥

भीष्मः—

तच्छ्रुत्वा ब्राह्मणो गत्वा राजानं प्रत्युवाच ह ॥ ८

ब्राह्मणः—

करिष्ये वचनं राजन् ब्रवीहि मम जानतः ।
का सीमा तव भूमेस्तु ब्रूहि धर्मे ममाद्य वै ॥ ९

भीष्मः—

तच्छ्रुत्वा मैथिलो राजा लज्जयाऽवनताननः ।
नोवाच वचनं विप्रं तत्त्वबुद्ध्या समीक्ष्य तत् ॥ १०

पुनः पुनश्च तं विप्रश् चोदयामास सत्वरम् ॥ १०॥

ब्राह्मणः—

ब्रूहि राजेन्द्र गच्छामि तव राज्याद्विवासितः ॥ ११

भीष्मः—

ततो नृपो विचार्यैवम् आह ब्राह्मणपुङ्गवम् ॥ ११॥

जनकः—

आवासो वा न मेऽस्त्यत्र सर्वा वा पृथिवी मम ।
गच्छ वा तिष्ठ वा ब्रह्मन्निति मे निश्चिता मतिः ॥ १२॥

भीष्मः—

इत्युक्तस्स तथा तेन मैथिलेन द्विजोत्तमः ।
अब्रवीत्तं महात्मानं राजानं मन्त्रिभिर्वृतम् ॥ १३॥

ब्राह्मणः—

त्वमेवं पद्मनाभस्य नित्यं पक्षपदाहितः ।
अहो सिद्धार्थरूपोऽसि गमिष्ये स्वस्ति तेऽस्तु वै ॥ १४॥

भीष्मः—

इत्युक्त्वा प्रययौ विप्रस् तज्जिज्ञासुर्द्विजोत्तमान् ।
अदहच्चाग्निना तस्य मिथिलां भगवान् स्वयम् ॥ १५॥
प्रदीप्यमानां मिथिलां दृष्ट्वा राजा न कम्पितः ।
जनैस्स परिपृष्टस्तु वाक्यमेतदुवाच ह ॥ १६॥

जनकः—

अनन्तं बत मे वित्तं भाव्यं मे नास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे किञ्चन दह्यते ॥ १७॥

भीष्मः—

तदस्य भाषमाणस्य श्रुत्वा श्रुत्वा हृदि स्थितम् ।
पुनस्सञ्जीवयामास मिथिलां तां द्विजोत्तमः ॥ १८॥
आत्मानं दर्शयामास वरं चास्मै ददौ पुनः ॥ १९

ब्राह्मणः—

धर्मे तिष्ठतु सद्भावो बुद्धिस्तेऽर्थे नराधिप ।
सत्ये तिष्ठस्व निर्विण्णस् स्वस्ति तेऽस्तु व्रजाम्यहम् ॥ २०

भीष्मः—

इत्युक्त्वा भगवांश्चैनं तत्रैवान्तरधीयत ।
एतत्ते कथितं राजन् किं भूयश्श्रोतुमिच्छसि ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
[ अस्मिन्नध्याये २१ श्लोकाः ]

---

## ॥ द्व्यधिकद्विशततमोऽध्यायः ॥*



भीष्मेण युधिष्ठिरं प्रति गार्हस्थ्ये स्थितस्यापि भगवदुपासकस्य ज्ञानिनः पुरुषार्थसिद्धौ दृष्टान्ततया सुवर्चलाश्वेतकेतूपाख्यानकथनम् ॥

युधिष्ठिरः—

अस्ति कश्चिद्यदि विभो सदारो नियतो गृहे ।
अतीतसर्वसंसारस् सर्वद्वन्द्वविवर्जितः ॥ १

तं मे ब्रूहि महाप्राज्ञ दुर्लभः पुरुषो महान् ॥ १॥

भीष्मः—

श्रृणु राजन् यथावृत्तं यन्मां त्वं पृष्टवानसि ।
इतिहासमिमं शुद्धं संसारभयभेषजम् ॥ २॥

देवलो नाम विप्रर्षिस् सर्वशास्त्रार्थकोविदः ।
क्रियावान् धार्मिको नित्यं देवब्राह्मणपूजकः ॥ ३॥

सुता सुवर्चला नाम तस्य कल्याणलक्षणा ।
नातिह्रस्वा नातिकृशा नातिदीर्घा यशस्विनी ॥ ४॥

प्रदानसमयं प्राप्ता पिता तस्य ह्यचिन्तयत् ॥ ५

अस्याः पतिः कुतो वेति ब्राह्मणश्श्रोत्रियः परः ।
विद्वान् विप्रो ह्यकुटुम्बः प्रियवादी महातपाः ॥ ६

---

* कृष्णाचार्यमुद्रितकोशस्थ-घ-कोशपाठानुसारेणायमध्यायो मुद्रितः

इत्येवं चिन्तयानं तं रहस्याह सुवर्चला ॥　　६॥

सुवर्चला—

अन्धाय मां महाप्राज्ञ देह्यनन्धाय वै पितः ।
एवं स्मर सदा विद्वन् ममेदं प्रार्थितं मुने ॥　　७॥

पिता—

न शक्यं प्रार्थितं वत्से त्वयाऽद्य प्रतिभाति मे ।
अन्धताऽनन्धता चेति विकारो मम जायते ॥　　८॥

उन्मत्तेवाशुभं वाक्यं भाषसे शुभलोचने ॥　　९

सुवर्चला—

नाहमुन्मत्तभूताऽद्य बुद्धिपूर्वं ब्रवीमि ते ।
विद्यते चेत् पतिस्तादृक् स मां भरति वेदवित् ॥　　१०

येभ्यस्त्वं मन्यसे दातुं मामिहानय तान् द्विजान् ।
तादृशं तं पतिं तेषु वरयिष्ये यथातथम् ॥　　११

भीष्मः—

तथेति चोक्त्वा तां कन्याम् ऋषिश्शिष्यानुवाच ह ॥　　११॥

देवलः—

ब्राह्मणान् वेदसम्पन्नान् योनिगोत्रविशोधितान् ।
मातृतः पितृतश्शुद्धाञ् शुद्धानाचारतश्शुभान् ॥　　१२॥

अरोगान् बुद्धिसम्पन्नाञ् शीलसत्त्वगुणान्वितान् ।
असङ्कीर्णांश्च गोत्रेषु वेदव्रतसमन्वितान् ॥　　१३॥

ब्राह्मणान् स्नातकाञ् शीघ्रं मातापितृसमन्वितान् ॥ १४
निवेष्टुकामान् कन्यां मे दृष्ट्वाऽऽनयत शिष्यकाः ॥ १४॥

भीष्मः—

तच्छ्रुत्वा त्वरिताश्शिष्या ह्याश्रमेषु ततस्ततः ।
ग्रामेषु च ततो गत्वा ब्राह्मणेभ्यो न्यवेदयन् ॥ १५॥

ऋषेः प्रभावं मत्वा ते कन्यायाश्च द्विजोत्तमाः ।
अनेकमुनयो राजन् सम्प्राप्ता देवलाश्रमम् ॥ १६॥

अनुमान्य यथान्यायं मुनीन् मुनिकुमारकान् ।
अभ्यर्च्य विधिवत् तत्र कन्यामाह पिता महान् ॥ १७॥

देवलः—

एतेऽपि मुनयो वत्से स्वपुत्रैकमता इह ।
वेदवेदाङ्गसम्पन्नाः कुलीनाश्शीलसम्मताः ॥ १८॥

येऽमी तेषु वरं भद्रे त्वमिच्छसि महाव्रतम् ।
तं कुमारं वृणीष्वाद्य तस्मै दास्याम्यहं शुभे ॥ १९॥

भीष्मः—

तथेति चोक्त्वा कल्याणी तप्तहेमनिभा तदा ।
सर्वलक्षणसम्पन्ना वाक्यमाह यशस्विनी ॥ २०॥

विप्राणां समितीर्दृष्ट्वा प्रणिपत्य तपोधनान् ॥ २१

सुवर्चला—

यद्यस्ति समितौ विप्रो ह्यन्धोऽनन्धस्स मे वरः ॥ २१॥

भीष्मः—

तच्छ्रुत्वा मुनयस्तत्र वीक्षमाणाः परस्परम् ।
नोचुर्विप्रा महाभागाः कन्यां मत्वा ह्यवेदिकाम् ॥ २२॥

कुत्सयित्वा मुनिं तत्र मनसा मुनिसत्तमाः ।
यथागतं ययुः क्रुद्धा नानादेशनिवासिनः ॥ २३॥
कन्या च संस्थिता तत्र पितृवेश्मनि भामिनी ॥ २४

ततः कदाचिद्ब्रह्मण्यो विद्वान् न्यायविशारदः ।
ऊहापोहविधानज्ञो ब्रह्मचर्यसमन्वितः ॥ २५

वेदविद्वेदतत्त्वज्ञः क्रियाकल्पविशारदः ।
आत्मतत्त्वविभागज्ञः पितृमान् गुणसागरः ॥ २६

श्वेतकेतुरिति ख्यातश् श्रुत्वा वृत्तान्तमादरात् ।
कन्यार्थं देवलं चापि शीघ्रं तत्रागतोऽभवत् ॥ २७
उद्दालकसुतं दृष्ट्वा श्वेतकेतुं महाव्रतम् ।
यथान्यायं च सम्पूज्य देवलः प्रत्यभाषत ॥ २८

देवलः—

कन्ये एष महाभागे प्राप्तो ऋषिकुमारकः ।
वरयैनं महाप्राज्ञं वेदवेदाङ्गपारगम् ॥ २९

भीष्मः—

तच्छ्रुत्वा कुपिता कन्या ऋषिपुत्रमुदैक्षत ।
तां कन्यामाह विप्रर्षिस् सोऽहं भद्रे समागतः ॥ ३०

अन्धोऽहमत्र तत्त्वं हि तथा मन्ये च सर्वदा ।
विशालनयनं विद्धि तथा मां हीनसंशयम् ॥ ३१
वृणीष्व मां वरारोहे भजे च त्वामनिन्दिते ॥ ३१॥
येनेदं वीक्षते नित्यं वृणोति स्पृशतेऽथ वा ।
घ्रायते वक्ति सततं येनेदं सार्यते पुनः ॥ ३२॥
येनैदं मन्यते तत्त्वं येन बुध्यति वा पुनः ।
न चक्षुर्विद्यते ह्येतत् स वै भूतान्ध उच्यते ॥ ३३॥
यस्मिन् प्रवर्तते चेदं पश्यञ् छृण्वन् स्पृशन्नपि ।
जिघ्रंश्च रसयंस्तद्वद् वर्तते येन चक्षुषा ॥ ३४॥
तन्मे नास्ति ततो ह्यन्धो वृणु भद्रेऽद्य मामतः ।
लोकदृष्ट्या करोमीह नित्यनैमित्तिकादिकम् ॥ ३५॥
आत्मदृष्ट्या च तत् सर्वं विलिप्यामि च नित्यशः ।
स्थितोऽहं निर्भरश्शान्तः कार्यकारणभावनः ॥ ३६॥
अविद्यया तरन् मृत्युं विद्यया तं तथाऽमृतम् ।
यथाप्राप्तं तु सन्दृश्य वसामीह विमत्सरः ॥ ३७॥
क्रीते व्यवसितं भद्रे भर्ताऽहं ते वृणीष्व माम् ॥ ३८
ततस्सुवर्चला दृष्ट्वा प्राह तं द्विजसत्तमम् ॥ ३८॥

सुवर्चला—

मनसाऽसि वृतो विद्वञ् शेषकर्ता पिता मम ।
वृणीष्व पितरं मह्यम् एष वेदविधिक्रमः ॥ ३९॥

भीष्मः—

तद्विज्ञाय पिता तस्या देवलो मुनिसत्तमः ।
श्वेतकेतुं च सम्पूज्य तथैवोद्दालकेन तम् ॥ ४०॥

मुनीनामग्रतः कन्यां प्रददौ जलपूर्वकम् ।
उदाहरन्ति वै तत्र श्वेतकेतुं निरीक्ष्य तम् ॥ ४१॥

मुनयः—

हृत्पुण्डरीकनिलयस् सर्वभूतात्मको हरिः ।
श्वेतकेतुस्वरूपेण स्थितोऽसौ मधुसूदनः ॥ ४२॥

देवलः—

प्रीयतां माधवो देवः पत्नी चेयं सुता मम ।
प्रतिपादयामि ते कन्यां सहधर्मचरीं शुभाम् ॥ ४३॥

भीष्मः—

इत्युक्त्वा प्रददौ तस्मै देवलो मुनिपुङ्गवः ॥ ४४

प्रतिगृह्य च तां कन्यां श्वेतकेतुर्महायशाः ।
उपयम्य यथान्यायम् अत्र कृत्वा यथाविधि ॥ ४५

समाप्य तन्त्रं मुनिभिर् वैवाहिकमनुत्तमम् ।
स गार्हस्थ्ये वसन् धीमान् भार्यां तामिदमब्रवीत् ॥ ४६

श्वेतकेतुः—

यानि चोक्तानि वेदेषु तत् सर्वं कुरु शोभने ।
मया सह यथान्यायं सहधर्मचरी मम ॥ ४७

अहमित्येव भावेन स्थितोऽहं त्वं तथैव च ।
तस्मात् कर्माणि कुर्वीथाः कुर्या ते च ततः परम् ॥ ४८

न ममेति च भावेन ज्ञानाग्निनिलयेन च ।
अनन्तरं तथा कुर्यास् तानि कर्माणि भस्मसात् ॥ ४९

एवं त्वया च कर्तव्यं सर्वदा दुर्भगा मया ।
यद्यदाचरति श्रेष्ठस् तत्तदेवेतरो जनः ॥ ५०

तस्माल्लोकस्य सिद्ध्यर्थं कर्तव्यं चात्मसिद्धये ॥ ५०॥

भीष्मः—

उक्त्वैवं स महाप्राज्ञस् सर्वज्ञानैकभाजनः ।
पुत्रानुत्पाद्य तस्यां च यज्ञैस्सन्तर्प्य देवताः ॥ ५१॥

आत्मयोगपरो नित्यं निर्द्वन्द्वो निष्परिग्रहः ।
भार्यां तां सदृशीं प्राप्य बुद्धिं क्षेत्रज्ञयोरिव ॥ ५२॥

लोकमन्यमनुप्राप्तौ भार्या भर्ता तथैव च ।
साक्षिभूतौ जगत्यस्मिंश् चरमाणौ मुदाऽन्वितौ ॥ ५३॥

ततः कदाचिद्भर्तारं श्वेतकेतुं सुवर्चला ।
पप्रच्छ को भवानत्र ब्रूहि मे तद्द्विजोत्तम ॥ ५४॥

तामाह भगवान् वाग्मी तया ज्ञातो न संशयः ॥ ५५

श्वेतकेतुः—

द्विजोत्तमेति मामुक्त्वा पुनः कमनुपृच्छसि ॥ ५५॥

भीष्मः—

सा तमाह महात्मानं पृच्छामि हृदि शायिनम् ।
तच्छ्रुत्वा प्रत्युवाचैनां स न वक्ष्यति भामिनि ॥ ५६॥

नामगोत्रसमायुक्तम् आत्मानं मन्यसे यदि ।
तन्मिथ्या गोत्रसद्भावे वर्तते देहबन्धनम् ॥ ५७॥

अहमित्येष भावोऽत्र त्वयि चापि समाहितः ।
त्वमप्यहमहं सर्वम् अहमित्येव वर्तते ॥ ५८॥

नात्र तत् परमार्थं वै किमर्थमनुपृच्छसि ॥ ५९.

ततः प्रहस्य सा हृष्टा भर्तारं धर्मचारिणी ।
उवाच वचनं काले स्मयमाना तदा नृप ॥ ६०.

सुवर्चला—

किमनेकप्रकारेण विरोधेन प्रयोजनम् ।
क्रियाकलापैर्ब्रह्मर्षे ज्ञाननष्टोऽसि सर्वदा ॥ ६१

तन्मे ब्रूहि महाप्राज्ञ यथाऽहं त्वामनुव्रता ॥ ६१॥

श्वेतकेतुः—

यद्यदाचरति श्रेष्ठस् तत्तदेवेतरो जनः ।
वर्तते तेन लोकोऽयं सङ्कीर्णश्च भविष्यति ॥ ६२॥

सङ्कीर्णे च तथा धर्मे वर्णसङ्करमेति च ।
सङ्करे च प्रवृत्ते तु मात्स्यो न्यायः प्रवर्तते ॥ ६३॥

तदनिष्टं हरेर्भद्रे धातुरस्य महात्मनः ।

परमेश्वरसङ्क्रीडा लोकसृष्टिरियं शुभे ॥ ६४॥

यावत् पांसव उद्दिष्टास्तावत्योऽस्य विभूतयः ।
तावत्यश्चैव मायास्तु तावत्योऽस्याश्च शक्तयः ॥ ६५॥

एवं सुगह्वरे युक्तो यत्र मे तद्भवाभवम् ।
छित्त्वा ज्ञानासिना गच्छेत् स विद्वान् स च मे प्रियः॥ ६६॥

सोऽहमेव न सन्देहः प्रतिज्ञा इति तस्य वै ॥ ६७

ये मूढास्ते दुरात्मानो धर्मसङ्करकारकाः ।
मर्यादाभेदका नीचा नरके यान्ति जन्तवः ॥ ६८

आसुरीं योनिमापन्ना इति देवानुशासनम् ॥ ६८॥

भगवत्या तथा लोके रक्षितव्यं न संशयः ।
मर्यादा लोकरक्षार्थम् एवमस्मि तथा स्थितः ॥ ६९॥

सुवर्चला—

शब्दः कोऽत्र इति ख्यातस् तथाऽर्थे च महामुने ।
आकृत्या पतयो ब्रूहि लक्षणेन पृथक् पृथक् ॥ ७०॥

श्वेतकेतुः—

व्यत्ययेन च वर्णानां परिवादकृतो हि यः ।
स शब्द इति विज्ञेयश् तन्निपातोऽर्थ उच्यते ॥ ७१॥

सुवर्चला—

शब्दार्थयोर्हि सम्बन्धस् त्वनयोरस्ति वा न वा ।

तन्मे ब्रूहि यथातत्त्वं शब्दस्थानेऽर्थे एव चेत् ॥ ७२॥

श्वेतकेतुः—

शब्दार्थयोर्न चैवास्ति सम्बन्धोऽत्यन्त एव हि ।
पुष्करे च यथा तोयं तथाऽस्मीति च वेत्थ तत् ॥ ७३॥

सुवर्चला—

अर्थे स्थितिर्हि शब्दस्य नान्यथा च स्थितिर्भवेत् ।
विद्यते चेन्महाप्राज्ञ विनाऽर्थं ब्रूहि सत्तम ॥ ७४॥

श्वेतकेतुः—

स संसर्गोऽतिमात्रस्तु वाचकत्वेन वर्तते ।
अस्ति चेद्वर्तते नित्यं विकारोच्चारणेन वै ॥ ७५॥

सुवर्चला—

शब्दस्थानोऽत्र इत्युक्तस् तथाऽर्थ इति मे कृतः ।
अर्थस्स्थितो न तिष्ठेच्च विरूढमिह भाषितम् ॥ ७६॥

श्वेतकेतुः—

न विकूलोऽत्र कथितो नाकाशं हि विना जगत् ।
सम्बन्धस्तत्र नास्त्येव तद्वदित्येष मन्यताम् ॥ ७७॥

सुवर्चला—

सदाऽहङ्कारशब्दोऽयं व्यक्तमात्मनि संश्रितः ।
न वाचस्तत्र वर्तन्ते इति मिथ्या भविष्यति ॥ ७८॥

श्वेतकेतुः—

अहं शब्दो ह्यहंभावो नात्मभावे शुभव्रते ।

न वर्तन्ते परेऽचिन्त्ये वाचस्सगुणलक्षणाः ॥ ७९॥

सुवर्चला—

अहं गात्रैकतश्श्यामा भवानपि तथैव च ।
तन्मे ब्रूहि यथान्यायम् एवं चेन्मुनिसत्तम ॥ ८०॥

श्वेतकेतुः—

मृण्मये हि घटे भावस् तादृग्भाव इहेष्यते ।
अयं भावः परेऽचिन्त्ये ह्यात्मभावो यथा च तत् ॥ ८१॥

अहं त्वमेतदित्येव परे सङ्कल्पना मया ।
तस्माद्वाचो न वर्तन्त इति नैव विरुध्यते ॥ ८२॥

तस्माद्वामे न वर्तन्ते मनसा भीरु सर्वशः ।
यथाऽऽकाशगतं विश्वं संसक्तमिव लक्ष्यते ॥ ८३॥

संसर्गे सति सम्बन्धात् तद्विकारं भविष्यति ।
अनाकाशगतं सर्वं विकारे च सदा गतम् ॥ ८४॥

तद्ब्रह्म परमं शुद्धम् अनौपम्यं न शक्यते ।
न दृश्यते तथा तच्च दृश्यते च मतिर्मम ॥ ८५॥

सुवर्चला—

निर्विकारं ह्यमूर्तिं च निरयं सर्वगं तथा ।
दृश्यते च वियन्नित्यं दृगात्मा तेन दृश्यते ॥ ८६॥

श्वेतकेतुः—

त्वचा स्पृशति वै वायुम् आकाशस्थं पुनः पुनः ।
तत्स्थं गन्धं तथा घ्राति ज्योतिः पश्यति चक्षुषा ॥ ८७॥

तमोरश्मिगणश्चैव मेघजालं तथैव च ।
वर्षं तारागणं चैव नाकाशं दृश्यते पुनः ॥ ८८॥

आकाशस्याप्यथाकाशं सद्रूपमिति निश्चितम् ।
तदर्थे कल्पिता ह्येते तत् सत्यो विष्णुरेव च ॥ ८९॥

यानि नामानि गौणानि ह्युपचारात् परात्मनि ॥ ९०

न चक्षुषा न मनसा न चान्येन परो विभुः ।
चिन्त्यते सूक्ष्मया बुद्ध्या वाचा वक्तुं न शक्यते ॥ ९१

एतत् प्रपञ्चमखिलं तस्मिन् सर्वं प्रतिष्ठितम् ।
महाघटोऽल्पकश्चैव यथा मह्यां प्रतिष्ठितौ ॥ ९२

न च स्त्री न पुमांश्चैव यथैव न नपुंसकः ।
केवलज्ञानमात्रं तत् तस्मिन् सर्वं प्रतिष्ठितम् ॥ ९३

भूमिसंस्थानयोगेन वस्तुसंस्थानयोगतः ।
रसभेदा यथा तोये प्रकृत्यामात्मनस्तथा ॥ ९४

तद्वाक्यस्मरणान्नित्यं तृप्तिं वारि पिबन्निव ।
प्राप्नोति ज्ञानमखिलं तेन तत् सुखमेधते ॥ ९५

सुवर्चला—

अनेन साध्यं किं स्याद्वै शब्देनेति मतिर्मम ।
वेदगम्यः परोऽचिन्त्य इति पौराणिका विदुः ॥ ९६

निरर्थको यथा लोके तद्वत् स्यादिति मे मतिः ।
निरीक्ष्यैवं यथान्यायं वक्तुमर्हसि मेऽनघ ॥ ९७

श्वेतकेतुः—

वेदगम्यं परं शुद्धम् इति सत्या परा श्रुतिः ।
व्याहृत्या नैतदित्याह व्युपलिङ्गे च वर्तते ॥ ९८
निरर्थको न चैवास्ति शब्दो लौकिक उत्तमे ॥ ९८॥
अनन्वयास्तथा शब्दा निरर्था इति लौकिकैः ।
गृह्यन्ते तद्वदित्येव न वर्तन्ते परात्मनि ॥ ९९॥
अगोचरत्वं वचसां युक्तमेवं तथा शुभे ॥ १००

साधनस्योपदेशाच्च ह्युपायस्य च सूचनात् ।
उपलक्षणयोगेन व्यावृत्त्या च प्रदर्शनात् ॥ १०१
वेदगम्यः परश्शुद्ध इति मे धीयते मतिः ॥ १०१॥
अध्यात्मध्यानसम्भूतम् अभूतं (भूत?) वत् स्फुटम् ।
ज्ञानं विद्धि शुभाचारे तेन यान्ति परां गतिम् ॥ १०२॥
यदि मे व्याहृतं गुह्यं श्रुतं न तु त्वया शुभे ।
तथ्यमित्येव वा शुद्धे ज्ञानं ज्ञानविलोचने ॥ १०३॥

नानारूपवदस्यैवम् ऐश्वर्यं दृश्यते शुभे ॥ १०४

न वायुस्तं न सूर्यस्तं नाग्निस्तत्तत् परं पदम् ।
अनेन पूर्णमेतद्धि हृदि भूतमिहेष्यते ॥ १०५

एतावदात्मविज्ञानम् एतावद्यदहं स्मृतम् ।
आवयोर्न च सत्त्वे वै तस्मादज्ञानबन्धनम् ॥ १०६

भीष्मः—

एवं सुवर्चला दृष्टा प्रोक्ता भर्त्रा यथार्थवत् ।
परिचर्यमाणा ह्यनिशं तत्त्वबुद्धिसमन्विता ॥ १०७

भर्ता च तामनुप्रेक्ष्य नित्यनैमित्तिकान्वितः ।
परमात्मनि गोविन्दे वासुदेवे महात्मनि ॥ १०८

समाधाय च कर्माणि तन्मयत्वेन भावितः ।
कालेन महता राजन् प्राप्नोति परमां गतिम् ॥ १०९

एतत्ते कथितं राजन् यस्मात् त्वं परिपृच्छसि ।
गार्हस्थ्यं च समास्थाय गतौ जायापती परम् ॥ ११०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अधिकद्विशततमोऽध्यायः ॥ २०२ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
[ अस्मिन्नध्याये ११० श्लोकाः ]

---

## ॥ त्र्यधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति दान्तलक्षणकथनपूर्वकं दमप्रशंसनम् ॥

---

युधिष्ठिरः—

किं कुर्वन् सुखमाप्नोति किं कुर्वन् दुःखमाप्नुते ।
किं कुर्वन् निर्भयो लोके सिद्धश्चरति भारत ॥ १

भीष्मः—

दममेव प्रशंसन्ति वृद्धाश्श्रुतिसमाधयः ।
सर्वेषामेव वर्णानां ब्राह्मणस्य विशेषतः ॥ २

नादान्तस्य क्रियासिद्धिर् यथावदुपलभ्यते ।
क्रियास्तपश्च वेदाश्च दमे सर्वं प्रतिष्ठितम् ॥ ३

दमस्तेजो वर्धयति पवित्रं दम उच्यते ।
विपाप्मा निर्भयो दान्तः पुरुषो विन्दते महत् ॥ ४

सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते ।
सुखं लोके विपर्येति मनश्चास्य प्रसीदति ॥ ५

तेजो दमेन ध्रियते न तत् तीक्ष्णोऽधिगच्छति ।
अमित्रांश्च बहून् नित्यं पृथगात्मनि पश्यति ॥ ६

क्रव्याद्भ्य इव भूतानाम् अदान्तेभ्यस्सदा भयम् ।
तेषां विप्रतिषेधार्थं राजा सृष्टस्स्वयम्भुवा ॥ ७

आश्रमेषु च सर्वेषु दम एव विशिष्यते ।
यच्च तेषु फलं धर्मे भूयो दान्ते तदुच्यते ॥ ८

तेषां वक्ष्यामि लिङ्गानि येषां समुदयो दमः ।
अकार्पण्यमसंरम्भस् सन्तोषश्श्रद्दधानता ॥ ९

अक्रोध आर्जवं नित्यं नातिवादो विमानिता ।
गुरुपूजाऽनसूया च दया भूतेष्वपैशुनम् ॥ १०

[1]जनवादस्स्तुतिर्निन्दा नार्जवं च विवर्जितम् ।
साधुकामश्चास्पृहयन्नायतिप्रत्ययो नृषु ॥ ११

अवैरकृत् सूपचारस् समो निन्दाप्रशंसयोः ।
सुवृत्तश्शीलसम्पन्नस् सुप्रसन्नात्मवाञ् शुचिः ॥ १२

प्राप्य लोके च सत्कारं स्वर्गं वै प्रेत्य गच्छति ॥ १२॥

सर्वभूतहिते युक्तो न स्म यो द्विषते जनम् ।
महाह्रद इवाक्षोभ्यः प्रज्ञातृप्तः प्रसिद्ध्यति ॥ १३॥

अभयं सर्वभूतेभ्यस् सर्वेषामभयं यतः ।
नमस्यस्सर्वभूतानां दान्तो भवति मानवः ॥ १४॥

न प्रहृष्येन्महत्यर्थे व्यसने च न शोचति ।
यश्चाऽपरिमितप्रज्ञस् स दान्तो द्विज उच्यते ॥ १५॥

---

1. ख—जनवादो मृषावादस्स्तुतिनिन्दाविवर्जनम् । [पाठान्तरम्]
ग-घ—नास्तीदमर्धम्

कर्मभिश्श्रुतिसम्पन्नस् सद्भिराचरितैश्शुभैः ।
सदैव दमसंयुक्तस् तस्य भुङ्क्ते महत् फलम् ॥ १६॥

अनसूया क्षमा शान्तिस् सन्तोषः प्रियवादिता ।
[1]सत्त्वं दानमनायासो नैष मार्गो दुरात्मनाम् ॥ १७॥

कामः क्रोधश्च लोभश्च परस्येर्ष्या [2]विकत्थनम् ।
[3]दम्भो दर्पश्च मानश्च नैष मार्गो महात्मनाम् ॥ १८॥

कामक्रोधौ वशे कृत्वा ब्रह्मचारी जितेन्द्रियः ।
विक्रम्य घोरे तपसि ब्राह्मणस्संशितव्रतः ॥ १९॥

कालकाङ्क्षी चरेल्लोकान् निरपाय इहात्मवान् ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
[अस्मिन्नध्याये २० श्लोकाः]

---

1. ख-ग—साम्यं ; घ—सत्यं 2. ग-घ—विकत्थना
3. ख—नास्तीदमर्धम्

## ॥ चतुरधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति तपउपवासादिनिरूपणम् ॥

युधिष्ठिरः—

द्विजातयो व्रतोपेता यदिदं भुञ्जते हविः ।
अन्नं ब्राह्मणकामाय कथमेतत् पितामह ॥ १

भीष्मः—

अवेदोक्तव्रतोपेता भुञ्जानाः कामचारिणः ।
वेदोक्तेषु च भुञ्जाना व्रतयुक्ता युधिष्ठिर ॥ २

युधिष्ठिरः—

यदिदं तप इत्याहुर् उपवासं पृथग्जनाः ।
एतत्तपो महाराज उताहोऽन्यत् तपो भवेत् ॥ ३

भीष्मः—

मासपक्षोपवासेन मन्यन्ते यत्तपो जनाः ।
[1]आत्मतन्त्रोपघातस्स न तपस्तत् सतां मतम् ॥ ४

त्यागश्च सन्नतिश्चापि शिष्यते तप उत्तमम् ।
सदोपवासी च भवेद् ब्रह्मचारी सदा भवेत् ॥ ५

मुनिश्च स्यात् सदा विप्रो दैवतं च सदा भवेत् ।
कुटुम्बिको धर्मपरस् सदाऽस्वप्नश्च भारत ॥ ६

---

1 क—आत्मतन्त्रोपघातस्य

अमांसाशी सदा च स्यात् पवित्री च सदा भवेत् ।
[1]अमृताशी सदा च स्यान्न च स्याद्विषभोजनः ॥ ७

विघसाशी सदा च स्यात् सदा चैवातिथिप्रियः ॥ ७॥

युधिष्ठिरः—

कथं सदोपवासी स्याद् ब्रह्मचारी कथं भवेत् ।
विघसाशी कथं वा स्यात् सदा चैवातिथिप्रियः ॥ ८॥

भीष्मः—

अन्तरा प्रातराशं च सायमाशं तथैव च ।
सदोपवासी तु भवेद् यो न भुङ्क्ते कदाचन ॥ ९॥

भार्यां गच्छन् ब्रह्मचारी ऋतौ भवति ब्राह्मणः ।
ऋतवादी स भवति मौननित्यश्च यो नरः ॥ १०॥

अभक्षयन् वृथा मांसम् [2]अमांसाशी भवेत्तदा ।
दाननित्यः पवित्री स्याद् अस्वप्नश्च दिवाऽस्वपन् ॥ ११॥

भृत्यादिषु च यो भुङ्क्ते भुक्तवत्सु सदा नरः ।
अमृतं केवलं भुङ्क्ते इति विद्धि युधिष्ठिर ॥ १२॥

अभुक्तवत्सु भुञ्जानो विषमश्नाति वै द्विजः ।
[3]अदत्त्वा योऽतिथिभ्योऽन्नं न भुङ्क्ते सोऽतिथिप्रियः ॥१३॥

---

1. घ—अर्धचतुष्टयं नास्ति 2. ग-घ—अमृताशी
3. ख—अभुक्तवत्सु नाश्नानस् स भवेत्तस्यवै द्विजः । [पाठान्तरम्]

अदत्त्वाऽन्नं दैवतेभ्यो यो न भुङ्क्ते स दैवतम् ।
अभोजनेन तेनास्य जितस्वर्गो भवत्युत ॥ १४॥

देवताभ्यः पितृभ्यश्च भृत्येभ्योऽतिथिभिस्सह ।
अवशिष्टं तु योऽश्नाति तमाहुर्विघसाशिनम् ॥ १५॥

तेषां लोका ह्यपर्यन्तास् [1]स्यन्दन्ते ब्रह्मणा सह ।
उपस्थिताश्चाप्सरोभिः परियान्ति दिवौकसः ॥ १६॥

देवताभिश्च ते सार्धं पितृभिश्चोपभुञ्जते ।
रमन्ते पुत्रपौत्रैश्च तेषां गतिरनुत्तमा ॥ १७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
[ अस्मिन्नध्याये १७॥ श्लोकाः ]

---

1. ख-ग—सदने

## ॥ पञ्चाधिकद्विशततमोऽध्यायः ॥*

भीष्मेण युधिष्ठिरं प्रति भगवत्स्वरूपकमुनिसनत्कुमारसंवादानुवादः ॥

युधिष्ठिरः—

केचिदाहुर्द्विधा लोके त्रिधा राजन्ननेकधा ।
न प्रत्ययो न चान्यश्च दृश्यते ब्रह्म नैव तत् ॥ १

नानाविधानि शास्त्राणि उक्ताश्चैव पृथग्विधाः ।
किमधिष्ठाय तिष्ठामि तन्मे ब्रूहि पितामह ॥ २

भीष्मः—

स्वे स्वे युक्ता महात्मानश् शास्त्रेषु प्रभविष्णवः ।
वर्तन्ते पण्डिता लोके को विद्वान् कश्च पण्डितः ॥ ३

सर्वेषां तत्त्वमज्ञाय यथारुचि तथा भवेत् ।
अस्मिन्नर्थे पुराभूतम् इतिहासं पुरातनम् ॥ ४

महाविवादसंयुक्तम् ऋषीणां भावितात्मनाम् ।
हिमवत्पार्श्व आसीना ऋषयस्संशितव्रताः ॥ ५

षण्णां तानि सहस्राणि ऋषीणां गणमाहितम् ।
तत्र केचिद्ध्रुवं विश्वं सेश्वरं तु निरीश्वरम् ॥ ६

प्राकृतं कारणं नास्ति सर्वं नैवमिदं जगत् ।

---

* कृष्णाचार्यमुद्रितकोशस्थ-ध-कोशपाठानुसारेणायमध्यायो मुद्रितः

अनेन चापरे विप्रास् स्वभावं कर्म चापरे ॥　७

पौरुषं कर्म दैवं च यत्स्वभावादिरेव तम् ।
नानाहेतुशतैर्युक्ता नानाशास्त्रप्रवर्तकाः ॥　८

स्वभावाद्ब्राह्मणा राजन् जिगीषन्तः परस्परम् ।
ततस्तु मूलमुद्धूतं वादिप्रत्यर्थिसंयुतम् ॥　९

पात्रदण्डविघातं च वल्कलाजिनवाससाम् ।
एके मन्युसमापन्नास् ततश्शान्ता द्विजोत्तमाः ॥　१०

वसिष्ठमब्रुवन् सर्वे त्वं नो ब्रूहि सनातनम् ।
नाहं जानामि विप्रेन्द्राः प्रत्युवाच स तान् प्रभुः ॥　११

ते सर्वे सहिता विप्रा नारदं ऋषिमब्रुवन् ।
त्वं नो ब्रूहि महाभाग तत्त्वविच्च भवानसि ॥　१२

नाहं द्विजा विजानामि क हि गच्छाम सङ्गताः ।
इति तानाह भगवांस् ततः प्राह च स द्विजान् ॥　१३

को विद्वानिह लोकेऽस्मिन्न मोहोऽमृतमद्भुतम् ।
तच्च ते शुश्रुवुर्वाक्यं ब्राह्मणा ह्यशरीरिणः ॥　१४

सनद्धाम द्विजा गत्वा पृच्छध्वं स च वक्ष्यति ॥　१४॥

तमाह कश्चिद् द्विजवर्यसत्तमो
विभाण्डको मण्डितवेदराशिः ॥　१५

द्विजवर्यः—

कस्त्वं भवानर्थविभेदमध्ये
न दृश्यसे वाक्यमुदीरयंश्च ॥ १५॥

भीष्मः—

अथाहेदं तं भगवान् सनन्तं
महामुने विद्धि मां पण्डितोऽसि ।
ऋषिं पुराणं सततैकरूपं
यमक्षयं वेदविदो वदन्ति ॥ १६॥

पुनस्तमाहेदमसौ महात्मा
स्वरूपसंस्थं वद आह पार्थ ।
त्वमेकोऽस्मदृषिपुङ्गवाद्य
न सत्स्वरूपमथ वा पुनः किम् ॥ १७॥

अथाह गम्भीरतरानुवादं
वाक्यं महात्मा ह्यशरीर आदिः ।
न ते मुने श्रोत्रमुखेऽपि चास्यं
न पादहस्तौ प्रपदात्मके न ॥ १८॥

ब्रुवन् मुनीन् सत्यमथो निरीक्ष्य
स्वमाह विद्वान् मनसा निगम्य ।
ऋषे कथं वाक्यमिदं ब्रवीषि
न चास्य मन्ता न च विद्यते चेत् ॥ १९॥

न शुश्रुवुस्ततस्तत्तु प्रतिवाक्यं द्विजोत्तमाः ।
निरीक्षमाणा आकाशं प्रहसन्तस्ततस्ततः ॥ २०॥

आश्चर्यमिति मत्वा ते ययुर्हैमं महागिरिम् ।
सनत्कुमारसङ्काशं सगणा मुनिसत्तमाः ॥ २१॥

तं पर्वतं समारुह्य ददृशुर्ध्यानमाश्रिताः ।
कुमारं देवमर्हन्तं वेदपाराविवर्जितम् ॥ २२॥

ततस्संवत्सरे पूर्णे प्रकृतिस्थं महामुनिम् ।
सनत्कुमारं राजेन्द्र प्रणिपत्य द्विजास्स्थिताः ॥ २३॥

आगतान् भगवानाह ज्ञाननिर्धूतकल्मषः ॥ २४

सनत्कुमारः—

ज्ञातं मया मुनिगणा वाक्यं तदशरीरिणः ।
कार्यमद्य यथाकामं पृच्छध्वं मुनिपुङ्गवाः ॥ २५

भीष्मः—

तमब्रुवन् प्राञ्जलयो महामुनिं
द्विजोत्तमं ज्ञाननिधिं सुनिर्मलम् ॥ २५॥

ऋषयः—

कथं वयं ज्ञाननिधिं वरेण्यं
यक्ष्यामहे विश्वरूपं कुमार ॥ २६

प्रसीद नो भगवन् ज्ञानलेशं
मधुप्रयाताय सुखाय सन्तः ।

यत्तत् पदं विश्वरूपं महामुने
तत्र ब्रूहि किं तत्र महानुभाव ॥ २७

स तैर्वियुक्तो भगवान् महात्मा
यत्सङ्गवान् सत्यवित्तच्छृणुष्व ।
अनेकसाहस्रकलेषु चैव
प्रसन्नधातुं च शुभाज्ञया सत् ॥ २८

सनत्कुमारः—
यथाऽऽह पूर्वं युष्मासु ह्यशरीरी द्विजोत्तमाः ।
तथैव वाक्यं तत् सत्यम् अजानन्तश्च कीर्तितम् ॥ २९

शृणुध्वं—परमं कारणमस्ति । कथमवगम्यते । अहन्यहनि पाकविशेषो दृश्यते । तेन मिश्रं सर्वं मिश्रयते । यथा मण्डली दृशि सर्वेषामस्ति । निदर्शनमस्ति चक्षुष्मताम् । अस्ति ज्ञाने स्वरूपम् । पश्यति यथा दर्पणान्तं निदर्शनम् ॥ ३०

स एव सर्वं विद्वान् न बिभेति न गच्छति कुत्राहं कस्य नाहं केन केनेत्यवर्तमानो विजानाति ॥ ३१

स युगतो व्यापी । स पृथक् स्थितः । तदपरमार्थः॥ ३२

यथा वायुरेकस्सन् बहुधेरितः । आश्रयविशेषो वा यस्याश्रयं यथावद्विजे मृगे व्याघ्रे च मनुजे वेणुसंश्रयो भिद्यते वायुरथैकः । आत्मा तथाऽसौ परमात्माऽसावन्य इव भाति ॥

एवमात्मा स एव गच्छति सर्वमात्मा पश्यञ्शृणोति न च घ्राति न भाषते ॥　　३४

चक्रेऽस्य तं महात्मानं परितो दश रश्मयः ।
विनिष्क्रम्य यथा सूर्यम् अनुगच्छन्ति तं प्रभुम् ॥　　३५

दिने दिनेऽस्तमभ्येति पुनरुद्गच्छते दिशः ।
तावुभौ न रवौ चास्तां तथा वित्त शरीरिणम् ॥　　३६

पतिते वित्त विप्रेन्द्रं भक्षणे चरणे परः ।
ऊर्ध्वमेकस्तथाऽधस्ताद् एकस्तिष्ठति चापरः ॥　　३७

हिरण्यसदनं ज्ञेयं समेत्य परमं पदम् ।
आत्मना ह्यात्मदीपं तम् आत्मनि ह्यात्मपूरुषम् ॥　　३८

सञ्चितं सञ्चितं पूर्वं भ्रमरो वर्तते भ्रमम् ।
योऽभिमानीव जानाति न मुह्यति न हीयते ॥　　३९

न चक्षुषा पश्यति कश्चनैनं
　　हृदा मनीषा पश्यति रूपमस्य ।
न शुक्लं न कृष्णं परमार्थभावं
　　गुहाशयं ज्ञानदेवीकरस्थम् ॥　　४०

ब्राह्मणस्य न सादृश्ये वर्तते सोऽपि किं पुनः ।
इज्यते यस्तु मन्त्रेण यजमानो द्विजोत्तमः ॥　　४१

नैव धर्मी न चाधर्मी द्वन्द्वातीतो विमत्सरः ।
ज्ञानतृप्तस्सुखं शेते ह्यमृतात्मा न संशयः ॥ ४२

एवमेष जगत्सृष्टिं कुरुते मायया प्रभुः ।
न जानाति विमूढात्मा कारणं चात्मनो ह्यसौ ॥ ४३

ध्याता द्रष्टा तथा मन्ता बोद्धा दृष्टान्? स एव सः ।
को विद्वान् परमात्मानम् अनन्तं लोकभावनम् ॥ ४४

यत्तु शक्यं मया प्रोक्तं गच्छध्वं मुनिपुङ्गवाः ॥ ४४॥

भीष्मः—

एवं प्रणम्य विप्रेन्द्रा ज्ञानसागरसम्भवम् ।
सनत्कुमारं सन्दृष्ट्वा जग्मुस्ते रुचिरं पुनः ॥ ४५॥

तस्मात् त्वमपि कौन्तेय ज्ञानयोगपरो भव ।
ज्ञानमेवं महाराज सर्वदुःखविनाशनम् ॥ ४६॥

इदं महादुःखसमाकराणां
नृणां परित्राणविनिर्मितं पुरा ।
पुराणपुंसा ऋषिणा महात्मना
महामुनीनां प्रवरेण तद्भुवम् ॥ ४७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
[ अस्मिन्नध्याये ४२॥ श्लोकाः ५ वाक्यानि ]

---

## ॥ षडधिकद्विशततमोऽध्यायः* ॥



भीष्मेण युधिष्ठिरं प्रति तपश्शब्दस्य मतभेदेन नानार्थकत्वकथनपूर्वकं स्वमते तस्य ज्ञानार्थकत्वाभिधानम् ॥ १ ॥ ज्ञानस्य मोक्षसाधनत्वे दृष्टान्ततया सुवर्चलाचरित्रकथनम् ॥ २ ॥



युधिष्ठिरः—

यदिदं तप इत्याहुः किं तपस्सम्प्रकीर्तितम् ।
उपवासमथान्यत्तु वेदाचारमथो नु किम् ॥ १
शास्त्रं तपो महाप्राज्ञ तन्मे ब्रूहि पितामह ॥ १॥

भीष्मः—

पक्षमासोपवासादीन् मन्यन्ते वै तपोधनाः ॥ २
वेदव्रतादीनि तप अपरे वेदपारगाः ।
वेदपारायणं चान्ये चाहुस्तत्त्वमथापरे ॥ ३
यथाविहितमाचारस् तपस्सर्वे व्रतं गताः ।
आत्मविद्याविधानं यत् तत्तपः परिकीर्तितम् ॥ ४
त्यागस्तपस्तथा शान्तिस् तप इन्द्रियनिग्रहः ।
ब्रह्मचर्यं तपः प्रोक्तम् आहुरेवं द्विजातयः ॥ ५
सदोपवासो यो विद्वान् ब्रह्मचारी सदा भवेत् ॥ ५॥

* कृष्णाचार्यमुद्रितकोशस्थ-घ-कोशपाठानुसारेणायमध्यायो मुद्रितः

यो मुनिश्च सदा धीमान् विघसाशी विमत्सरः ।
ततस्त्वनन्तमप्याहुर् यो नित्यमतिथिप्रियः ॥ ६॥

नान्तराशीस्ततो नित्यम् उपवासी महाव्रतः ।
ऋतुगामी तथा प्रोक्तो विघसाशी स्मृतो बुधैः ॥ ७॥

भृत्यशेषं तु यो भुङ्क्ते यज्ञशेषं तथाऽमृतम् ।
एवं नानार्थसंयोगं तपश्शश्वदुदाहृतम् ॥ ८॥

केषां लोका ह्यपर्यन्तास् सर्वे सत्यव्रते स्थिताः ।
येऽपि कर्ममयं प्राहुस् ते द्विजा ब्राह्मणास्स्मृताः ॥ ९॥

रमन्ते दिव्यभोगैश्च पूजिता ह्यप्सरोगणैः ॥ १०

ज्ञानात्मकं तपश्शब्दं ये वदन्ति विनिश्चिताः ।
ते ह्यन्तराऽऽत्मसद्भावं प्रपन्ना नृपसत्तम ॥ ११

एतत्ते नृपशार्दूल प्रोक्तं यत् पृष्टवानसि ।
यथा वस्तुनि संज्ञानि विविधानि भवन्त्युत ॥ १२

युधिष्ठिरः—

पितामह महाप्राज्ञ राजाधीना नृपाः पुनः ।
अन्यानि च सहस्राणि नामानि विविधानि च ॥ १३

प्रतियोगीनि वै तेषां छन्नान्यस्तमितानि च ।
इदं सर्वं प्राकृतकम् इदं सर्वत्र पश्य वै ॥ १४

तस्माद्यथागतं राजन् यथारुचि नृणां भवेत् ॥ १४॥

भीष्मः—

अस्मिन्नर्थे पुरावृत्तं शृणु राजन् युधिष्ठिर ॥ १५

ब्राह्मणानां समूहे तु यदुवाच सुवर्चला ।

देवलस्य सुता विद्वन् सर्वलक्षणशोभिता ॥ १६

कन्या सुवर्चला नाम योगभावितचेतना ।

हेतुना केन जाता सा निर्द्वन्द्वा नष्टसंशया? ॥ १७

साऽब्रवीत् पितरं विप्रं वरान्वेषणतत्परा ॥ १७॥

कन्या—

अन्धाय मां महाप्राज्ञ देहि वक्षिय सुलोचनम् ।

एवं स्म च पितश्शश्वन्मयेदं......मुने ॥ १८॥

पिता—

न शक्यं प्रार्थितुं वत्से त्वयाऽद्य प्रतिभाति मे ।

अन्धताऽनन्धता चेति विचारो मम जायते ॥ १९॥

उन्मत्तेव सुते वाक्यं भाषसे पृथुलोचने ॥ २०

कन्या—

नाहमुन्मत्तभूताऽद्य बुद्धिपूर्वं ब्रवीमि ते ।

विद्धि वै तादृशं लोके स मां भजति वेदवित् ॥ २१

यान् यांस्त्वं मन्यसे दातुं मां द्विजोत्तम तानिह ।

आनयान्यान् महाभाग ह्यहं द्रक्ष्यामि तेषु तम् ॥ २२

भीष्मः—

तथेति चोक्त्वा तां विप्रः प्रेषयामास शिष्यकान् ।

ऋषेः प्रभावं दृष्ट्वा ते कन्यायाश्च द्विजोत्तमाः ॥ २३
अनेकमुनयो राजन् सम्प्राप्ता देवलाश्रमम् ॥ २३॥

तानागतानथाभ्यर्च्य कन्यामाह पिता महान् ।
यदीच्छसि वरं भद्रे तं विप्रं वरय स्वयम् ॥ २४॥

तथेति चोक्त्वा कल्याणी तप्तहेमनिभानना ।
करसम्मितमध्याङ्गी वाक्यमाह तपोधना: ॥ २५॥

कन्या—

यद्यस्ति सम्मतो विप्रो ह्यन्धोऽनन्धस्स मे वरः ॥ २६

भीष्मः—

नोचुर्विप्रा महाभागं प्रतिवाक्यं ययुश्च ते ॥ २६॥
कन्या च तिष्ठतामत्र पितुर्वेश्मनि भारत ॥ २७

श्वेतकेतुः कहोलस्य स्यालः परमधर्मवित् ।
श्रुत्वा ब्रह्मा तदाऽऽगम्य कन्यामाह महीपते ॥ २८

श्वेतकेतुः—

सोऽहं भद्रे समावृत्तस् त्वयोक्तो यः पुरा द्विजः ।
विशालनयनं विद्धि मामन्धोऽहं वृणीष्व माम् ॥ २९

सुवर्चला—

कथं विशालनेत्रोऽसि कथं वा त्वमलोचनः ।
ब्रूहि पश्चादहं विद्वान् परीक्षे त्वां द्विजोत्तम ॥ ३०

श्वेतकेतुः—

शब्दे स्पर्शे तथा रूपे रसे गन्धे सहेतुकम् ।
न मे प्रवर्तते चेतो न प्रत्यक्षं हि तेषु मे ॥ ३१

अलोचनोऽहं तस्माद्धि न गतिर्विद्यते यतः ॥ ३१॥
येन पश्यति सुश्रोणि भाषते स्पृशते पुनः ।
भुज्यते घ्रायते नित्यं शृणोति मनुते तथा ॥ ३२॥

तच्चक्षुर्विद्यते मह्यं येन पश्यति वै स्फुटम् ॥ ३३

सुलोचनोऽहं भद्रे वै पृच्छ वा किं वदामि ते ।
सर्वमस्मिन् न मे विद्या विद्वान् हि परमार्थतः ॥ ३४

भीष्मः—

सा विशुद्धा ततो भूत्वा श्वेतकेतुं महामुनिम् ।
प्रणम्य पूजयामास तां भार्यां स च लब्धवान् ॥ ३५

वैराग्यसंयुता कन्या तादृशं पतिमुत्तमम् ।
प्राप्ता राजन् महाप्राज्ञ तस्मादर्थः पृथक् पृथक् ॥ ३६

एतत्ते कथितं राजन् किं भूयश्श्रोतुमिच्छसि ॥ ३६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
[अस्मिन्नध्याये ३६॥ श्लोकाः]

---

## ॥ सप्ताधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ज्ञानस्य श्रेयस्साधनत्वज्ञानोपायादिप्रतिपादकेन्द्रप्रह्लादसंवादानुवादः ॥

युधिष्ठिरः—

यदिदं कर्म लोकेऽस्मिञ् शुभं वा यदि वाऽशुभम् ।
पुरुषं योजयत्येव फलयोगेन भारत ॥ १

कर्ता स्वित् तस्य पुरुष उताहो नेति संशयः ।
एतदिच्छामि तत्त्वेन श्रोतुं त्वत्तो वदस्व मे ॥ २

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
प्रह्लादस्य च संवादम् इन्द्रस्य च युधिष्ठिर ॥ ३

असक्तं धूतपाप्मानं कुले जातं बहुश्रुतम् ।
अस्तब्धमनहङ्कारं सत्त्वस्थं संयमे रतम् ॥ ४

तुल्यनिन्दास्तुतिं दान्तं [1]शून्यागारसमाकृतिम् ।
चराचराणां भूतानां विदितप्रभवाप्ययम् ॥ ५

अक्रुध्यन्तमहृष्यन्तम् अप्रियेषु प्रियेषु च ।
काञ्चने वाऽथ लोष्टे वा उभयोस्समदर्शनम् ॥ ६

1. घ—इतः अष्टौ पादा न सन्ति

आत्मनि श्रेयसि ज्ञाने धीरं निश्चितनिश्चयम् ।
परावरज्ञं भूतानां सर्वज्ञं सर्वदर्शिनम् ॥ ७

भक्तं भागवतं नित्यं नारायणपरायणम् ।
ध्यायन्तं परमात्मानं हिरण्यकशिपोस्सुतम् ॥ ८

शक्रः प्रह्लादमासीनम् एकान्ते संयतेन्द्रियम् ।
बुभुत्समानस्तत्प्रज्ञाम् अभिगम्येदमब्रवीत् ॥ ९

शक्रः—

यैः कैश्चित् सम्मतो लोके गुणैस्स्यात् पुरुषो नृषु ।
भवत्यनपगान् सर्वास् तान् गुणाँल्लक्षयामहे ॥ १०

अथ ते लक्ष्यते बुद्धिस् समा बालजडैरिह ।
आत्मानं मन्यमानस्सञ् ज्ञेयं किमिह मन्यसे ॥ ११

बद्धः पाशैश्च्युतस्स्थानाद् द्विषतां वशमागतः ।
श्रिया विहीनः प्रह्लाद शोचितव्ये न शोचसि ॥ १२

प्रज्ञालाभात्तु दैतेय उताहो धृतिमत्तया ।
प्रह्लाद स्वस्थरूपोऽसि पश्यन् व्यसनमात्मनः ॥ १३

भीष्मः—

इति सञ्चोदितस्तेन धीरो निश्चितनिश्चयः ।
उवाच श्लक्ष्णया वाचा स्वां प्रज्ञामनुवर्णयन् ॥ १४

प्रह्लादः—

प्रवृत्तिं च निवृत्तिं च भूतानां यो न बुध्यते ।

तस्य स्तम्भो भवेद्बाल्यान्नास्ति स्तम्भोऽनुपश्यतः ॥ १५

स्वभावात् सम्प्रवर्तन्ते निवर्तन्ते तथैव च ।
सर्वे भावास्तथा भावाः पुरुषार्थो न विद्यते ॥ १६

पुरुषार्थस्य चाभावे नास्ति काचित् स्वका रतिः ।
स्वयं च कुर्वतस्तस्य जातु मानो भवेदिह ॥ १७

यस्तु कर्तारमात्मानं मन्यते साध्वसाधु वा ।
तस्य दोषवती प्रज्ञा न तु प्रज्ञेति मे मतिः ॥ १८

यदि स्यात् पुरुषः कर्ता शक्रात्मश्रेयसे ध्रुवम् ।
आरम्भास्तस्य सिद्ध्येरन् न तु जातु पराभवेत् ॥ १९

अनिष्टस्य च निर्वृत्तिर् अनिर्वृत्तिः प्रियस्य च ।
लक्ष्यते यतमानानां पुरुषार्थस्ततः कुतः ॥ २०

अनिष्टस्याप्यनिर्वृत्तिम् इष्टनिर्वृत्तिमेव च ।
अप्रयत्नेन पश्यामि केषाञ्चिन्न स्वभावतः ॥ २१

प्रतिरूपधराः केचिद् दृश्यन्ते बुद्धिमत्तमाः ।
विरूपेभ्योऽल्पबुद्धिभ्यो लिप्समाना धनागमम् ॥ २२

स्वभावप्रेरितास्सर्वे निविशन्ते यथा गुणान् ।
शुभाशुभं तदा तत्र तस्य किं नाम कारणम् ॥ २३

स्वभावादेव ते सर्वे इति मे निश्चिता मतिः ।
आत्मप्रतिष्ठा प्रज्ञानात् परं नास्ति ततोऽन्यथा ॥ २४

कर्मजं त्विह मन्येऽहं फलयोगं शुभाशुभम् ।
कर्मणां विषयं कृत्स्नम् अहं वक्ष्यामि तच्छृणु ॥ २५

यथा वेदयते कश्चिद् ओदनं पायसं ह्यदन् ।
एवं सर्वाणि कर्माणि स्वभावस्यैव लक्षणम् ॥ २६

विकारान् नैव यो वेद न वेद प्रकृतिं पराम् ।
तस्य स्तम्भो भवेद्बाल्यान्नास्ति स्तम्भोऽनुपश्यतः ॥ २७

स्वभावभावितान् भावान् सर्वानेवेह निश्चये ।
बुद्ध्यमानस्य वा दर्पो मानो वा किं करिष्यति ॥ २८

वेद धर्मविधिं कृत्स्नं भूतानां चाप्यनित्यताम् ।
तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत् ॥ २९

निर्ममो निरहङ्कारो निरीहो मुक्तबन्धनः ।
स्वस्थो ऽव्यपेतः पश्यामि भूतानां प्रभवाप्ययौ ॥ ३०

कृतप्रज्ञस्य दान्तस्य वितृष्णस्य निराशिषः ।
नायासो विद्यते तस्य पश्यतो लोकविद्यया ॥ ३१

प्रकृतौ च विकारे च न मे प्रीतिर्न च द्विषे ।
द्वेष्टारं च न पश्यामि यो ममाद्य ममायते ॥ ३२

नोर्ध्वं नावाङ्नतिर्यक् च न क्वचिच्छक्र कामये ।
न हि ज्ञेये न विज्ञाने नाज्ञाने [1]विद्यतेऽन्तरम् ॥ ३३

---

1. ख—शर्म विद्यते

शक्रः—

येनैषा लभ्यते प्रज्ञा येन शान्तिरवाप्यते ।
प्रब्रूहि तमुपायं मे सम्यक् प्रह्लाद पृच्छते ॥ ३४

प्रह्लादः—

आर्जवेनाप्रमादेन प्रसादेनात्मवत्तया ।
गुरुशुश्रूषया शक्र पुरुषो लभते महत् ॥ ३५

स्वभावाल्लभते प्रज्ञां शान्तिमेति स्वभावतः ।
स्वभावादेव तत् सर्वं यत् किञ्चिदनुपश्यसि ॥ ३६

भीष्मः—

इत्युक्तो दैत्यपतिना शक्रो विस्मयमागमत् ।
प्रीतिमांश्च तदा राजंस् तद्वाक्यं प्रत्यपूजयत् ॥ ३७

स तदा [1]सर्वदेवेन्द्रस् त्रैलोक्यपतिरीश्वरः ।
[2]असुरेन्द्रमुपामन्त्र्य जगाम स्वं निवेशनम् ॥ ३८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥
[ अस्मिन्नध्याये ३८ श्लोकाः ]

---

1. ख-ग—भ्यर्च्य दैत्येन्द्रं
2. ख—सुरेन्द्रस्तमुपामन्त्र्य

## ॥ अष्टाधिकद्विशततमोऽध्यायः ॥

इन्द्रबलिसंवादः ॥ १ ॥ इन्द्रावमानितेन बलिना सम्प्रति गर्वभञ्जक-वचनोपन्यासः ॥ २ ॥

युधिष्ठिरः—

यया बुद्ध्या महीपालो भ्रष्टश्रीर्विचरेन्महीम् ।
कालदण्डविनिष्पिष्टस् तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
वासवस्य च संवादं बलेर्वैरोचनस्य च ॥ २

पितामहमुपागम्य प्रणिपत्य कृताञ्जलिः ।
सर्वानेवासुराञ्जित्वा बलिं पप्रच्छ वासवः ॥ ३

शक्रः—

यस्य स्म ददतो वित्तं [1]न कदाचन हीयते ।
तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम् ॥ ४

[2]स एव ह्यस्तमयते स स्म द्योतयते रविः ।
स च वर्षति वर्षाणि यथाकालमतन्द्रितः ॥ ५

तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम् ।

---

1. ख—क्षीयते न कदाचन
2. ख—स एव ह्यस्तमयते सर्वा विद्योतते दिशः ।
ग—स एव ह्यस्तमयते स स्म द्योतयते दिशः ।　　[पाठान्तरम्]

स वायुर्वरुणश्चैव स रविस्स च चन्द्रमाः ॥ ६

सोऽग्निस्तपति भूतानि स जलं च भवत्युत ।
तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम् ॥ ७

ब्रह्मा—

नैतत्ते साधु मघवन् यदेनमनुपृच्छसि ।
पृष्टस्तु नानृतं ब्रूयात् तस्माद्वक्ष्यामि ते बलिम् ॥ ८

उष्ट्रेषु यदि वा गोषु [1]खरेषु ह्वसु वाऽनघ ।
वरिष्ठो भविता जन्तुश् शून्यागारप्रतिश्रयः ॥ ९

शक्रः—

यदि स्म बलिना ब्रह्मञ् शून्यागारे समेयिवान् ।
हन्यामेनं न वा हन्यां तद्ब्रह्मन्ननुशाधि माम् ॥ १०

ब्रह्मा—

मा स्म शक्र बलिं हिंसीर् न बलिर्वधमर्हति ।
न्यायस्तु शक्र प्रष्टव्यस् त्वया वासव काम्यया ॥ ११

भीष्मः—

एवमुक्तो भगवता महेन्द्रः पृथिवीं तदा ।
चचारैरावतस्कन्धम् अधिरुह्य श्रिया वृतः ॥ १२

ततो ददर्श स बलिं खरवेषेण संवृतम् ।
यथाख्यातं भगवता शून्यागारकृतालयम् ॥ १३

---

1. ख-ग-ब—खरेष्वश्वेषु

शक्रः—

खरयोनिमनुप्राप्य तुषभक्षोऽसि दानव ।
इयं ते योनि[1]रसमा शोचनार्हो न शोचसि ॥ १४

अदृष्टं बत पश्यामि द्विषतां वशमागतम् ।
श्रिया विहीनं मित्रैश्च भ्रष्टैश्वर्यपराक्रमम् ॥ १५

यद्यद्यानसहस्रैस्त्वं ज्ञातिभिः परिवारितः ।
लोकान् प्रतापयन् सर्वान् यास्यस्मानवितर्कयन् ॥ १६

[2]त्वन्मुखाश्चैव दैतेया व्यतिष्ठंस्तव शासने ।
अकृष्टपच्या पृथिवी तवैश्वर्ये बभूव ह ॥ १७

[3]इदं च तेऽद्य व्यसनं शोचस्याहो न शोचसि ॥ १७॥

यदाऽतिष्ठस्समुद्रस्य पूर्वकूले विलेलिखन् ।
ज्ञातिभ्यो विभजन् वित्तं तदाऽऽसीत्ते मनः कथम् ॥ १८॥

यत्ते सहस्रसमिता ननृतुर्देवयोषितः ।
बहूनि वर्षपूगानि विहारे दीप्यतश्श्रिया ॥ १९॥

सर्वाः पुष्करमालिन्यस् सर्वाः काञ्चनसप्रभाः ।
कथमद्य तदा चैव मनस्ते दानवेश्वर ॥ २०॥

छत्रं तदाऽऽसीत् सुमहत् सौवर्णमपि भूषितम् ।

---

1. ख-ग—रधमा शोचस्याहो
2. अ-क-ग-घ—अर्धद्वयं नास्ति
3. अ-क-ग-घ—नास्तीदमर्धम्

यूपस्तदाऽऽसीत् सुमहान् यजतस्सर्वकाञ्चनः ॥ २१ ॥
ननृतुर्यत्र गन्धर्वाष् षट् सहस्राणि सप्तधा ॥ २२

यत्राददास्सहस्राणाम् अयुतानि गवां दश ।
अनन्तरं सहस्रेण तदाऽऽसीद्दैत्य का मतिः ॥ २३

यदा तु पृथवीं सर्वां यजमानोऽनुपश्यथाः ।
शम्याक्षेपेण विधिना तदाऽऽसीत् किं नु ते हृदि ॥ २४

न ते पश्यामि भृङ्गारं न च्छत्रं व्यजनं न च ।
ब्रह्मदत्तां च ते मालां न पश्याम्यसुराधिप ॥ २५

भीष्मः—

[1]ततः प्रहस्य स बलिर् वासवेन समीरितम् ।
निशम्य मानगम्भीरं सुरराजमथाब्रवीत् ॥ २६

बलिः—

[2]अहो हि तव बालिश्यम् इह देवगणाधिप ।
अयुक्तं देवराजस्य तव कष्टमिदं वचः ॥ २७

न त्वं द्रक्ष्यसि भृङ्गारं न च्छत्रं व्यजनं न च ।
ब्रह्मदत्तां च मे मालां न तु द्रक्ष्यसि वासव ॥ २८

गुहायां निहितानि त्वं मम रत्नानि पृच्छसि ।
यदा मे भविता कालस् तदा त्वं तानि द्रक्ष्यसे ॥ २९

---

1. ख—अर्धचतुष्टयं नास्ति
2. घ—अर्धद्वयं नास्ति

न त्वेतदनुरूपं ते यशसो वा कुलस्य वा ।
समृद्धार्थोऽसमृद्धार्थं यन्मां कत्थितुमर्हसि ॥ ३०

न हि दुःखेषु शोचन्ति न प्रहृष्यन्ति चर्द्धिषु ।
कृतप्रज्ञा ज्ञानतृप्ताः क्षान्तास्सन्तो मनीषिणः ॥ ३१

त्वं तु प्राकृतया बुद्ध्या पुरन्दर विकत्थसे ।
यथाऽहमेवं भावी त्वं तदा नैवं वदिष्यसि ॥ ३२

[1]ऐश्वर्यमदमोहेन स त्वं किं नानुबुद्ध्यसे ।
कालेन बुद्ध्यसे राजन् विनिपातेन योजितः ॥ ३३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥
[अस्मिन्नध्याये ३३ श्लोकाः]

---

1. ख—अर्धद्वयं नास्ति

## ॥ नवाधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति सर्वस्यापि कालनियामकेश्वरनियम्यत्वप्रतिपादकशक्रबलिसंवादानुवादः ॥

भीष्मः—

पुनरेव तु तं शक्रः प्रहसन्निदमब्रवीत् ।
निश्श्वसन्तं यथा नागं [1]प्रव्याहाराय भारत ॥ १

शक्रः—

उष्ट्रयानसहस्रेण ज्ञातिभिः परिवारितः ।
लोकान् प्रतापयन् सर्वान् यास्यस्मान[2]वशातयन् ॥ २

दृष्ट्वा सुकृपणां चेमाम् अवस्थामात्मनो बले ।
ज्ञातिमित्रपरित्यक्तश् [3]शोच्योऽस्याहो न शोचसि ॥ ३

[4]प्रीतिं प्राप्यातुलां पूर्वं लोकांश्चात्मवशे स्थितान् ।
विनिपातमिमं चाद्य शोचस्याहो न शोचसि ॥ ४

बलिः—

[5]अनित्यमुप[6]लक्ष्येऽहं कालपर्यायमात्मनः ।

---

1. ग—प्रत्याहाराय 2. ख-ग—वितर्कयन्
3. ख-ग—शोचस्याहो घ—शोचनार्हो
4. अ-क-ख-घ—अर्धद्वयं नास्ति
5. ख—अतीत्य तांश्च द्रष्टाऽहं
6 ग—लक्ष्येदं घ—लक्ष्येमं

तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत् ॥ ५

अन्तवन्त इमे देहा भूतानाममराधिप ।
[1]तेन शक्र न शोचामि नापराधादिदं मम ॥ ६

जीवितं च शरीरं च जात्या वै सह जायते ।
उभे सह विवर्धेते उभे सह विनश्यतः ॥ ७

न हीदृशमिमं भावम् अवशः प्राप्य केवलम् ।
सदैवमभिजानामि का व्यथा मे विजानतः ॥ ८

भूतानां निधनं निष्ठा स्रोतसामिव सागरः ।
नैतत् सम्यग्विजानन्तो नरा मुह्यन्ति वज्रधृत् ॥ ९

ये त्वेवं नाभिजानन्तो रजोमोहपरायणाः ।
ते कृच्छ्रं प्राप्य सीदन्ति बुद्धिर्ह्येषां प्रणश्यति ॥ १०

बुद्धिलाभात्तु पुरुषस् सर्वं नुदति किल्बिषम् ।
विपाप्मा लभते सत्त्वं सत्त्वस्थस्सम्प्रसीदति ॥ ११

ततस्तु ये निवर्तन्ते जायन्ते च पुनः पुनः ।
कृपणाः परितप्यन्ते तेऽनर्थैरभिचोदिताः ॥ १२

अर्थसिद्धिमनर्थं च जीवितं मरणं तथा ।
सुखं दुःखं फलं चैव न द्वेष्मि न च कामये ॥ १३

हतं हन्ति हतो ह्येव यो नरो हन्ति कञ्चन ।

---

1. अ-क—तेन शक्र न शोचामि सर्वं ह्येवेदमन्तवत् । [अधिकः पाठः]

उभौ तौ न विजानीतो यश्च हन्ति हतश्च यः ॥ १४

हत्वा जित्वा च मघवन् यः कश्चित् पुरुषायते ।
अकर्ता ह्येव भवति कर्ता त्वेव करोति तत् ॥ १५

को हि लोकस्य कुरुते विनाशप्रभवावुभौ ।
कृतं हि [1]तत् कृतेनैव कर्ता तस्यापि चापरः ॥ १६

पृथिवी वायुराकाशम् आपो ज्योतिश्च पञ्चमम् ।
एतद्योनीनि भूतानि तत्र का परिदेवना ॥ १७

महाविद्योऽल्पविद्यश्च बलवान् दुर्बलश्च यः ।
दर्शनीयो विरूपश्च सुभगो दुर्भगश्च यः ॥ १८

सर्वं कालस्समादत्ते गम्भीरस्स्वेन तेजसा ।
तस्मिन् कालवशं प्राप्ते का व्यथा मे विजानतः ॥ १९

[2]जग्धमेवानुभवति मतमेवानुमन्यते ।
नाश्यते नष्टमेवाग्रे लब्धव्यं लभते नरः ॥ २०

नास्य द्वीपः कुतः पारं न पारं सम्प्रदृश्यते ।
नान्तमस्य प्रपश्यामि विधे[3]र्दैवस्य चिन्तयन् ॥ २१

यदि मे पश्यतः कालो भूतानि न विनाशयेत् ।

---

1. ख—योऽभिमन्येत
2. ख-ग—दग्धमेवानुदहति हत एवानुहन्यते । [पाठान्तरम्]
3. ग—र्दिव्यस्य

स्यान्मे हर्षश्च दर्पश्च क्रोधश्चैव शचीपते ॥ २२
तुषभक्षं हि मां ज्ञात्वा प्रविविक्तजने गृहे ।
बिभ्रतं गार्दभं रूपम् आगम्य परिगर्हसि ॥ २३
इच्छन्नहं विकुर्यां हि रूपाणि बहुधाऽऽत्मनः ।
विभीषणानि यानीक्ष्य पलायेथास्त्वमेव मे ॥ २४
कालस्सर्वं समादत्ते कालस्सर्वं प्रयच्छति ।
कालेन विधृतं सर्वं मा कृथाश्शक्र पौरुषम् ॥ २५
पुरा [1]सर्वे प्रद्रवन्ते मयि क्रुद्धे पुरन्दर ।
अवैमि त्वस्य लोकस्य धर्मं शक्र सनातनम् ॥ २६
त्वमप्येवमवेक्षस्व माऽऽत्मना विस्मयं गमः ॥ २६॥
प्रभवश्चाप्रभावश्च नात्मसंस्थः कदाचन ॥ २७
कौमारमेव ते चित्तं तथैवाद्य यथा पुरा ।
समवेक्षस्व मघवन् बुद्धिं विन्दस्व नैष्ठिकीम् ॥ २८
देवा मनुष्याः पितरो गन्धर्वोरगराक्षसाः ।
आसन् सर्वे मम वशे तत् सर्वं वेत्थ वासव ॥ २९
नमस्तस्यै दिशायै तु यस्यां वैरोचनो बलिः ।
इति मामभ्यनन्दन्त बुद्धिमात्सर्यमोहिताः ॥ ३०
नाहं तदनुशोचामि नात्मभ्रंशं शचीपते ।

---

1. ख—सर्वं प्रव्यथते ग—सर्वे प्रतप्यन्ते

एवं मे निश्चिता बुद्धिः विधेस्तिष्ठाम्यहं वशे ॥ ३१

दृश्यते हि कुले जातो दर्शनीयः प्रतापवान् ।
दुःखं जीवन् सहामात्यैर् भवितव्यं हि तत् तथा ॥ ३२

[1]दौष्कुलेयस्तथा मूढो दुर्जातश्शक्र दृश्यते ।
सुखं जीवन् सहामात्यो भवितव्यं हि तत् तथा ॥ ३३

कल्याणी रूपसम्पन्ना दुर्भगा शक्र दृश्यते ।
अलक्षणा विरूपा च सुभगा शक्र दृश्यते ॥ ३४

नैतदस्मत्कृतं शक्र नैतच्छक्र त्वया कृतम् ।
यत् त्वमेवं गतो वज्रिन् यच्चाप्येवं गता वयम् ॥ ३५

न कर्म तव नान्येषां कुतो मम शतक्रतो ।
ऋद्धिरप्यथवाऽनृद्धिः पर्यायगतमेव तत् ॥ ३६

पश्यामि त्वां विराजन्तं देवराजमवस्थितम् ।
श्रीमन्तं द्युतिमन्तं च गर्जन्तं च ममोपरि ॥ ३७

एवं चैतन्न चेत् कालो मामाक्रम्यास्थितो भवेत् ।
पातयेयमहं त्वाऽद्य सवज्रमपि मुष्टिना ॥ ३८

न तु विक्रमकालोऽयं क्षमाकालोऽयमागतः ।
कालस्स्थापयते सर्वं कालः पचति वै तथा ॥ ३९

---

1. अ-क-ग-घ—अर्धद्वयं नास्ति

मां चेदभ्यागतः कालो दानवेश्वरमूर्जितम् ।
गर्जन्तं प्रतपन्तं च कमन्यं नागमिष्यति ॥ ४०

द्वादशानां हि भवताम् आदित्यानां महात्मनाम् ।
तेजांस्येकेन सर्वेषां देवराज धृतानि मे ॥ ४१

अहमेवोद्वहाम्यापो विसृजामि च वासव ।
तपामि चैव त्रैलोक्यं विद्योताम्यहमेव च ॥ ४२

संरक्षामि [1]विमुञ्चामि ददाम्यहमथाददे ।
संयच्छामि नियच्छामि लोकेषु प्रभुरीश्वरः ॥ ४३

तदद्य विनिवृत्तं मे प्रभुत्वममराधिप ।
कालसैन्यावगाढस्य सर्वं न प्रतिभाति मे ॥ ४४

नाहं कर्ता न चैव त्वं नान्यः कर्ता शचीपते ।
पर्यायेण हि भुज्यन्ते लोकाश्शक्र यदृच्छया ॥ ४५

मासार्धमासवेश्मानम् अहोरात्राभिसंवृतम् ।
ऋतुद्वारं वायुमुखं आहुर्वेदविदो जनाः ॥ ४६

आहुस्सर्वमिदं चिन्त्यं जनाः केचिन्मनीषिणः ।
अस्याः पञ्चैव चिन्तायाः पर्येष्याणि च पञ्चधा ॥ ४७

[2]गम्भीरं गहनं ब्रह्म महत्तोयार्णवं यथा ।
अनादिनिधनं प्राहुर् अक्षरं परमेव च ॥ ४८

---

1. ख—विलुम्पामि 2. ग—अर्धपञ्चकं नास्ति

सत्त्वेषु लिङ्गमावेद्यम् अलिङ्गमपि तत् स्वयम् ।
मन्यन्ते ध्रुवमेवैनं ये जनास्तत्त्वदर्शिनः ॥ ४९

[1]यमिन्द्रियाणि सर्वाणि नानुपश्यन्ति पञ्चधा ।
तं कालमभिजानीहि यस्य सर्वमिदं वशे ॥ ५०

भूतानां तु विपर्यासं मन्यन्ते [2]गतिनिश्चयात् ।
न ह्येतावद्भवेद्ग्राह्यं न यस्याः प्रकृतेः पुनः ॥ ५१

गतिं हि सर्वभूतानाम् अगत्वा क गमिष्यसि ।
यो धावता न हातव्यस् तिष्ठन्नपि न हीयते ॥ ५२

[3]आहुश्चैनं केचिदग्निं केचिदाहुः प्रजापतिम् ।
ऋतून् मासार्धमासांश्च दिवसांश्च क्षणांस्तथा ॥ ५३

पूर्वाह्णमपराह्णं च मध्याह्नमपि चापरे ।
[4]मुहूर्तमपि चैवाहुर् एकं सन्तमनेकधा ॥ ५४

[5]बहूनीन्द्रसहस्राणि समतीतानि वासव ।
बलवीर्योपपन्नानि यथैव त्वं शचीपते ॥ ५५

त्वामप्यतिबलं शक्र देवराजं बलोत्कटम् ।

1. ख—नासीदमर्धद्वयम् 2. ब—तत्त्व
3. ख—तमिन्द्रियाणि सर्वाणि नानुपश्यन्ति पञ्चधा । [अधिकः पाठः]
4. अ—नासीदमर्धम्
5. ख—तं कालमिति जानीहि यस्य सर्वमिदं वशे । [अधिकः पाठः]

प्राप्ते काले महावीर्यः कालस्संशमयिष्यति ॥ ५६

य इदं सर्वमादत्ते तस्माच्छक्र स्थिरो भव ।
मया त्वया च पूर्वैश्च न स शक्योऽतिवर्तितुम् ॥ ५७

यामेतां प्राप्य जानीषे राज्यश्रियमनुत्तमाम् ।
स्थिता मयीति तन्मिथ्या नैषाऽप्येकत्र तिष्ठति ॥ ५८

स्थिता हीन्द्रसहस्रेषु त्वद्विशिष्टतमेष्वियम् ।
मां च लोला परित्यज्य त्वामगाद्विबुधाधिप ॥ ५९

मैवं शक्र पुनः कार्षीश् शान्तो भवितुमर्हसि ।
त्वामप्येवं गतं हित्वा क्षिप्रमन्यं गमिष्यति ॥ ६०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकषष्ठितमोऽध्यायः ॥ ६१ ॥
[अस्मिन्नध्याये ६० श्लोकाः]

## ॥ दशाधिकद्विशततमोऽध्यायः ॥



बलिशरीरान्निर्गच्छन्त्या श्रिया शक्रं प्रति स्वनिर्गमनकारणाभिधानपूर्वकं ततः स्वस्य स्थानचतुष्टयवरणम् ॥ १ ॥ इन्द्रबलिसंवादश्च ॥ २ ॥ श्रीसन्निधानम् ॥ ३ ॥

---

भीष्मः—

शतक्रतुरथापश्यद् बलेर्दीप्तां महात्मनः ।
स्वरूपिणीं शरीराद्धि निष्क्रामन्तीं ततश्श्रियम् ॥ १

तां दीप्तां प्रभया दृष्ट्वा भगवान् पाकशासनः ।
विस्मयोत्फुल्लनयनो बलिं पप्रच्छ वासवः ॥ २

शक्रः—

बले केयमपक्रान्ता रोचमाना शिखण्डिनी ।
[1]त्वयि स्थिता सकेयूरा दीप्यमाना स्वतेजसा ॥ ३

बलिः—

न हीमामासुरीं वेद्मि न दैवीं च न मानुषीम् ।
त्वमेवैनां पृच्छ मा वा यथेष्टं कुरु वासव ॥ ४

शक्रः—

का त्वं बलेरपक्रान्ता रोचमाना शिखण्डिनी ।
अजानतो ममाचक्ष्व नामधेयं शुचिस्मिते ॥ ५

---

1. च—अर्धद्वयं नास्ति

का नु तिष्ठसि मायेव दीप्यमाना स्वतेजसा ।
हित्वा दैत्येश्वरं सुभ्रु तन्ममाचक्ष्व पृच्छतः ॥　　६

श्रीः—

न मां विरोचनो वेद नायं वैरोचनो बलिः ।
आहुर्मां दुस्सहेत्येवं विवित्सेति च मां विदुः ॥　　७

भूतिर्लक्ष्मीति मामाहुश् श्रीरित्येव च [1]नामतः ।
त्वं मां शक्र न जानीषे सर्वे देवा न मां विदुः ॥　　८

शक्रः—

किमिदं त्वं मम कृते उताहो बलिनः कृते ।
दुस्सहे विजहास्येनं चिरसंवासिनी सती ॥　　९

श्रीः—

न धाता न विधाता वा विदधाति कथञ्चन ।
काले तु पर्यगामेव मैवं शक्रावमन्यथाः ॥　　१०

शक्रः—

कथं त्वया परित्यक्तः किमर्थं वा शिखण्डिनि ।
कथं च मां न जह्यास्त्वं तन्मे ब्रूहि शुचिस्मिते ॥　　११

श्रीः—

सत्ये स्थिताऽस्मि दाने च व्रते तपसि चैव हि ।
पराक्रमे च धर्मे च पराचीनस्ततो बलिः ॥　　१२

---

1. ख-ग—मानद

ब्रह्मण्योऽयं पुरा भूत्वा सत्यवादी जितेन्द्रियः ।
[1]अग्नित्रयं ब्राह्मणान् वै उपासित्वाऽस्पृशद्व्रतम् ॥ १३

यज्ञशीलः पुरा भूत्वा मामेव यजते स्वयम् ।
ततः प्रहाय मूढात्मा कालेनोपनिपीडितः ॥ १४

अपक्रान्ता ततश्शक्र त्वयि वत्स्यामि वासव ।
[2]अप्रमत्तेन धार्याऽस्मि तपसा विक्रमेण च ॥ १५

शक्रः—

कोऽस्ति देवमनुष्येषु सर्वभूतेषु वा पुमान् ।
यस्त्वामेको विषहितुं शक्नुयात् कमलालये ॥ १६

श्रीः—

नैव देवो न गन्धर्वो नासुरो न च राक्षसः ।
यो मामेको विषहितुं कश्चिच्छक्तः पुरन्दर ॥ १७

शक्रः—

तिष्ठेथा मयि नित्यं त्वं यथा तद्ब्रूहि मे शुभे ।
तत् करिष्यामि ते वाक्यं [3]नानृतं वक्तुमर्हसि ॥ १८

श्रीः—

स्थास्यामि नित्यं देवेन्द्र यथा त्वयि निबोध तत् ।
विधिना वेददृष्टेन चतुर्धा विभजस्व माम् ॥ १९

---

1. ख-ग—अभ्यसूयन् ब्राह्मणान् वै उच्छिष्टश्चास्पृशद्घृतम् ।
2. ख-ग-घ—अप्रमादेन [पाठान्तरम्]
3 ख—तत्त्वं त्वं वक्तु; ग—ऋतं त्वं वक्तु

शक्रः—

अहं वै त्वां निधास्यामि यथाशक्ति यथाबलम् ।
न तु मेऽतिक्रमस्स्याद्वै तथा लक्ष्मि तवान्तिके ॥ २०

भूमिरेषा मनुष्येषु धारिणी सर्वभाविनी ।
सा ते पादं तितिक्षेत समर्था हीति मे मतिः ॥ २१

श्रीः—

एष मे निहितः पादो योऽयं भूमौ प्रतिष्ठितः ।
द्वितीयं शक्र पादं मे तस्मात् सुनिहितं कुरु ॥ २२

शक्रः—

आप एव मनुष्येषु द्रवन्ति परिधारणे ।
तास्ते पादं तितिक्षन्ताम् अलमापस्तितिक्षितुम् ॥ २३

श्रीः—

[1]एष मे निहितः पादो योऽयमप्सु प्रतिष्ठितः ।
तृतीय शक्र पादं मे तस्मात् सुनिहितं कुरु ॥ २४

शक्रः—

यस्मिन् यज्ञाश्च वेदाश्च यस्मिन् देवाः प्रतिष्ठिताः ।
तृतीयं पादमग्निस्ते सुधृतं धारयिष्यति ॥ २५

श्रीः—

एष मे निहितः पादो योऽयमग्नौ प्रतिष्ठितः ।
चतुर्थं शक्र पादं मे तस्मात् सुनिहितं कुरु ॥ २६

---

1. ब—अर्धद्वयं नास्ति

शक्रः—

ये वै सन्तो मनुष्येषु ब्रह्मण्यास्सत्यवादिनः ।
ते ते पादं तितिक्षन्ताम् अलं सन्तस्तितिक्षितुम् ॥ २७

श्रीः—

एष मे निहितः पादो योऽयं सत्सु प्रतिष्ठितः ।
एवं सुनिहितां शक्र भूतेषु परिधत्स्व माम् ॥ २८

शक्रः—

भूतानामिह वै यस्त्वां मया विनिहितां सतीम् ।
उपहन्यात् स मे द्वेष्यस् तथा शृण्वन्तु मे वचः ॥ २९

भीष्मः—

ततस्त्यक्तश्श्रिया राजा दैत्यानां बलिरब्रवीत् ॥ २९॥

बलिः—

यावत् पुरस्तात् प्रतपेत् तावद्वै दक्षिणां दिशम् ।
पश्चिमां तावदेवापि तथोदीचीं दिवाकरः ॥ ३०॥

तथा मध्यन्दिने सूर्यो नास्तमेति यदा तदा ।
पुनर्देवासुरं युद्धं भावि जेताऽस्मि वै तदा ॥ ३१॥

सर्वलोकान् यदाऽऽदित्यो मध्यस्थस्तापयिष्यति ।
तदा देवासुरे युद्धे जेता त्वाऽहं शतक्रतो ॥ ३२॥

शक्रः—

ब्रह्मणाऽस्मि समादिष्टो न हन्तव्यो भवानिति ।

तेन तेऽहं बले वज्रं न मुञ्चामि तु मूर्धनि ॥ ३३॥

यथेष्टं गच्छ दैत्येन्द्र स्वस्ति तेऽस्तु महासुर ॥ ३४

आदित्यो नास्ति तपिता कदाचिन्मध्यतस्स्थितः ।

स्थापितो ह्यस्य समयः पूर्वमेव स्वयम्भुवा ॥ ३५

अजस्रं पर्यटत्यर्कस् तेजसा प्रतपन् प्रजाः ॥ ३५॥

अयनं तस्य षण्मासा उत्तरं दक्षिणं तथा ।

तेन संयाति लोकेषु शीतोष्णे विसृजन् रविः ॥ ३६॥

भीष्मः—

एवमुक्तस्तु दैत्येन्द्रो बलिरिन्द्रेण भारत ।

जगाम दक्षिणामाशाम् उदीचीं तु पुरन्दरः ॥ ३७॥

इत्येतद्बलिना गीतम् अनहङ्कारसंज्ञितम् ।

वाक्यं श्रुत्वा सहस्राक्षः खमेवारुरुहे तदा ॥ ३८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥
[अस्मिन्नध्याये ३८॥ श्लोकाः]

———

## ॥ एकादशाधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति आपदि शोकत्यागपूर्वकं भगवदनुचिन्तनादेः श्रेयस्साधनताप्रतिपादकशक्रनमुचिसंवादानुवादः ॥



भीष्मः—

अत्रैवोदाहरन्तीमम् इतिहासं पुरातनम् ।
शतक्रतोश्च संवादं नमुचेश्च युधिष्ठिर ॥ १

श्रिया विहीनमासीनम् अक्षोभ्यमिव सागरम् ।
भवाभवज्ञं भूतानाम् इत्युवाच पुरन्दरः ॥ २

शक्रः—

बद्धः पाशैश्च्युतस्स्थानाद् द्विषतां वशमागतः ।
श्रिया विहीनो नमुचे शोचस्याहो न शोचसि ॥ ३

नमुचिः—

अनवाप्यं च शोकेन शरीरं चोपशुष्यति ।
अमित्राश्च प्रहृष्यन्ति नास्ति शोके सहायता ॥ ४

तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत् ॥ ४॥

सन्तापाद्भ्रश्यते रूपं धर्मश्चैव सुरेश्वर ।
विनीय खलु तद्दुःखम् आगतं वै मनस्सुखम् ॥ ५॥

ध्यातव्यं मनसा हृद्यं कल्याणं वै विजानता ॥ ६

यथा यथा हि पुरुषः कल्याणे कुरुते मनः ।
तथैवास्य प्रसिध्यन्ति सर्वार्था नात्र संशयः ॥ ७

एकश्शास्ता न द्वितीयोऽस्ति शास्ता
गर्भे शयानं पुरुषं शास्ति शास्ता ।
तेनानुशिष्टः प्रवणादिवोदकं
यथा नियुक्तोऽस्मि तथा भवामि ॥ ८

भावाभावावभिजानन् गरीयो
जानामि श्रेयो ननु तत् करोमि ।
[1]आशां सुधर्म्यां सुहृदां सुकुर्वन्
यथा नियुक्तोऽस्मि तथा भवामि ॥ ९

यथा यथाऽस्य प्राप्तव्यं प्राप्नोत्येव तथा तथा ।
भवितव्यं यथा यच्च भवत्येव तथा तथा ॥ १०

यत्र यत्रैव संयुक्तो धात्रा गर्भे पुनः पुनः ।
तत्र तत्रैव वसति न तत्र स्वयमिच्छति ॥ ११

भावो योऽयमनुप्राप्तो भवितव्यमिदं मया ।
इति यस्य सदा भावो न स शोचेत् कदाचन ॥ १२

पर्यायैर्हन्यमानानाम् अभिषङ्गो न विद्यते ।
दुःखमेतत्तु यद्द्वेष्टा कर्ताऽहमिति मन्यते ॥ १३

---

1. ख—आशासु हर्म्यासु हृदासु ; घ—आशास्सुधर्मां
ग—आशा सुधर्म्या सुहृदाऽनुकुर्वन् × भवामि

ऋषींश्च देवांश्च महासुरांश्च
त्रैविद्यवृद्धांश्च महामुनींश्च ।
कानापदो नाभिभवन्ति लोके
परावरज्ञास्तु न सम्भ्रमन्ति ॥ १४

न पण्डितः क्रुद्ध्यति नाभिषज्यते
न चापि संसीदति न प्रहृष्यति ।
न चार्थकृच्छ्रव्यसनेषु शोचति
स्थितः प्रकृत्या हिमवानिवाचलः ॥ १५

यमर्थसिद्धिः परमा न हर्षयेत्
तथैव काले व्यसनं न मोहयेत् ।
सुखं च दुःखं च तथैव मध्यमं
निषेवते यस्स धुरन्धरो नरः ॥ १६

यो यामवस्थां पुरुषोऽधिगच्छेत्
तस्यां रमेतापरितप्यमानः ।
एवं प्रवृद्धं प्रणुदन् मनोजं
[1]सन्तापमायासकरं शरीरात् ॥ १७

संसत्सदः परिषदस्सभासदस्
सम्प्राप्य योऽनु कुरुते सदा भयम् ।

---

1. अ-क-ख-घ—सन्तापनीयं सकलं शरीरात्

सद्धर्मतत्त्वमवगाह्य बुद्धिमान्
　　यो ह्यभ्युपैति स धुरन्धरो नरः ॥　　१८

प्रज्ञाय कर्माणि दुरत्ययानि
　　न वै प्राज्ञो मुह्यति मोहकाले ।
स्थानाच्च्युतश्च न मुमोह गौतमस्
　　तावत् कृच्छ्रामापदं प्राप्य वृद्धः ॥　　१९

[1]न शौर्येण न वीर्येण प्रज्ञया पौरुषेण वा ।
अलभ्यं लभते मर्त्यस् तत्र का परिदेवना ॥　　२०

यदेव मम जातस्य धातारो विदधुः पुरा ।
तदेवानुभविष्यामि मृत्युः किं नु करिष्यति ॥　　२१

लब्धव्यान्येव लभते गन्तव्यान्येव गच्छति ।
प्राप्तव्यान्येव प्राप्नोति दुःखानि च सुखानि च ॥　　२२

एतद्विदित्वा कार्त्स्न्येन यो न मुह्यति मानवः ।
कुशलस्सुखदुःखेषु स वै सर्वसुखी नरः ॥　　२३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
[ अस्मिन्नध्याये २३ श्लोकाः ]

---

1. ख-ग—न मन्त्रबलवीर्येण

## ॥ द्वादशाधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति विपदि धैर्यालम्बनस्य सुखसाधनताप्रतिपादकबलिशक्रसंवादानुवादः ॥

युधिष्ठिरः—

मग्नस्य व्यसने कृच्छ्रे किं श्रेयः पुरुषस्य ह ।
बन्धुनाशे महीपाल राज्यनाशेऽपि वा पुनः ॥ १

त्वं हि नः परमो वक्ता लोकेऽस्मिन् भरतर्षभ ।
एतद्भवन्तं पृच्छामि तन्मे त्वं वक्तुमर्हसि ॥ २

भीष्मः—

पुत्रदारैस्सुखैश्चैव वियुक्तस्य धनेन च ।
मग्नस्य व्यसने कृच्छ्रे धृतिश्श्रेयस्करी नृप ॥ ३

धैर्येण युक्तस्य सतश् शरीरं न विशीर्यते ।
आरोग्यात्तु शरीरस्य स पुनर्विन्दते श्रियम् ॥ ४

यश्च प्राज्ञो नरस्तात सात्त्विकीं वृत्तिमास्थितः ।
तस्य स्थैर्यं च धैर्यं च व्यवसायश्च कर्मसु ॥ ५

अत्रैवोदाहरन्तीमम् इतिहासं पुरातनम् ।
[1]बलिवासवसंवादं पुनरेव युधिष्ठिर ॥ ६

---

1. ग—बलेश्शक्रस्य संवादं

वृत्ते देवासुरे युद्धे दैत्यदानवसङ्क्षये ।
विष्णुक्रान्तेषु लोकेषु देवराजे शतक्रतौ ॥ ७

इज्यमानेषु देवेषु चातुर्वर्ण्ये व्यवस्थिते ।
समृध्यमाने त्रैलोक्ये प्रीतियुक्ते स्वयम्भुवि ॥ ८

रुद्रैर्वसुभिरादित्यैर् अश्विभ्यामपि चर्षिभिः ।
गन्धर्वैर्भुजगैस्सिद्धैर् दिव्यैश्चान्यैर्वृतः प्रभुः ॥ ९

चतुर्दन्तं सुदान्तं च वारणेन्द्रं श्रिया वृतम् ।
आरुह्यैरावतं शक्रस् त्रैलोक्यमनुसंययौ ॥ १०

स कदाचित् समुद्रान्ते कस्मिंश्चिद्गिरिगह्वरे ।
बलिं वैरोचनिं वज्री ददर्शोपससर्प च ॥ ११

तमैरावतमूर्धस्थं प्रेक्ष्य देवगणैर्वृतम् ।
सुरेन्द्र[1]मपि दैत्येन्द्रो न शुशोच न विव्यथे ॥ १२

दृष्ट्वा तमविकारस्थं तिष्ठन्तं निर्भयं बलिम् ।
अधिरूढो द्विपश्रेष्ठम् इत्युवाच शतक्रतुः ॥ १३

शक्रः—

दैत्य न व्यथसे शौर्याद् अथ वा वृद्धसेवया ।
तपसा भावितत्वाद्वा सर्वथैतत् सुदुष्करम् ॥ १४

शत्रुभिर्वशमानीतो हीनस्स्थानादनुत्तमात् ।

---

1. ख-ग—मिन्द्रं

वैरोचने किमाश्रित्य शोचितव्ये न शोचसि ॥ १५

श्रैष्ठ्यं प्राप्य स्वजातीनां भुक्त्वा भोगाननुत्तमान् ।
हृतस्वबलराज्यस्त्वं ब्रूहि कस्मान्न शोचसि ॥ १६

ईश्वरो हि पुरा भूत्वा पितृपैतामहे पदे ।
तत् त्वमद्य हृतं दृष्ट्वा सपत्नैः किं न शोचसि ॥ १७

बद्धश्च वारुणैः पाशैर् वज्रेण च समाहतः ।
हृतदारो हृतधनो ब्रूहि कस्मान्न शोचसि ॥ १८

भ्रष्टश्रीर्विभवभ्रष्टो यन्न शोचसि दुष्करम् ।
त्रैलोक्यराज्यनाशे हि कोऽन्यो जीवितुमुत्सहेत् ॥ १९

भीष्मः—

एतच्चान्यच्च परुषं ब्रुवन्तं परिभूय तम् ।
श्रुत्वा सुखमसम्भ्रान्तो बलिर्वैरोचनोऽब्रवीत् ॥ २०

बलिः—

निगृहीते मयि भृशं शक्र किं कत्थनेन ते ।
वज्रमुद्यम्य तिष्ठन्तं पश्यामि त्वां पुरन्दर ॥ २१

अशक्तः पूर्वमासीस्त्वं कथञ्चिच्छक्ततां गतः ।
कस्त्वदन्य इमां वाचं सुक्रूरां वक्तुमर्हति ॥ २२

यस्तु शत्रो[1]र्वधं कर्तुं शक्तोऽपि कुरुते दयाम् ।

1. ख-ग—वैशस्थस्य

हस्तप्राप्तस्य वीरस्य तमेव पुरुषं विदुः ॥ २३

अनिश्चयो हि युद्धेषु द्वयोर्विवदमानयोः ।
एकः प्राप्नोति विजयम् एकश्चैव पराजयम् ॥ २४

मा च ते भूत् स्वभावोऽयं मयि दानवपुङ्गवे ।
ईश्वरे सर्वभूतानां विक्रमेण जिते छलात् ॥ २५

नैतदस्मत्कृतं शक्र नैतच्छक्र त्वया कृतम् ।
यत् त्वमेवं गतो वज्रिन् यद्वाऽप्येवं गता वयम् ॥ २६

अहमासं यथाऽद्य त्वं भविता त्वं यथा वयम् ।
माऽवमंस्था मया कर्म दुष्कृतं कृतमित्युत ॥ २७

सुखदुःखे हि पुरुषः पर्यायेणाधिगच्छति ।
पर्यायेणासि शक्रत्वं प्राप्तश्शक्र न कर्मणा ॥ २८

कालो नयति मां त्वां च कालं कालो नयत्यधः ।
[1]तेनाहं च यथाऽद्य त्वं त्वं च वीर यथा वयम् ॥ २९

न मातृपितृशुश्रूषा न च दैवतपूजनम् ।
नान्यो गुणसमाचारः पुरुषस्य सुखावहः ॥ ३०

न विद्या न तपो दानं न मित्राणि न बान्धवाः ।
शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ॥ ३१

---

1. ख-ग—तेनाहं त्वं यथा नाद्य त्वं चापि न यथा वयम् ।
तेनाहं न यथाऽद्य त्वं त्वं चापि न यथा वयम् ॥
[पाठान्तरम्]

नागामिनमनर्थं हि प्रतिघातशतैरपि ।
शक्नुवन्ति प्रतिच्छेत्तुम् ऋते बुद्धिबलान्नराः ॥ ३२

पर्यायैर्हन्यमानानां परित्राता न विद्यते ।
इदं हि दुःखं यच्छक्र कर्ताऽहमिति मन्यसे ॥ ३३

यदि [1]स्यात् पुरुषः कर्ता न क्रियेत कदाचन ।
यस्मात्तु क्रियते कर्ता तस्मात् कर्ता न हीश्वरः ॥ ३४

कालेन त्वाऽहमजयं कालेनाहं जितस्त्वया ।
गन्ता गतिमतां कालः कालः कालयति प्रजाः ॥ ३५

इन्द्र प्राकृतया बुद्ध्या प्रलपन् नावबुद्ध्यसे ।
[2]केचित् त्वां बहुमन्यन्ते श्रैष्ठ्यं प्राप्तं स्वकर्मणा ॥ ३६

कथं त्वस्मद्विधो नाम जानँल्लोके प्रवृत्तिजान् ।
कालेनाभ्याहतश्शोचेन्मुह्येद्वाऽप्यर्थसम्भ्रमे ॥ ३७

कथं कालपरीतस्य मम वा मद्विधस्य वा ।
बुद्धिर्व्यसनमासाद्य भिन्ना नौरिव सीदति ॥ ३८

अहं च त्वं च ये चान्ये भविष्यन्ति [3]सुराधिपाः ।
ते सर्वे शक्र यास्यन्ति मार्गमिन्द्रशतैर्गतम् ॥ ३९

त्वामप्येवं सुदुर्धर्षं ज्वलन्तं परया श्रिया ।

---

1. ख—कर्ता भवेत् 2. ख—यदि त्वा
3. ख—नराधिपाः

काले परिणते कालः कालयिष्यति मामिव ॥ ४०

बहूनीन्द्रसहस्राणि दैतेयानां युगे युगे ।
अभ्यतीतानि कालेन कालो हि दुरतिक्रमः ॥ ४१

इदं तु लब्ध्वा त्वं स्थानम् आत्मानं बहु मन्यसे ।
सर्वभूतभवं देवं ब्रह्माणमिव शाश्वतम् ॥ ४२

न चेदमचलं स्थानम् अनन्तं वाऽपि कस्यचित् ।
त्वं तु बालिशया बुद्ध्या ममेदमिति मन्यसे ॥ ४३

अविश्वास्ये विश्वसिषि मन्यसे वाऽध्रुवे ध्रुवम् ।
[1]नित्यं कालपरीतात्मा भवत्येवं सुरेश्वर ॥ ४४

ममेयमिति मोहात् त्वं राज्यश्रियमभीप्ससि ।
नेयं तव न चास्माकं न चान्येषां स्थिरा मता ॥ ४५
अतिक्रम्य बहूनन्यांस् त्वयि तावदियं स्थिता ॥ ४५॥

कञ्चित् कालमियं स्थित्वा त्वयि वासव चञ्चला ।
जीर्णं वासमिवोत्सृज्य पुनरन्यं गमिष्यति ॥ ४६॥

सुरेशा ये त्वतिक्रान्तास् तान् न सङ्ख्यातुमुत्सहे ।
त्वत्तो बहुतराश्चान्ये भविष्यन्ति पुरन्दर ॥ ४७॥

सवृक्षौषधिगुल्मेयं ससरिद्गिरिकानना ।
तानिदानीं न पश्यामि यैर्भुक्तेयं पुरा मही ॥ ४८॥

1. ख-ग-घ—नास्तीदमर्धम्

[1]पृथुर्बलो मयो भौमो नरकश्शम्बरस्तथा ।
अश्वग्रीवः पुलोमा च स्वर्भानुरमितप्रभः ॥ ४९॥

प्रह्लादो नमुचिर्दक्षो विप्रचित्तिर्विरोचनः ।
ह्रीनिषेधश्च होत्रश्च [2]भूरिहा पुष्पवान् वृषः ॥ ५०॥

सत्येषुर्ऋषभो राहुः कपिलाश्वो विरूपकः ।
बाणः कार्तस्वरो बह्निर् विश्वदंष्ट्रोऽथ नैर्ऋतः ॥ ५१॥

[3]हृद्योद्भूतो हरिद्राभो वाराहोऽश्वरुचिः प्रभुः ॥ ५२

विश्वजित् प्रतिशौरिश्च [4]वृषाश्वो [5]वृषरो मधुः ।
हिरण्यकशिपुश्चैव कैटभश्चैव दानवः ॥ ५३

दैत्याश्च कालकेया हि सर्वे ते नैर्ऋतैस्सह ।
एते चान्ये च बहवः पूर्वे पूर्वतराश्च ये ॥ ५४

दैत्येन्द्रा दानवेन्द्राश्च यांश्चान्याननुशुश्रुमः ।
बहवः पूर्वदैत्येन्द्रास् सन्त्यज्य पृथिवीं गताः ॥ ५५

---

1. ख-घ—पृथुरिल्वलो
2. घ—भूरिपाः पुष्पवान् प्रसुः
3. अ-क-घ—भृत्योद्भुतो हरी भावो
ख—भुवथाभुवथौ परीताम्रौ वराहो चानृचिः प्रभुः ।
[ पाठान्तरम् ]
4. ख—पाषण्डो विक्षरो मधुः ; ग—विषाण्डो विहरो मधुः
5. क—धृष्करो ; घ—पुष्करो

कालेनाभ्याहतास्सर्वे [1]कालो हि बलवत्तरः ॥ ५५॥

सर्वैः क्रतुशतैरिष्टं न त्वमेकश्शतक्रतुः ॥ ५६

सर्वे धर्मपराश्चासन् सर्वे सततसत्रिणः ।
अन्तरिक्षचरास्सर्वे सर्वे सततयोधिनः ॥ ५७

सर्वे संहननोपेतास् [2]सर्वे परिघबाहवः ।
सर्वे मायाशतधरास् सर्वे ते कामचारिणः ॥ ५८

सर्वे समरमासाद्य न श्रूयन्ते पराजिताः ।
सर्वे सत्यव्रतधरास् सर्वे कामविहारिणः ॥ ५९

सर्वे वेदव्रतपरास् सर्वे चासन् बहुश्रुताः ।
सर्वे संहृतमैश्वर्यम् ईश्वरात् प्रतिपेदिरे ॥ ६०

[3]न चैश्वर्यमदस्तेषां भूतपूर्वो महात्मनाम् ॥ ६०॥

सर्वे यथार्हदातारस् सर्वे विगतमत्सराः ।
सर्वे सर्वेषु भूतेषु यथावत् प्रतिपेदिरे ॥ ६१॥

सर्वे दाक्षायणीपुत्राः प्राजपत्या महाबलाः ।
ज्वलन्तः प्रतपन्तश्च कालेन प्रतिसंहृताः ॥ ६२॥

त्वं चैवेमां यदा भुक्त्वा पृथिवीं त्यक्ष्यसे पुनः ।
न शक्ष्यसि तदा शक्र नियन्तुं शोकमात्मनः ॥ ६३॥

---

1. ख—इतः षट् पादा न सन्ति
2. ख—इतोऽष्टौ पादा न सन्ति
3. घ—अर्धत्रयं नास्ति

मुञ्चेच्छां कामभोगेषु मुञ्चेमं श्रीभवं मदम् ।
एवं स्वराज्यनाशे त्वं शोकं सम्प्रसहिष्यसि ॥ ६४॥

शोककाले शुचो मा त्वं हर्षकाले च मा हृषः ।
अतीतानागते हित्वा प्रत्युत्पन्नेन वर्तय ॥ ६५॥

मां चेदभ्यागतः कालस् सदा युक्तमतन्द्रितम् ।
क्षमस्व न चिरादिन्द्र त्वामप्युपगमिष्यति ॥ ६६॥

त्रासयन्निव देवेन्द्र वाग्भिस्तक्षसि मामिह ।
संयते मयि नूनं त्वम् आत्मानं बहु मन्यसे ॥ ६७॥

कालः प्रथममायान्मां पश्चात्त्वामनुधावति ।
तेन गर्जसि देवेन्द्र पूर्वं कालहते मयि ॥ ६८॥

को हि स्थातुमलं लोके क्रुद्धस्य मम संयुगे ।
कालस्तु बलवान् प्राप्तस् तेन तिष्ठसि वासव ॥ ६९॥

यत्तद्वर्षसहस्रान्तं पूर्णं भवितुमर्हति ।
यथा मे सर्वगात्राणि न स्वस्थानि [1]गतौजसः ॥ ७०॥

अहमैन्द्राच्च्युतस्स्थानात् त्वमिन्द्रः प्रकृतो दिवि ।
सुचित्रे जीवलोकेऽस्मिन्नुपास्यः कालपर्ययः ॥ ७१॥

किं हि कृत्वा त्वमिन्द्रोऽद्य किं च कृत्वा वयं च्युताः ।
कालः कर्ता विकर्ता च सर्वमन्यदकारणम् ॥ ७२॥

---

1. घ—हतौजसः

[1]लाभं विनाशमैश्वर्यं सुखदुःखे भवाभवौ ।
विद्वान् प्राप्यैवमत्यन्तं न प्रहृष्येन्न च व्यथेत् ॥ ७३॥

त्वमेव हीन्द्र मां वेत्थ वेदाहं त्वां च वासव ।
विकत्थसे मां किं बद्धं कालेन निरपत्रपः ॥ ७४॥

त्वमेव हि पुरा वेत्थ यत्तदा पौरुषं मम ।
समरेषु च विक्रान्तं पर्याप्तं तन्निदर्शनम् ॥ ७५॥

आदित्याश्चैव रुद्राश्च साध्याश्च वसुभिस्सह ।
मया विनिर्जिताः पूर्वं मरुतश्च शचीपते ॥ ७६॥

त्वमेव शक्र जानासि देवासुरसमागमे ।
[2]समेता हीन्द्र विबुधा भग्नास्ते समरे मया ॥ ७७॥

पर्वताश्चासकृत् क्षिप्तास् सवनास्सवनौकसः ।
सटङ्कशिखरा घोरास् समरे मूर्ध्नि ते मया ॥ ७८॥

किं नु शक्यं मया कर्तुं कालो हि दुरतिक्रमः ।
न हि त्वां नोत्सहे हन्तुं सवज्रमपि मुष्टिना ॥ ७९॥

न तु विक्रमकालोऽयं क्षमाकालोऽयमागतः ।
तेन त्वां मर्षये शक्र [3]सुदुर्धर्षतरस्त्वया ॥ ८०॥

तं मां परिणते काले परीतं कालवह्निना ।

1. अ-क-ख-ग—नाशं
2. ख—समेता विबुधाभग्नास्तरसा
3. ख——दुर्मर्षणतरस्त्वया

नियतं कालपाशेन बद्धं शक्र विकत्थसे ॥ ८१॥

अयं स पुरुषश्श्यामो लोकस्य दुरतिक्रमः ।
बद्ध्वा तिष्ठति मां रौद्रः पशुं रशनया यथा ॥ ८२॥

लाभालाभौ सुखं दुःखं कामक्रोधौ भवाभवौ ।
वधो बन्धः प्रमोक्षश्च सर्वं कालेन लभ्यते ॥ ८३॥

नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः ।
सोऽयं पचति कालो मां वृक्षे फलमिवाहितम् ॥ ८४॥

यान्येव पुरुषः कुर्वन् सुखैः कालेन युज्यते ।
पुनस्तान्येव कुर्वाणो दुःखैः कालेन युज्यते ॥ ८५॥

न च कालेन कालज्ञस् स्पृष्टश्शोचितुमर्हति ।
तेन शक्र न शोचामि नास्ति शोके सहायता ॥ ८६॥

यदा हि शोचतश्शोको व्यसनं नापकर्षति ।
सामर्थ्यं शोचतो नास्ति नैव शोचाम्यहं ततः ॥ ८७॥

भीष्मः—

एवमुक्तस्सहस्राक्षो भगवान् पाकशासनः ।
प्रतिसंहृत्य संरम्भम् इत्युवाच शतक्रतुः ॥ ८८॥

इन्द्रः—

[1]सवज्रमुद्यतं बाहुं दृष्ट्वा पाशान् सुदारुणान् ।

---

1. अ-क—वज्रमुद्यम्य चायान्तं

कस्येह न व्यथेद्बुद्धिर् मृत्योरपि जिघांसतः ॥ ८९॥

सा ते न व्यथते बुद्धिर् अचला तत्त्वदर्शिनी ।
ब्रुवन्न व्यथसे[1] सत्त्वाद् वाक्यं सत्यपराक्रम ॥ ९०॥

को हि विश्वासमर्थेषु शरीरे वा शरीरभृत् ।
कर्तुमुत्सहते लोके दृष्ट्वा सम्प्रस्थितं जगत् ॥ ९१॥

अहमप्येवमेवैनं लोकं जानाम्यशाश्वतम् ।
कालाग्नावाहितं घोरे गुह्ये सततगेऽक्षरे ॥ ९२॥

न चात्र परिहारोऽस्ति कालस्पृष्टस्य कस्यचित् ।
सूक्ष्माणां महतां चैव भूतानां परिपच्यताम् ॥ ९३॥

अनिशं स्याप्रमत्तस्य भूतानि पचतस्सदा ।
[2]अनिर्वृत्तस्य कालस्य क्षयं प्राप्तो न मुच्यते ॥ ९४॥

अप्रमत्तः प्रमत्तेषु कालो जागर्ति देहिषु ।
प्रयत्नेनाप्यतिक्रान्तो दृष्टपूर्वो न केनचित् ॥ ९५॥

पुराणश्शाश्वतो धर्मस् सर्वप्राणभृतां समः ।
कालो न परिहार्यश्च न चास्यास्ति व्यतिक्रमः ॥ ९६॥

[3]अहोरात्राणि मासांश्च क्षणान् काष्ठाः कला लवान् ।

---

1. ख—स त्वं वाक्यं ;　　ग—सत्यं वाक्यं
2. ख-घ—अनिवृत्तस्य
3 ख-घ—अहोरात्रान् क्षणान् काष्ठाः कलास्संवत्सरानपि ।

स [1]वर्धयति नः कालो वृद्धिं वार्धुषिको यथा ॥ ९७॥
इदमद्य करिष्यामि श्वः कर्तास्मीति वादिनम् ।
कालो हरति सम्प्राप्तो नदीवेग इवोडुपम् ॥ ९८॥
इदानीं तावदेवासौ मया दृष्टः कथं मृतः ।
इति कालेन म्रियतां प्रलापश्श्रूयते नृणाम् ॥ ९९॥
नश्यन्त्यर्थास्तथा भोगास् स्थानमैश्वर्यमेव च ।
[2]उच्छ्राया विनिपातान्ता भावोऽभावस्तथैव च ॥ १००॥
अनित्यमध्रुवं सर्वं व्यवसायो हि दुष्करः ॥ १०१
सा ते न व्यथते बुद्धिर् अचला तत्त्वदर्शिनी ।
अहमासं पुरा चेति मनसाऽपि न मन्यसे ॥ १०२
कालेनाक्रम्य लोकेऽस्मिन् पच्यमाने बलीयसा ।
[3]अज्येष्ठमकनिष्ठं च क्षिप्यमाणो न बुद्ध्यसे ॥ १०३
ईर्ष्याभिमानलोभेषु कामक्रोधभयेषु च ।
स्पृहामोहातिमानेषु लोकस्सक्तो न बुध्यते ॥ १०४
स भवान् भावतत्त्वज्ञो विद्वाञ् ज्ञानतपोन्वितः ।
कालं पश्यति सुव्यक्तं पाणावामलकं यथा ॥ १०५
कालचारित्रतत्त्वज्ञस् सर्वशास्त्रविशारदः ।

1. ख—पिण्डयति ; ग—संपिण्डयति नः कालो
2. ख-घ—अनित्यमध्रुवं सर्वं व्यवसायो हि दुष्करः। [अधिकः द्विः पाठः]
3. अ-क-घ—अतो ज्येष्ठं कनिष्ठं च×बुध्यते

वैरोचने कृतार्थोऽसि स्पृहणीयो विजानताम् ॥ १०६
सर्वलोको ह्ययं मन्ये बुद्ध्या परिगतस्त्वया ।
विहरन् सर्वतो मुक्तो न [1]कच्चिन्न विषीदसि ॥ १०७
रजश्च हि तमश्च त्वां स्पृशते न जितेन्द्रियम् ।
[2]सुप्रीतो नष्टसन्तापस् त्वमात्मानमुपाससे ॥ १०८
सुहृदं सर्वभूतानां निर्वैरं शान्त[3]चेतसम् ।
दृष्ट्वा त्वां मम सञ्जाता त्वय्यनुक्रोशिनी मतिः ॥ १०९
नाहमेतादृशं बद्धं हन्तुमिच्छामि बन्धनैः ।
आनृशंस्यं परो धर्मो ह्यनुक्रोशोऽस्ति मे त्वयि ॥ ११०
मोक्ष्यन्ते वारुणाः पाशास् तवेमे कालपर्ययात् ।
प्रजानामपचारेण स्वस्ति तेऽस्तु महासुर ॥ १११
यदा श्वश्रूं स्नुषा वृद्धां परिचारेण योक्ष्यते ।
पुत्रश्च पितरं मोहात् प्रेषयिष्यति कर्मसु ॥ ११२
ब्राह्मणैः कारयिष्यन्ति वृषलाः पादधावनम् ।
शूद्राश्च ब्राह्मणीं भार्याम् उपयास्यन्ति निर्भयाः ॥ ११३
वियोनिषु च बीजानि मोक्ष्यन्ते पुरुषा यदा ।
सङ्करं कांस्यभाण्डैश्च वलिं चापि कुपात्रकैः ॥ ११४
चातुर्वर्ण्यं यदा कृत्स्नम् अमर्यादं भविष्यति ।

---

1. ख-घ—कच्चित्परिषजसे
2. ख-ग-घ—निष्प्रीतिर्नष्टसन्तापः 3. ख-घ—मानसम्

एकैकस्ते तदा पाशः क्रमशः परिमोक्ष्यते ॥ ११५

अस्मत्तस्ते भयं नास्ति समयं परिपालय ।

सुखी भव निराबाधश् स्वस्थचेता निरामयः ॥ ११६

भीष्मः—

तमेवमुक्त्वा भगवाञ् छतक्रतुः

प्रतिप्रयातो गजराजवाहनः ।

विजित्य [1]सर्वानसुरान् बहूनिमान्

ननन्द हर्षेण बभूव चैकराट् ॥ ११७

महर्षयस्तुष्टुवुरञ्जसा च तं

वृषाकपिं सर्वचराचरेश्वरम् ।

हिमापहो हव्यमुदावहत् त्वरंस्

तथाऽमृतं चार्पितमीश्वराय ह ॥ ११८

द्विजोत्तमैस्सत्रगतैरभिष्टुतो

विदीप्ततेजाश्शतमन्युरीश्वरः ।

प्रशान्त[2]चेता मुदितस्स्वमालयं

त्रिविष्टपं प्राप्य मुमोद वासवः ॥ ११९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥
[ अस्मिन्नध्याये ११९ श्लोकाः ]

---

1. ग—सर्वानसुराधिपान् बलो 2. ख-घ—तेजा

## ॥ त्रयोदशाधिकद्विशततमोऽध्यायः ॥

गङ्गापुलिनगतयोः शक्रनारदयोः समीपं प्रति श्रीदेव्या आगमनम् ॥ १ ॥ शक्रं प्रति श्रिया स्वस्य दैत्येषु निवासविप्रवासयोः कारणीभूततद्गुण-दोषाभिधानम् ॥ २ ॥

युधिष्ठिरः—

पूर्वरूपाणि मे राजन् पुरुषस्य भविष्यतः ।
पराभविष्यतश्चैव त्वं मे ब्रूहि पितामह ॥ १

भीष्मः—

मन एव मनुष्यस्य पूर्वरूपाणि शंसति ।
भविष्यतश्च भद्रं ते तथैव न भविष्यतः ॥ २

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ॥
श्रिया शक्रस्य संवादं तन्निबोध युधिष्ठिर ॥ ३

महतस्तपसो व्युष्ट्या पश्यँल्लोकान् परावरान् ।
सामान्यमृषिभिर्गत्वा ब्रह्मलोकनिवासिभिः ॥ ४

ब्रह्मेवामितदीप्तौजाश् शान्तपाप्मा महातपाः ।
विचचार यथा[1]कालं त्रिषु लोकेषु नारदः ॥ ५

कदाचित् प्रातरुत्थाय [2]पिस्पृक्षुस्सलिलं शुचि ।
ध्रुवद्वारभवां गङ्गां जगामावततार च ॥ ६

1. ख—कामं 2. ख—विविक्षु

सहस्रनयनश्चापि वज्री शम्बर[1]वृत्रहा ।
तस्या देवर्षिजुष्टायास् तीरमभ्याजगाम ह ॥ ७

तावाप्लुत्य [2]महात्मानौ कृतजप्यौ समासतुः ।
नद्याः पुलिनमासाद्य [3]मुक्ताकाञ्चनवालुकम् ॥ ८

पुण्यकर्मभिराख्याता देवर्षिकथिताः कथाः ।
चक्रतुस्तौ कथाशीलौ महर्षिकथितास्तदा ॥ ९
[4]पूर्ववृत्तान्यतीतानि कथयन्तौ समाहितौ ॥ ९॥

अथ भास्करमुद्यन्तं रश्मिजालपुरस्कृतम् ।
पूर्णमण्डलमालोक्य तावुत्थायोपतस्थतुः ॥ १०॥

अभितस्तूदयन्तं तम् अर्कमर्कमिवापरम् ।
आकाशे ददृशे ज्योतिर् उद्य[5]दर्क समप्रभम् ॥ ११॥

अर्कस्य तेजसा तुल्यं [6]तद्भास्करसमप्रभम् ।
तयोस्समीपं सम्प्राप्य प्रत्यदृश्यत भारत ॥ १२॥

तत् सुपर्णार्करचितम् आस्थितं वैष्णवं पदम् ।
भाभिरप्रतिमं ताभिस् त्रैलोक्यमवभासयत् ॥ १३॥

दिव्याभिरभिरूपाभिर् अप्सरोभिः पुरस्कृताम् ।

---

1. ख-घ—पाकहा  2. ख-ग-घ—यता  3. ख-ग-घ—सूक्ष्म
4. ख-घ—पूर्ववृत्तव्यपेतानि ;  ग—पूर्ववृत्तव्यतीतानि
5. ख—दर्च्यं ;  घ—दर्चिः ;  ग—उद्यतार्चिस्सम
6. ख-घ—ज्वलद्भास्करसन्निभम्

बृहतीमंशुमत्प्रख्यां बृहद्भानोरिवार्चिषम् ॥ १४॥

नक्षत्रकल्पाभरणां तारापङ्क्तिसमस्रजम् ।
श्रियं ददृशतुः प्राप्तां साक्षात् पद्मदले स्थिताम् ॥ १५॥

साऽवरुह्य विमानाग्राद् अङ्गनानामनुत्तमा ।
अभ्यागच्छत् त्रिलोकेशं शक्रं चर्षिं च नारदम् ॥ १६॥

नारदानुगतं साक्षान्मघवन्तमुपागमत् ।
कृताञ्जलिपुटा देवी निवेद्यात्मानमात्मना ॥ १७॥

चक्रे चानुपमां पूजां तस्याश्चापि स सर्ववित् ।
देवराजश्श्रियं देवीं वाक्यं राजन्नुवाच ह ॥ १८॥

शक्रः—

का त्वं केन च कार्येण सम्प्राप्ता चारुहासिनि ।
[1]कुतश्चात्रागता देवी कार्यं वा किञ्च ते शुभे ॥ १९॥

श्रीः—

पुण्येषु त्रिषु लोकेषु सर्वे स्थावरजङ्गमाः ।
ममात्मभावमिच्छन्तो यतन्ते परमात्मना ॥ २०॥

साऽहं वै पङ्कजे जाता सूर्यरश्मिप्रबोधिते ।
भूत्यर्थं सर्वभूतानां पद्मा श्रीः पद्ममालिनी ॥ २१॥

अहं लक्ष्मीरहं भूतिश् श्रीश्चाहं बलसूदन ।

---

1. ख-ग-घ—कुतश्चागम्यते सुभ्रु गन्तव्यं क्व च ते शुभे ।

अहं श्रद्धा च मेधा च [1]सन्नतिर्विजितिस्स्मृतिः ॥ २२॥
अहं [2]रतिरहं सिद्धिर् अहं सम्भूतिरेव च ।
अहं स्वाहा स्वधा चैव [3]सन्ततिर्नियतिः कृतिः ॥ २३॥
राज्ञां विजयमानानां सेनाग्रेषु ध्वजेषु च ।
निवसे धर्मशीलानां विषयेषु पुरेषु च ॥ २४॥
जितकाशिनि शूरे च सङ्ग्रामेष्वनिवर्तिनि ।
निवसामि मनुष्येन्द्रे सदैव बलसूदन ॥ २५॥
धर्मनित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि ।
प्रश्रिते दानशीले च सदैव निवसाम्यहम् ॥ २६॥
असुरेष्ववसं पूर्वं सत्यधर्मनिबन्धनात् ।
विपरीतांस्तु तान् दृष्ट्वा त्वयि वासमरोचयम् ॥ २७॥

शक्रः—

कथंवृत्तेषु दैत्येषु त्वमवात्सीर्वरानने ।
दृष्ट्वा च किमिहागास्त्वं हित्वा दैतेयदानवान् ॥ २८॥

श्रीः—

स्वधर्ममनुतिष्ठत्सु धैर्यादुद्धारितारिषु ।
स्वर्गमार्गाभिरामेषु दैत्येष्वभिरताऽस्म्यहम् ॥ २९॥
दानाध्ययनयज्ञाढ्या गुरुदैवतपूजकाः ।

---

1. ख-घ—सन्ततिर्विजितिः स्थितिः ; ग—तिर्धृतिः
2. ख-घ—धृतिः 3. ख-घ—संस्थिति ; ग—सन्नति

[1]विप्राणामतिथीनां च तेषां नित्यानुवर्तकाः ॥　३०॥

सुसम्मृष्टगृहाश्चासञ् जितस्त्रीका हुताग्नयः ।
गुरुशुश्रूषवो दान्ता ब्रह्मण्यास्सत्यवादिनः ॥　३१॥

श्रद्दधाना जितक्रोधा दानशीलाऽनसूयवः ।
भृतपुत्रा भृतामात्या भृतदारा ह्यनीर्ष्यवः ॥　३२॥

नामर्षणा न चान्योन्यं स्पृहयन्ति कदाचन ।
न च जातूपतप्यन्ते धीराः परसमृद्धिभिः ॥　३३॥

दातारस्सङ्गृहीतारः [2]कार्यकारणवेदिनः ।
महाप्रसादा ऋजवो दृढभक्ता जितेन्द्रियाः ॥　३४॥

सन्तुष्टभृत्यसचिवाः कृतज्ञाः प्रियवादिनः ।
यथार्थमानार्थकरा ह्रीनिषेधा [3]जितेन्द्रियाः ॥　३५॥

नित्यं पर्वसु सुस्नातास् स्वनुलिप्तास्स्वलङ्कृताः ।
उपवासतपश्शीलाः [4]व्रतिनो ब्रह्मवादिनः ॥　३६॥

नैतानभ्युदयात् सूर्यो न चाप्यासन् प्रगेशयाः ।
रात्रौ दधि च सक्तूंश्च नित्यमेव व्यसर्जयन् ॥　३७॥

काल्यं घृतं चान्ववेक्ष्य प्रयता ब्रह्मवादिनः ।

---

1. ख-घ—गुरूणा　　2. ख-घ—आर्याः करुण
3. ख-ग-घ—यतव्रताः
4. ख-ग-घ—प्रतीता

[1-2]मङ्गल्यान्यपि चापश्यन् ब्राह्मणांश्चाप्यपूजयन् ॥ ३८॥

सदा हि ददते दानं सदा न प्रत्यगृह्णत ।
अर्धं च रात्र्यास्स्वपतां दिवा चास्वपतां तथा ॥ ३९॥

कृपणानाथवृद्धानां दुर्बलातुरयोषिताम् ।
[3]सतां च संविभज्यान्नं नित्यमेवानुमोदताम् ॥ ४०॥

[4]कालो यातस्सुखेनैव धर्ममार्गे च वर्तताम् ॥ ४१

विषण्णं त्रस्तमुद्विग्नं भयार्तं व्याधिपीडितम् ।
हृतस्वं व्यसनार्तं च नित्यमाश्वासयन्ति ये ॥ ४२

धर्ममेवानुवर्तन्ते [5]नासूयन्ति परस्परम् ।
अनुकूलाश्च कार्येषु गुरुवृद्धोपसेविनः ॥ ४३

[6]गुरुदेवातिथींश्चैव यथावत्तेऽभ्यपूजयन् ।
अवशेषाणि चाश्नन्ति नित्यं सत्य[7]पथोद्यताः ॥ ४४

नैके ह्यश्नन्ति सम्पन्नं न गच्छन्ति परस्त्रियम् ।

---

1. अ-क– तैनं चाभ्युदियात् सूर्यो मङ्गलान्यपि चापठन् ।
देवानृषीन् पितॄंश्चैव ब्राह्मणांश्चाप्यपूजयन् । [अधिकः पाठः]
2. अ-क—नास्तीदमधर्मम्
3. ख-घ-ग—दयां च संविभागं च
4. अ-क-ग—नास्तीदमधर्मम्
5. ख-घ-ग—न हिंसन्ति
6. ख-घ—पितृ
7. ख-घ—तपोव्रताः ; ग—तपोन्विताः

सर्वभूतेषु वर्तन्ते यथाऽऽत्मनि दयां प्रति ॥ ४५
नैवाकाशे न पशुषु [1]नायोनौ च न पर्वसु ।
इन्द्रियस्य विसर्गं ते रोचयन्ति कदाचन ॥ ४६
नित्यं दानं तथा दाक्ष्यम् आर्जवं चैव नित्यदा ।
उत्साहश्चानहङ्कारः परमं सौहृदं क्षमा ॥ ४७
[2]सत्यं दानं तपश्शौचं कारुण्यं वागनिष्ठुरा ।
मित्रेषु चानभिद्रोहस् सर्वं तेष्वभवत् प्रभो ॥ ४८
निद्रा तन्द्री ह्यसम्प्रीतिर् असूया[3]चानवेक्षिता ।
अरतिश्च विषादश्च न स्पृहा च विशन्ति तान् ॥ ४९
साऽहमेवंगुणेष्वेषु दानवेष्ववसं पुरा ।
प्रजासर्गमुपादाय नैवं गुणविपर्यये ॥ ५०
ततः कालविपर्यासे तेषां गुणविपर्ययात् ।
अपश्यं विगतं धर्मं कामक्रोधवशात्मनाम् ॥ ५१
सदा सतां वै वृद्धानां सभ्याः कथयतां कथाः ।
प्राहसन्नभ्यसूयंश्च सर्ववृद्धान् [4]गुरून् परान् ॥ ५२
यूनस्सह समासीनान् वृद्धानभिगतान् सतः ।

---

1. अ-क—न चाम्भो न च
2. क-ग—नित्यस्नानं
3. ग—चानपेक्षिता
4. ख-घ—गुणावराः

नाभ्युत्थानाभिवादाभ्यां यथापूर्वमपूजयन् ॥ ५३

वर्तयत्येव पितरि पुत्रः प्राभवतात्मना ।
अमित्रभृत्यतां प्राप्य ख्यापयन्तेऽनपत्रपाः ॥ ५४

तथा धर्मादपेतेन कर्मणा गर्हितेन ये ।
महतः प्राप्नुवन्त्यर्थांस् तेष्वेषामभवत् स्पृहा ॥ ५५

उच्चैश्चाप्यवदन् रात्रौ नीचैस्तत्राह्नि संलपन् ।
पुत्राः पितॄनत्यवदन् भार्याश्चात्यचरन् पतीन् ॥ ५६

मातरं पितरं वृद्धम् आचार्यमतिथिं गुरुम् ।
गुरुत्वान्नाभ्यवन्दन्त कुमारान्नान्वपालयन् ॥ ५७

भिक्षां बलिमदत्त्वा च स्वयमन्नानि भुञ्जते ।
अनिष्ट्वाऽसंविभज्याथ पितृदेवातिथीन् गुरून् ॥ ५८

न शौचमन्वरुद्ध्यन्त तेषां सूदजनास्तथा ।
मनसा कर्मणा वाचा [1]भक्ष्यमासीदनावृतम् ॥ ५९

विप्रकीर्णानि धान्यानि काकमूषिकभोजनम् ।
अपावृतं पयोऽतिष्ठद् उच्छिष्टाश्चास्पृशन् घृतम् ॥ ६०

[2]कुद्दालामत्र[3]पिटकं प्रकीर्णं कांस्यभोजनम् ।
द्रव्योपकरणं सर्वं नान्ववेक्षत् कुटुम्बिनी ॥ ६१

---

1. ग—भक्तमा 2. ख-घ-ग—कुद्दालदात्र
3. क—पिटकान्

प्राकारागारविध्वंसान् न स्म ते प्रतिकुर्वते ।
नाद्रियन्ते पशून् बद्ध्वा यवसेनोदकेन च ॥ ६२

बालानां प्रेक्षमाणानां स्वयं भक्षानभक्षयम् ।
तथा भृत्यजनं सर्वं [1]पर्यतीत्य च दानवाः ॥ ६३

पायसं कृसरं मांसम् अपूपानथ शष्कुलीः ।
अपचन्नात्मनोऽर्थाय वृथा मांसान्यभक्षयन् ॥ ६४

उत्सूर्यशायिनश्चासन् सर्वे चासन् प्रगेशयाः ।
आवृत्तकलहाश्चात्र दिवारात्रं गृहे गृहे ॥ ६५

आर्याश्चानार्यमासीनं पर्युपासन्त तत्र ह ।
आश्रमस्थान् विकर्मस्थाः प्रद्विषन्तः परस्परम् ॥ ६६

सङ्कराश्चाप्यवर्तन्त न च शौचमवर्तत ।
ये च वेदविदो विप्रा विस्पष्टमनृचश्च ये ॥ ६७

निरन्तरविशेषास्ते बहुमानावमानयोः ॥ ६७॥

भावमाभरणं वेषं गतिं मतिमवेक्षितम् ।
असेवन्त भुजिष्या वै दुर्जनाचरितं विधिम् ॥ ६८॥

स्त्रियः पुरुषवेषेण पुंसस्स्त्रीवेषधारिणः ।
क्रीडारतिविहारेषु परां मुदमवाप्नुवन् ॥ ६९॥

प्रभवद्भिः पुरा दायान् अर्हेभ्यः प्रतिपादितान् ।

---

1. ख-ग-घ—उपर्यश्नन्ति

नान्ववर्तन्त नास्तिक्याद् वर्तन्तस्सम्भवेष्वपि ॥ ७०॥

मित्रेणाभ्यर्थितं द्रव्यम् अर्थी संश्रयते क्वचित् ।
वालकोट्यग्रमात्रेण स्वार्थेनापातयन् वसु ॥ ७१॥

परस्वादानरुचयो विपण्यव्यवहारिणः ।
अदृश्यन्तार्यवर्णेषु शूद्राश्चापि तपोधनाः ॥ ७२॥

अधीयन्तेऽव्रताः केचिद् वृथा व्रतमुपासते ।
अशुश्रूषुर्गुरोश्शिष्यः कश्चिच्छिष्यसखो गुरुः ॥ ७३॥

पिता चैव जनित्री च श्रान्तौ वृत्तोत्सवाविव ।
अप्रभुत्वे स्थितौ वृद्धावन्नं प्रार्थयतस्सुतान् ॥ ७४॥

तत्र वेदविदः प्राज्ञा गाम्भीर्ये सागरोपमाः ।
कृष्यादिष्वभवन् सक्ता मूर्खाश्श्राद्धानि भुञ्जते ॥ ७५॥

सायं प्रातश्च सुप्रश्नं कल्पनं प्रेषणक्रियाः ।
शिष्यानुप्रहितास्तस्मिन्नकुर्वन् गुरवश्च ह ॥ ७६॥

श्वश्रूश्वशुरयोरग्रे वधूः प्रेष्यानशासत ।
अन्वशासत भर्तारं समाहूयातिजल्पति ॥ ७७॥

प्रयत्नेनापि [1]नावैक्षद् वित्तं पुत्रस्य वै पिता ।
व्यभजञ्चापि संरम्भाद् दुःखवासानथावसत् ॥ ७८॥

अग्निदाहेन चोरैर्वा राजभिर्वा हृतं धनम् ।

---

1. ख-ग-घ—नारक्षद्वित्तं

दृष्ट्वा द्वेषात् प्राहसन्त सुहृत्सम्भावितानपि ॥ ७९॥

कृतघ्ना नास्तिकाः पापा गुरुदाराभिमर्शिनः ।
अभक्ष्यभक्षणरता निर्मर्यादा हृतत्विषः ॥ ८०॥

तेष्वेवमादीनाचारान् आचरत्सु विपर्यये ।
नाहं देवेन्द्र वत्स्यामि दानवेष्विति मे मतिः ॥ ८१॥

तन्मां स्वयमनुप्राप्ताम् अभिनन्द शचीपते ।
त्वयाऽर्चितां मां देवेश पुरो धास्यन्ति देवताः ॥ ८२॥

यत्राहं तत्र मत्कान्ता मद्विशिष्टा मदर्पणाः ।
सप्त देव्यो मयाऽष्टम्या वासमेष्यन्ति मेऽष्टधा ॥ ८३॥

आशा श्रद्धा धृतिः [1]क्षान्तिर् विजितिस्सन्नतिः क्षमा ।
अष्टमीं विद्धि मां तासां पुरोगा पाकशासन ॥ ८४॥

ताश्चाहं चासुरांस्त्यक्त्वा युष्मद्विषयमागताः ।
त्रिदशेषु निवत्स्यामो धर्मनित्यान्तरात्मसु ॥ ८५॥

भीष्मः—

इत्युक्तवचनां देवीम् अत्यर्थं वै ननन्दतुः ।
नारदश्च त्रिलोकर्षिर् वृत्रहा चापि वासवः ॥ ८६॥

ततोऽनलसखो वायुः प्रववौ देववेश्मसु ।
इष्टगन्धस्सुखस्पर्शस् सर्वेन्द्रियसुखावहः ॥ ८७॥

---

1. ख-ब—कान्तिर्

शुचौ चाभ्यर्चिते देशे त्रिदशाः प्रायशस्स्थिताः ।
लक्ष्म्या सहितमासीनं मघवन्तं दिदृक्षवः ॥ ८८॥

ततो दिवं प्राप्य सहस्रलोचनश्
श्रियोपपन्नस्सुहृदा सुरर्षिणा ।
रथेन हर्यश्वयुजा [1]सुरर्षभस्
सदस्सुराणामभिसत्कृतो ययौ ॥ ८९॥

अथेङ्गितं वज्रधरस्य नारदश्
श्रियश्च देव्या मनसा विचारयन् ।
श्रियै शशंसामरराजपौरुषं
शिवेन तत्रागमनं महर्धिमत् ॥ ९०॥

ततोऽमृतं द्यौः प्रववर्ष भास्वती
पितामहस्यायतने स्वयम्भुवः ।
अनाहता दुन्दुभयश्च नेदिरे
तथा प्रसन्नाश्च दिशश्चकाशिरे ॥ ९१॥

यथर्तु सस्येषु ववर्ष वासवो
न धर्ममार्गाद्विचचाल कश्चन ।
अनेकरत्नाकरभूषणा च भूस्
सुघोषयोषा त्रिदिवौकसां जये ॥ ९२॥

1. ब—पुरन्दरः

क्रियाभिरामा मनुजा यशस्विनो
बभुश्शुभैः पुण्यकृतां पथि स्थिताः ।
नरामराः किन्नरयक्षराक्षसास्
समृद्धिमन्तस्सुखिनस्तपस्विनः ॥ ९३॥

न जात्वकाले कुसुमं फलं कुतः
पपात वृक्षात् पवनेरितादपि ।
रसप्रदाः कामदुघाश्च धेनवो
न दारुणा वाग्विचचार कस्यचित् ॥ ९४॥

इमां सपर्यां सह सर्वकामदैश्
श्रियाश्च शक्रप्रमुखैश्च दैवतैः ।
पठन्ति ये ब्रह्मसदस्समागतास्
समृद्धकामाश्श्रियमाप्नुवन्ति ते ॥ ९५॥

त्वया कुरूणां प्रवर प्रचोदितं
भवाभवस्येह परं निदर्शनम् ।
तदद्य सर्वं परिकीर्तितं मया
[1]परीक्ष्य तत्त्वं परिगन्तुमर्हसि ॥ ९६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥
[ अस्मिन्नध्याये ९६॥ श्लोकाः ]

---

1. ख—समीक्ष्य

## ॥ चतुर्दशाधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति वैराग्यादिपूर्वकभगवज्ज्ञानस्य श्रेयस्साधनत्वपरासितजैगीषव्यसंवादानुवादः ॥

युधिष्ठिरः—

किंशीलः किंसमाचारः किंविद्यः किंपरायणः ।
प्राप्नोति ब्रह्मणस्स्थानं यत् परं प्रकृतेर्ध्रुवम् ॥ १

भीष्मः—

मोक्षधर्मेषु निरतस् [1]सदाचारो जितेन्द्रियः ।
[2]प्राप्नोति ब्रह्मणस्स्थानं यत् परं प्रकृतेर्ध्रुवम् ॥ २

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
जैगीषव्यस्य संवादम् असितस्य च भारत ॥ ३

[3]जैगीषव्यं महाप्रज्ञं धर्माणामागतागमम् ।
अक्रुध्यन्तमहृष्यन्तम् असितो देवलोऽब्रवीत् ॥ ४

देवलः—

न प्रीयसे वन्द्यमानो निन्द्यमानो न कुप्यसि ।
का ते प्रज्ञा कुतश्चैषा किं च तस्याः परायणम् ॥ ५

भीष्मः—

इति तेनानुयुक्तस्स तमुवाच महातपाः ।

---

1. ख-घ-ग—लघ्वाहारो 2. घ—अर्धद्वयं नास्ति
3. घ—अर्धचतुष्टयं नास्ति

महद्वाक्यमसन्दिग्धं पुष्कलार्थपदं शुचि ॥ ६

जैगीषव्यः—

या गतिर्या परा निष्ठा या शान्तिः पुण्यकर्मणाम् ।
तां तेऽहं सम्प्रवक्ष्यामि [1]यां मां पृच्छसि वै द्विज ॥ ७

निन्दत्सु च समा नित्यं प्रशंसत्सु च देवल ।
[2]निह्नवन्ति च ये दोषं समयं सुकृतं च यत् ॥ ८

उक्ताश्च न विवक्षन्ति वक्तारमहिते रतम् ।
प्रतिहन्तुं न चेच्छन्ति हन्तारं ते मनीषिणः ॥ ९

नाप्राप्तमनुशोचन्ति प्राप्तकालानि कुर्वते ।
न चातीतानि शोचन्ति नैतानि प्रतिजानते ॥ १०

सम्प्राप्तानां च पूज्यानां कामादर्थेषु देवल ।
यथोपपत्तिं कुर्वन्ति शक्तिमन्तो धृतव्रताः ॥ ११

पक्वविद्या महाप्राज्ञा जितक्रोधा जितेन्द्रियाः ।
मनसा कर्मणा वाचा नापराध्यन्ति कस्यचित् ॥ १२

अनीर्ष्यवो हि चान्योन्यं न हिंसन्ति कदाचन ।
न च जातूपतप्यन्ते धीराः परसमृद्धिभिः ॥ १३

निन्दाप्रशंसे चात्यर्थं न वदन्ति परस्य च ।

---

1. ख—यत् परं; ग—यन्मां पृच्छसि वै द्विज; घ—सत्परं प्रति सत्तम
2 क—निह्नुवन्ति; ख—निह्नवन्ति च ये तेषां समयं सुकृतश्च ते।
ग—स्वेषां; घ—निना त्वावन्ति एतेषां समोऽहं सुकृतश्च ते।

न च निन्दाप्रशंसाभ्यां विक्रियन्ते कदाचन ॥ १४

सर्वतश्च प्रशान्ता ये सर्वभूतहिते रताः ।
न क्रुध्यन्ति न हृष्यन्ति नापराध्यन्ति कस्यचित् ॥ १५

विसृज्य हृदयग्रन्थिं चङ्क्रम्यन्ते यथासुखम् ।
न चैषां बान्धवास्सन्ति ते चान्येषां न बान्धवाः ॥ १६

अमित्राश्च न सन्त्येषां ते चामित्रा न कस्यचित् ।
य एवं कुर्वते मर्त्यास् सुखं जीवन्ति सर्वदा ॥ १७

धर्ममेवानुरुध्यन्ते धर्मज्ञा द्विजसत्तम ।
ये ह्यतो विच्युता मार्गात् ते [1]हृष्यन्ति द्विषन्ति च ॥ १८

आस्थितस्तं महामार्गम् असूयिष्यामि कं कथम् ।
निन्द्यमानः प्रशस्तो वा हृष्येयं केन हेतुना ॥ १९

[2]यद्यदिच्छन्ति तत्तस्माद् अधिगच्छन्तु मानवाः ।
न मे निन्दाप्रशंसाभ्यां ह्रासवृद्धी भविष्यतः ॥ २०

अमृतस्येव सन्तृप्येद् अवमानस्य तत्त्ववित् ।
विषस्येवोद्विजेच्चैव सम्मानस्य विचक्षणः ॥ २१

अवज्ञातस्सुखं शेते इह चामुत्र चोभयोः ।
अमुक्तस्सर्वपापेभ्यो योऽवमन्ता स बध्यते ॥ २२

---

1. ख-ग—हृष्यन्त्युद्विजन्ति च
2. घ—कोशे इत आरभ्य २२७-अध्यायान्तं ग्रन्थपातः

गतिं परां तु ये केचित् प्रार्थयन्ति मनीषिणः ।
एतद्वृत्तं समाश्रित्य सुखमेधन्ति ते जनाः ॥ २३

सर्वतश्च समाहृत्य क्रतून् ब्रह्मञ् जितेन्द्रियः ।
प्राप्नोति ब्रह्मणस्स्थानं यत् परं प्रकृतेर्ध्रुवम् ॥ २४

नास्य देवा न गन्धर्वा न पिशाचा न राक्षसाः ।
पदमन्ववरोहन्ति प्राप्तस्य परमां गतिम् ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥
[ अस्मिन्नध्याये २५ श्लोकाः ]

---

## ॥ पञ्चदशाधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति सद्गुणानां जनवशीकरणकारणत्वे दृष्टान्ततया उग्रसेनाय कृष्णोदितनारदगुणानुवादः ॥

---

युधिष्ठिरः—

प्रियस्सर्वस्य लोकस्य सर्वसत्त्वाभिनन्दितः ।
गुणैस्सर्वैरुपेतश्च को न्वस्ति भुवि मानवः ॥ १

भीष्मः—

अत्र ते वर्तयिष्यामि पृच्छतो भरतर्षभ ।

उग्रसेनस्य संवादं नारदे केशवस्य च ॥ २

उग्रसेनः—

[1]वश्यस्सङ्कल्पितो लोको नारदस्य प्रकीर्तने ।
मन्यसे गुणसम्पन्नं ब्रूहि तं मम पृच्छतः ॥ ३

श्रीभगवान्—

कुकुराधिप यान् मन्ये शृणु तान् मे विवक्षतः ।
नारदस्य गुणान् साधून् सङ्क्षेपेण नराधिप ॥ ४

न चारित्रनिमित्तोऽस्याहङ्कारो देहपातनः ।
अहीनश्रुतचारित्रस् तस्मात् सर्वत्र पूजितः ॥ ५

तेजसा यशसा बुद्ध्या नयेन विनयेन च ।
जन्मना तपसा वृद्धस् तस्मात् सर्वत्र पूजितः ॥ ६

अरतिः क्रोधचापल्ये भयं नैतानि नारदे ।
अदीर्घसूत्रश्शूरश्च तस्मात् सर्वत्र पूजितः ॥ ७

उपास्यो नारदो बाढं वाचि नास्य व्यतिक्रमः ।
कामाद्वा यदि वा लोभात् तस्मात् सर्वत्र पूजितः ॥ ८

अध्यात्मविधितत्त्वज्ञः [2]क्षान्तश्शान्तो जितेन्द्रियः ।
ऋजुश्च सत्यवादी च तस्मात् सर्वत्र पूजितः ॥ ९

दृढभक्ति[3]रदीनात्मा श्रुतवानानृशंस्यवान् ।

---

1. ख—यस्य सङ्कल्पते 2. ग—कान्तश्शुक्लो
3. ग—अनिन्द्यात्मा

वीतसम्मोहदोषश्च तस्मात् सर्वत्र पूजितः ॥ १०

सुशीलस्सुखसंवेशस् सुतेजास्स्वादरश्शुचिः ।
सुवाक्यश्चाप्यनीर्ष्यश्च तस्मात् सर्वत्र पूजितः ॥ ११

कल्याणं कुरुते बाढं पापमस्मिन् न विद्यते ।
न प्रीयते परानर्थैस् तस्मात् सर्वत्र पूजितः ॥ १२

वेदश्रुतिभिराख्यानैर् अर्थानभिजिगीषते ।
तितिक्षुरनवज्ञश्च तस्मात् सर्वत्र पूजितः ॥ १३

समत्वाद्धि प्रियो नास्ति नाप्रियश्च कथञ्चन ।
मनोऽनुकूलवादी च तस्मात् सर्वत्र पूजितः ॥ १४

[1]बहुश्रुतश्चित्रकथः पण्डितोऽनलसोऽशठः ।
अदीनोऽक्रोधनोऽलुब्धस् तस्मात् सर्वत्र पूजितः ॥ १५

समाधिर्नास्य मानार्थं नात्मानं स्तौति कर्हिचित् ।
अनीर्ष्युर्मृदुसम्भाषस् तस्मात् सर्वत्र पूजितः ॥ १६

लोकस्य विविधं वृत्तं प्रेक्षते चाप्यकुत्सयन् ।
[2]संसर्गविद्याकुशलस् तस्मात् सर्वत्र पूजितः ॥ १७

असक्तस्सर्वभूते तु सक्तात्मेव च लक्ष्यते ।
अदीर्घसंशयो वाग्मी तस्मात् सर्वत्र पूजितः ॥ १८

नासूयत्यागमं कञ्चित् स्वं तपो नोपजीवति ।

---

1. ख—अर्धद्वयं नास्ति 2. ग—स स्वर्गविद्याकुशलः

अवन्ध्यकालो वश्यात्मा तस्मात् सर्वत्र पूजितः ॥ १९

कृतश्रमः कृतप्रज्ञो [1]ज्ञानतृप्तस्समाहितः ।
नित्ययुक्तोऽप्रमत्तश्च तस्मात् सर्वत्र पूजितः ॥ २०

सापत्रपश्च युक्तश्च विनेयश्श्रेयसे परैः ।
अभेत्ता परगुह्यानां तस्मात् सर्वत्र पूजितः ॥ २१

न हृष्यत्यर्थलाभेषु नालाभेषु व्यथत्यपि ।
स्थिरबुद्धिरसक्तात्मा तस्मात् सर्वत्र पूजितः ॥ २२

तं सर्वगुणसम्पन्नं दक्षं शुचि[2]मनाकुलम् ।
कालज्ञं च नयज्ञं च कः प्रियं न करिष्यति ॥ २३

भीष्मः—

इत्युक्तस्सम्प्रशस्यैनम् उग्रसेनो गतो गृहात् ॥ २३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
[अस्मिन्नध्याये २३॥ श्लोकाः]

---

1. ख—न च तृप्तः समाधितः 2. ख—मकातरम्

## ।। षोडशाधिकद्विशततमोऽध्यायः ।।

भीष्मेण युधिष्ठिरं प्रति सृष्ट्यादिप्रतिपादकव्यासशुकसंवादानुवादः।।

युधिष्ठिरः—

आद्यन्तं सर्वभूतानां ज्ञातुमिच्छामि कौरव ।
ध्यानं कर्म च कालं च तथैवायुर्युगे युगे ।। १

लोकतत्त्वं च कार्त्स्न्येन भूतानामागतिं गतिम् ।
सर्गश्च निधनं चैव कुत एतत् प्रवर्तते ।। २

यदि तेऽनुग्रहे बुद्धिर् अस्मास्विह [1]सतां वर ।
एतद्भवन्तं पृच्छामि [2]तद्भवान् प्रब्रवीतु मे ।। ३

पूर्वं हि कथितं श्रुत्वा भृगुभाषितमुत्तमम् ।
भारद्वाजस्य विप्रर्षेस् ततो मे बुद्धिरुत्तमा ।। ४

जाता परमधर्मिष्ठा दिव्यसंस्थानसंस्थिता ।
ततो भूयस्तु पृच्छामि तद्भवान् वक्तुमर्हति ।। ५

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
जगौ यद्भगवान् व्यासः पुत्राय परिपृच्छते ।। ६

अधीत्य वेदानखिलान् साङ्गोपनिषदांस्तथा ।

---

1. ख—परन्तप  2. ख—भगवन् प्रब्रवीहि मे

अन्विच्छन्नैष्ठिकं कर्म धर्मनैपुणदर्शनात् ॥ ७

कृष्णद्वैपायनं व्यासं पुत्रो वैयासकिश्शुकः ।
पप्रच्छ संशयमिमं छिन्नधर्मार्थसंशयम् ॥ ८

शुकः—

भूतग्रामस्य कर्तारं कालज्ञाने च [1]निश्चयम् ।
ब्राह्मणस्य च यत् कृत्यं तद्भवान् वक्तुमर्हति ॥ ९

भीष्मः—

तस्मै प्रोवाच तत् सर्वं पिता पुत्राय पृच्छते ।
अतीतानागते विद्वान् सर्वज्ञस्सर्व[2]धर्मवित् ॥ १०

व्यासः—

अनाद्यन्तमजं दिव्यम् [3]अजरं ध्रुवमव्ययम् ।
अप्रतर्क्यमविज्ञेयं ब्रह्माग्रे समवर्तत ॥ ११

काष्ठा निमेषा दश पञ्च चैव
त्रिंशत्तु काष्ठा गणयेत् कलां ताम् ।
त्रिंशत्कलाश्चापि भवेन्मुहूर्तो
भागः कलाया दश पञ्च च स्यात् ॥ १२

त्रिंशन्मुहूर्तस्तु भवेदहश्च
रात्रिश्च सङ्ख्या मुनिभिः प्रणीता ।

1. ख—नैष्ठिकम् 2. ख—तत्त्ववित्
3. ख—मव्यक्तमजरं ध्रुवम्

मासस्स्मृतो रात्र्यहनी तु त्रिंशत्
संवत्सरो द्वादशमास उक्तः ॥　　१३

संवत्सरं द्वे अयने वदन्ति
सङ्ख्याविदो दक्षिणमुत्तरं च ॥　　१३॥

अहोरात्रे विभजते सूर्यो मानुषलौकिके ।
रात्रिस्स्वप्राय संयाति चेष्टायै कर्मणामहः ॥　　१४॥

पित्र्ये रात्र्यहनी मासः प्रविभागस्तयोः पुनः ।
[1]कृष्णोऽहः कर्मचेष्टायै शुक्लस्स्वप्राय शर्वरी ॥　　१५॥

दैवे रात्र्यहनी ह्यब्दः प्रविभागस्तयोः पुनः ।
अहस्तत्रोदगयनं रात्रिस्स्याद्दक्षिणायनम् ॥　　१६॥

एते रात्र्यहनी पूर्वैः कीर्तिते दैवलौकिके ।
तयोस्सङ्ख्याय वर्षाग्रं [2]ब्राह्मे वक्ष्याम्यहःक्षपे ॥　　१७॥

तेषां संवत्सराग्राणि प्रवक्ष्याम्यनुपूर्वशः ।
कृते त्रेतायुगे चैव द्वापरे च कलौ तथा ॥　　१८॥

चत्वार्याहुस्सहस्राणि वर्षाणां तत् कृतं युगम् ।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ॥　　१९॥

इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु ।
एकापायेन संयान्ति सहस्राणि शतानि च ॥　　२०॥

---

1. ख—अर्धद्वयं नास्ति　　2. ग—ब्राह्मर्थौ

एतानि शाश्वताँल्लोकान् धारयन्ति सनातनान् ।
[1]इति तु ब्रह्मविद्यान्तं विदितं ब्रह्म शाश्वतम् ॥ २१॥

चतुष्पात् सकलो धर्मस् सत्यं चैव कृते युगे ।
नाधर्मेणागमः कश्चिद् युगे तस्मिन् प्रवर्तते ॥ २२॥

[2]इतरेषु क्रमाद्धर्मः पादशस्त्ववरोप्यते ॥ २३

[3]सत्यं शौचं तथाऽऽयुश्च धर्मश्चापैति पादशः ।
चौरिकानृतमायाभिर् अधर्मश्चोपचीयते ॥ २४

अरोगास्सर्वसिद्धार्थाश् चतुर्वर्षशतायुषः ।
कृते त्रेतायुगे तेषां पादशो ह्रसते वयः ॥ २५

वेदवादाश्चानुयुगं ह्रसन्तीति च नश्श्रुतम् ।
आयूंषि चाशिषश्चैव वेदस्यैव च यत् फलम् ॥ २६

अन्ये कृतयुगे धर्मास् त्रेतायां द्वापरेऽपरे ।
अन्ये कलियुगे धर्मा यथाशक्ति कृता इव ॥ २७

तपः परं कृतयुगे त्रेतायां ज्ञानमुत्तमम् ।
द्वापरे [4]यज्ञमेवाहुर् दानमेव कलौ परम् ॥ २८

एतां द्वादशसाहस्रीं युगाख्यां कवयो विदुः ।

---

1. ख-ग—एतद्ब्रह्मविदां तात
2. ख-ग—इतरेष्वागमाद्धर्मः
3. ख—नासीदमधर्मम्
4. ख—दानमेवाहुश्शौचमेव कलौ युगे

सहस्रपरिवृत्तं तद् ब्राह्मो दिवस उच्यते ॥ २९

रात्रिस्तु तावती ब्राह्मी तदादौ विश्वमीश्वरः ।
प्रलयेऽध्यात्ममावेश्य सुप्त्वा सोऽन्ते विबुध्यते ॥ ३०

सहस्रयुगपर्यन्तम् अहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रां तां तेऽहोरात्रविदो जनाः ॥ ३१

स प्रबुद्धो विकुरुते ब्रह्माक्षय्यं क्षपाक्षये ।
सृजते च महद्भूतं तस्माद्व्यक्तात्मकं मनः[1] ॥ ३२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
[ अस्मिन्नध्याये ३२ श्लोकाः ]

---

1. ख—मनस्सृष्टिं विकुरुते चोद्यमानं सिसृक्षया ।
आकाशं जायते तस्मात् तस्य शब्दो गुणो मतः ॥
आकाशात् तु विकुर्वाणात् सर्वगन्धवहश्शुचिः ।
बलवाञ्जायते वायुस्तस्य स्पर्शो गुणो मतः ॥
वायोरपि विकुर्वाणाज्ज्योतिर्भवति भास्वरम् ।
रोचनं जनयेच्छुक्लं तद्रूपगुणमुच्यते ॥
ज्योतिषोऽपि विकुर्वाणाद्भवन्त्यापो रसात्मिकाः ।
अद्भ्यो गन्धवहा भूमिः पूर्वेषां सृष्टिरुच्यते ॥ [अधिकः पाठः]

## ॥ सप्तदशाधिकद्विशततमोऽध्यायः ॥

सृष्ट्यादिप्रतिपादकव्यासशुकसंवादानुवादः ॥

व्यासः—

ब्रह्मतेजोमयं शुक्रं यस्य सर्वमिदं रसः ।
एकस्य ब्रह्मभूतस्य द्वयं स्थावरजङ्गमम् ॥ १

अहर्मुखे विबुद्धं तत् सृजते विद्यया जगत् ।
अग्र एव महद्भूतम् आशु व्यक्तात्मकं मनः ॥ २

[1]अथ भूयोऽपि चार्चिष्मान् असृजत् सप्त मानसान् ।
दूरगं बहुधागामि प्रार्थनासंशयात्मकम् ॥ ३

मनस्सृष्टिं विकुरुते चोद्यमानं सिसृक्षया ।
आकाशो जायते तस्मात् तस्य शब्दो गुणो मतः ॥ ४

आकाशात् तु विकुर्वाणात् सर्वगन्धवहश्शुचिः ।
बलवाञ्जायते वायुस् तस्य स्पर्शं गुणं विदुः ॥ ५

वायोरपि विकुर्वाणाज् ज्योतिर्भूतं तमोनुदम् ।
रोचिष्णु जायते तत्र तद्रूपगुणमुच्यते ॥ ६

ज्योतिषोऽपि विकुर्वाणाद् भवन्त्यापो रसात्मिकाः ।
अद्भ्यो गन्धगुणा भूमिः पूर्वैषा सृष्टिरुच्यते ॥ ७

1. ख-ग—अभिभूयेह चार्चिष्मान् अ

गुणाः पूर्वस्य पूर्वस्य प्राप्नुवन्त्युत्तरोत्तरम् ।
तेषां यावद्विधं यद्यत् तत्तावद्गुणकं स्मृतम् ॥ ८

उपलभ्याप्सु चेद्गन्धं केचिद्ब्रूयु[1]रनैपुणात् ।
पृथिव्यामेव तं विद्याद् अपो वायुं च संश्रितम् ॥ ९

एते वै सप्त पुरुषा नानावीर्याः पृथक् पृथक् ।
नाशक्नुवन् प्रजास्स्रष्टुम् असमागम्य कृत्स्नशः ॥ १०

ते समेत्य महात्मान अन्योन्यमभिसंश्रिताः ।
शरीराश्रयणं प्राप्तास् ततः पुरुष उच्यते ॥ ११

श्रयणाच्छरीरं भवति मूर्तिमान् षोडशात्मकः ।
तमाविशन्ति भूतानि महान्ति सह कर्मणा ॥ १२

सर्वभूतानि चादाय तपसश्चरणाय च ।
आदिकर्ता महाभूतं तमेवाहुः प्रजापतिम् ॥ १३

स वै सृजति भूतानि स एव पुरुषः परः ।
अजो जनयते ब्रह्मा देवर्षिपितृदानवान् ॥ १४

लोकान् नदीस्समुद्रांश्च दिशश्शैलान् वनस्पतीन् ।
नरकिन्नररक्षांसि वयःपशुमृगोरगान् ॥ १५

[2]अव्ययं च व्ययं चैव द्वयं स्थावरजङ्गमम् ॥ १५॥

---

1. क-ग—रनैपुणाः
2. ग—आयं चैव व्ययं चैव सर्वं

तेषां ये यानि कर्माणि प्राक् सृष्टौ प्रतिपेदिरे ।
तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः ॥ १६॥

हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते ।
अतो यन्मन्यते धाता तस्मात् तत्तस्य रोचते ॥ १७॥

महाभूतेषु नानात्वम् इन्द्रियार्थेषु मूर्तिषु ।
विनियोगं च भूतानां धातैव विदधात्युत ॥ १८॥

केचित् पुरुषकारं तु प्राहुः कर्मविदो जनाः ।
दैवमित्यपरे विप्रास् स्वभावं भूतचिन्तकाः ॥ १९॥

पौरुषं कर्म दैवं च फलवृत्तिस्वभावतः ।
त्रय एतेऽपृथग्भूता [1]अविवेकस्त्वकिञ्चनः ॥ २०॥

एवमेतच्च दैवं च यद्भूतं सृजते जगत् ।
कर्मस्था विषयं ब्रूयुस् सत्त्वस्थास्समदर्शिनः ॥ २१॥

तपो निश्श्रेयसं जन्तोस् तस्य मूलं शमो दमः ।
तेन सर्वानवाप्नोति यान् कामान् मनसेच्छति ॥ २२॥

तपसा तदवाप्नोति यद्भूतं सृजते जगत् ।
स तद्भूतश्च सर्वेषां भूतानां भवति प्रभुः ॥ २३॥

ऋषयस्तपसा वेदान् अध्यैषन्त दिवानिशम् ॥ २४

---

1. अ-क-घ—अपि लोकेऽस्ति किञ्चन
 ख—न विवेकस्तु कश्चन

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
[1]आदौ वेदमयी दिव्या यतस्सर्वाः प्रवृत्तयः ॥ २५

ऋषीणां नामधेयानि याश्च लोकेषु सृष्टयः ॥ २५॥

नाम रूपं च भूतानां कर्मणां च प्रवर्तनम् ।
वेदशब्देभ्य एवादौ निर्मिमीते महेश्वरः ॥ २६॥

नामधेयानि [2]वर्णानि याश्च लोकेषु सृष्टयः ।
शर्वर्यन्तेषु जातानां तान्येवैभ्यो ददात्यजः ॥ २७॥

नामभेदास्तपःकर्मयज्ञाख्या लोकसिद्धये ।
आत्मसिद्धिस्तु [3]वेदेषु प्रोच्यते दशभिः क्रमैः ॥ २८॥

यदुक्तं वेदवादेषु गहनं वेददृष्टिभिः ।
तदन्तेषु [4]यथादृष्टं क्रमयोगेन लक्ष्यते ॥ २९॥

कर्मजोऽयं पृथग्भावो द्वन्द्वयुक्तो हि देहिनाम् ।
आत्मसिद्धिस्तु विज्ञानाज् जहाति प्रायशो बलम् ॥ ३०॥

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ ३१॥

आरम्भयज्ञा राजानो हविर्यज्ञा विशस्स्मृताः ।

---

1. अ-क-ग-घ—नास्तीदमर्धम्
2. ख—चार्षाणि याश्च देवेषु
3. ख—लोकेषु  4. ख—पुनर्व्यक्तं

परिचारयज्ञाश्शूद्रास्तु तपोयज्ञा द्विजातयः ॥ ३२॥

त्रेतायुगे विधिस्तेषां यज्ञानां न कृते युगे ।
द्वापरे विप्लवं यान्ति यज्ञाः कलियुगे तथा ॥ ३३॥

अपृथग्धर्मिणो मर्त्या ऋक्सामानि यजूंषि च ।
काम्या इष्टीः पृथग् [1]दृष्टास् तपद्भिस्तप एव च ॥ ३४॥

त्रेतायां तु [2]समस्तास्ते प्रादुरासन् महाबलाः ।
संयन्तारस्स्थावराणां जङ्गमानां च सर्वशः ॥ ३५॥

त्रेतायां संहृता वर्णा वेदा यज्ञास्तथैव च ।
संरोधादायुषस्त्वेते व्यस्यन्ते द्वापरे युगे ॥ ३६॥

दृश्यन्ते नापि दृश्यन्ते वेदाः कलियुगे खिलाः ।
उत्सीदन्ते सयज्ञाश्च केवला धर्म[3]सेतवः ॥ ३७॥

कृते युगे यस्तु धर्मो ब्राह्मणेषु प्रदृश्यते ।
आत्मवत्सु तपोवत्सु श्रुतिमत्सु प्रतिष्ठितः ॥ ३८॥

स धर्मः प्रैति संयोगं यथाधर्मं युगे युगे ।
विक्रियन्ते स्वधर्मस्था वेदवादा यथायुगम् ॥ ३९॥

यथा विश्वानि भूतानि वृष्ट्या भूयांसि प्रावृषि ।
सृज्यन्ते जङ्गमस्थानि तथा धर्मा युगे युगे ॥ ४०॥

---

1. ख—दृष्ट्वा तपः कृत उपासते
2. ख—सुयज्ञास्तु 3. ख—पीडिताः

यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा ब्रह्माहरादिषु ॥ ४१॥

विहितं कालनानात्वम् अनादिनिधनं तथा ।
कीर्तितं यत् पुरस्तात् ते तत् सूते चात्ति च प्रजाः ॥ ४२॥

एतद्धि प्रभवस्थानं भूतानां संयमो यमः ।
स्वभावेनैव वर्तन्ते द्वन्द्वयुक्तानि भूरिशः ॥ ४३॥

सर्गः कालः क्रिया वेदाः कर्ता कार्यं क्रियाफलम् ।
प्रोक्तं ते पुत्र सर्वं वै यन्मां त्वं परिपृच्छसि ॥ ४४॥

प्रत्याहारं तु वक्ष्यामि शर्वर्यादौ गतेऽहनि ।
यथेदं कुरुतेऽध्यात्मं सुसूक्ष्मं विश्वमीश्वरः ॥ ४५॥

दिवि सूर्यास्तथा सप्त दहन्ति शिखिनोऽर्चिषा ।
सर्वमेतत्तदर्चिर्भिः पूर्णं जाज्वल्यते जगत् ॥ ४६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥
[ अस्मिन्नध्याये ४६॥ श्लोकाः ]

## ॥ अष्टादशाधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति शुकाय श्रीव्यासोदितप्रलयप्रकाराद्यनुवादः ॥

व्यासः—

पृथिव्यां यानि भूतानि [1]जङ्गमानि ध्रुवाणि च ।
तान्येवादौ प्रलीयन्ते भूमित्वमुपयाति च ॥ १

ततः प्रलीने सर्वस्मिन् स्थावरे जङ्गमे तथा ।
अकाष्ठा निस्तृणा भूमिर् दृश्यते कूर्मपृष्ठवत् ॥ २

भूमेरपि गुणं गन्धम् आप आददते यदा ॥
आत्तगन्धा तदा भूमिः प्रलयत्वाय कल्पते ॥ ३

आपस्ततः प्रतिष्ठन्ते ऊर्मिमत्यो महास्वनाः ।
सर्वमेवेदमापूर्य तिष्ठन्ति विचरन्ति च ॥ ४

अपामपि गुणांस्तात ज्योतिराददते यदा ।
आपस्तदा चात्तरसा ज्योतिष्युपरमन्ति वै ॥ ५

[2]यदा रसगुणं तासां ग्रसन्ति शिखिनोऽर्चिषा ।
सर्वमेवेदमर्चिर्भिः पूर्णं जाज्वल्यते नभः ॥ ६

ज्योतिषोऽपि गुणं रूपं वायुराददते यदा ।

1. ख—स्थावराणि चराणि च
2. ख-ग—यदादित्यं स्थितं मध्ये दहन्ति शिखिनोऽर्चिषः। [पाठान्तरम्]

प्रशाम्यति तदा ज्योतिर् [1]वायुर्दोधूयते महान् ॥ ७

ततस्तु मूलमासाद्य वायुस्सम्भवमात्मनः ।
अधश्चोर्ध्वं च तिर्यक् च दोधवीति दिशो दश ॥ ८

वायोरपि गुणं स्पर्शम् आकाशं ग्रसते यदा ।
प्रशाम्यति तदा वायुः खं तु तिष्ठति नानदत् ॥ ९

[2]अरूपमरसस्पर्शम् अगन्धं न च मूर्तिमत् ।
सर्वलोकप्रणुदितं खं तु तिष्ठति नानदत् ॥ १०

आकाशस्य गुणं शब्दम् अभिव्यक्तात्मकं मनः ।
मनसो व्यक्तमव्यक्तं ब्राह्मस्सम्प्रतिसञ्चरः ॥ ११

तदाऽऽत्मगुणमाविश्य मनो ग्रसति चन्द्रमाः ।
मनस्युपरते चात्मा चन्द्रमस्यवतिष्ठते ॥ १२

तं तु कालेन महता सङ्कल्पं कुरुते वशे ।
चित्तं ग्रसति सङ्कल्पस् तच्च ज्ञानमनुत्तमम् ॥ १३

कालो हरति विज्ञानं कालं बल इति श्रुतिः ।
कालं बले ग्रसति तु तं विद्वान् कुरुते वशे ॥ १४

[3]तदव्यक्तं परं ब्रह्म तच्छाश्वतमनुत्तमम् ।

---

1. ख—इतोऽष्टौ पादा न सन्ति
2. अ-घ—नास्त्यर्धद्वयम्
3. ख—आकाशस्य यदा घोषं तं विद्यात् कुरुतेऽऽत्मनि । [अधिकः पाठः]

एवं सर्वाणि भूतानि [1]ब्रह्मैव प्रतिसंहरेत् ॥ १५

यथावत् कीर्तितं सम्यग् एवमेतदसंशयम् ।
बोध्यं विद्यामयं दृष्ट्वा योगिभिः परमात्मनि ॥ १६

एवं विस्तारसङ्क्षेपौ ब्रह्माऽव्यक्ते पुनः पुनः ।
युगसाहस्रयोरादावहोरात्र्यास्तथैव च ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥ ॥ ८८ ॥ मोक्षधर्मपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥
[ अस्मिन्नध्याये १७ श्लोकाः ]

## ॥ एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति व्यासेन शुकायोक्तब्राह्मणधर्मानुवादः ॥ १ ॥ तथा ब्राह्मणेभ्यो दानमहिमानुवादः ॥ २ ॥

व्यासः—

भूतग्रामेऽनुयुक्तं यत् तदेतत् कीर्तितं मया ।
ब्राह्मणस्य तु यत् कृत्यं तत्ते वक्ष्यामि साम्प्रतम् ॥ १

जातकर्मप्रभृत्यस्य कर्मणां दक्षिणावताम् ।
क्रिया स्यादासमावृत्तेर् आचार्ये वेदपारगे ॥ २

---

1. ख—निविशन्ति प्रतिसंयमेत्

अधीत्य वेदानखिलान् गुरुशुश्रूषणे रतः ।
गुरूणामनृणो भूत्वा समावर्तेत यज्ञवित् ॥ ३

आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम् ।
आविमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि ॥ ४

प्रजासर्गेण दारैश्च ब्रह्मचर्येण वा पुनः ।
वने गुरुसकाशे वा यतिधर्मेण वा पुनः ॥ ५

गृहस्थश्चैव सर्वेषां चतुर्णां मूलमुच्यते ।
तत्र पक्वकषायो हि दान्तस्सर्वत्र सिध्यति ॥ ६

प्रजावाञ् श्रोत्रियो यज्वा मुक्तो दिव्यैस्त्रिभी ऋणैः ।
अथान्यमाश्रमं पश्चात् पूतो गच्छति कर्मभिः ॥ ७

यत् पृथिव्यां पुण्यतमं विद्यास्थानं तदावसेत् ।
यतेत तस्मिन् प्रामाण्यं गन्तुं यशसि चोत्तमे ॥ ८

तपसा वा सुमहता विद्यानां पारणेन वा ।
इज्यया वा प्रदानैर्वा विप्राणां वर्धते यशः ॥ ९

यावदस्य भवत्यस्मिन् कीर्तिर्लोके यशस्करी ।
तावत् पुण्यकृताँल्लोकान् अनन्तान् पुरुषोऽश्नुते ॥ १०

अध्यापयेदधीयीत याजयेत यजेत वा ।
न वृथा प्रतिगृह्णीयान्न च दद्यात् कथञ्चन ॥ ११

याज्यतश्शिष्यतो वाऽपि कन्यया वा धनं सह ।
यद्यागच्छेद्यजेद्द्यान्नैकोऽश्नीयात् कथञ्चन ॥ १२

गृहमावसतो ह्यस्य नान्यत्तीर्थमुदाहृतम् ।
देवर्षिपितृगुर्वर्थं वृद्धातुरबुभुक्षताम् ॥ १३

अर्हतामभिसृप्तानां यथाशक्ति बुभूषताम् ।
द्रव्याणामतिशक्त्याऽपि देयमेषां कृते सदा ॥ १४

अर्हतामनुरूपाणां नादेयं ह्यस्ति किञ्चन ॥ १४॥

उच्चैश्श्रवसमप्यश्वं काश्यपाय महात्मने ।
दत्त्वा जगाम ब्रह्माऽऽदौ लोकान् देवैरभिष्टुतान् ॥ १५॥

अनुनीय तथा काव्यस् सत्यसन्धो महाव्रतः ।
स्वैः प्राणै[1]र्ब्राह्मणप्राणान् परित्राता दिवं गतः ॥ १६॥

रन्तिदेवश्च साङ्कृत्यो वसिष्ठाय महात्मने ।
अपः प्रदाय शीतोष्णा नाकपृष्ठे महीयते ॥ १७॥

[2]अत्रये इन्द्रदमनस् त्वर्हते विविधं धनम् ।
दत्त्वा धीमान् ययौ लोकान् अनन्तान् स महीपतिः ॥ १८॥

शिबिरौशीनरोऽङ्गानि सुतं च प्रियमौरसम् ।
ब्राह्मणार्थमुपाकृत्य नाकपृष्ठमितो गतः ॥ १९॥

---

1. ख—ब्राह्मणान् साधून् परित्राय
2. ख—आत्रेय चन्द्रदमयोरर्हतोः; ग—अत्रये चन्द्रदमनस्त्वर्हते

प्रतर्दनः काशिपतिः प्रदाय नयने स्वके ।
ब्राह्मणायातुलां कीर्तिम् इह चामुत्र चाश्नुते ॥ २०॥

दिव्यं मृष्टं शलाकं तु सौवर्णं परमर्द्धिमत् ।
छत्रं [1]देवप्रियो दत्त्वा सराष्ट्रोऽभ्यगमद्दिवम् ॥ २१॥

साङ्कृतिश्च तथाऽऽत्रेयश् शिष्येभ्यो ब्रह्म निर्गुणम् ।
उपदिश्य महातेजा गतो लोकाननुत्तमान् ॥ २२॥

अम्बरीषो गवां दत्त्वा ब्राह्मणेभ्यः प्रतापवान् ।
अर्बुदानि दशैकं च सराष्ट्रोऽभ्यगमद्दिवम् ॥ २३॥

सावित्री कुण्डले दिव्ये शरीरं जनमेजयः ।
ब्राह्मणार्थे परित्यज्य जग्मतुर्लोकमुत्तमम् ॥ २४॥

सर्वरत्नं वृषादर्विर् युवनाश्वो वरास्त्रियः ।
रम्यमावसथं चैव दत्त्वाऽमुं लोकमास्थितः ॥ २५॥

निमी राष्ट्रं च वैदेहो जामदग्न्यो वसुन्धराम् ।
ब्राह्मणेभ्यो ददौ चापि गयश्चोर्वीं [2]सपत्तनाम् ॥ २६॥

अवर्षति च पर्जन्ये सर्वभूतानि चासकृत् ।
वसिष्ठो जीवयामास प्रजापतिरिव प्रजाः ॥ २७॥

[3]कारन्धमस्य पुत्रस्तु मरुत्तो नृपतिस्तथा ।

---

1. ख-ग—देवावृधो　　2. ग—सपट्टणाम्
3. ख-ग—करन्धमस्य

कन्यामङ्गिरसे दत्त्वा दिवमाशु जगाम ह ॥ २८॥

ब्रह्मदत्तश्च पाञ्चाल्यो राजा बुद्धिमतां वरः ।
निधिं शङ्खं द्विजाग्र्येभ्यो दत्त्वा लोकानवाप्तवान् ॥ २९॥

राजा मित्रसहश्चापि वसिष्ठाय महात्मने ।
मदयन्तीं प्रियां दत्त्वा तया सह दिवं गतः ॥ ३०॥

सहस्रजिच्च राजर्षिः प्राणानिष्टान् महायशाः ।
ब्राह्मणार्थं परित्यज्य गतो लोकाननुत्तमान् ॥ ३१॥

[1]सर्वकामैश्च सम्पूर्णं दत्त्वा वेश्म हिरण्मयम् ।
मुद्गलाय गतस्स्वर्गं शतद्युम्नो महीपतिः ॥ ३२॥

नाम्ना च द्युतिमान् नाम साल्वराजः प्रतापवान् ।
दत्त्वा राज्यमृचीकाय गतो लोकाननुत्तमान् ॥ ३३॥

रोमपादश्च राजर्षिश् शान्तां दत्त्वा सुतां प्रभुः ।
ऋश्यशृङ्गाय विपुलैस् सर्वकामैरयुज्यत ॥ ३४॥

मदिराश्वश्च राजर्षिर् दत्त्वा कन्यां सुमध्यमाम् ।
हिरण्यहस्ताय गतो लोकान् देवैरभिष्टुतान् ॥ ३५॥

दत्त्वा शतसहस्रं तु गवां राजा प्रसेनजित् ।
सवत्सानां महातेजा गतो लोकाननुत्तमान् ॥ ३६॥

एते चान्ये च बहवो दानेन तपसा च ह ।

---

1. अ-क-ब—अर्धचतुष्टयं नास्ति

महात्मानो गतास्स्वर्गं शिष्टात्मानो जितेन्द्रियाः ॥ ३७॥

तेषां प्रतिष्ठिता कीर्तिर् यावत् स्थास्यति मेदिनी ।
दानयज्ञप्रजासर्गैर् एते दिवमवाप्नुवन् ॥ ३८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥
[अस्मिन्नध्याये ३८॥ श्लोकाः]

---

## ॥ विंशत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति व्यासकृतब्राह्मणधर्मकथनपूर्वकज्ञानप्रशंसनानुवादः ॥

---

व्यासः—

त्रयीं विद्यामवेक्षेत वेदेषूक्तमतां गतः ।
ऋक्सामवर्णाक्षरतो यजुषोऽ[1]थर्वणस्तथा ॥ १

वेदवादेषु कुशला ह्यध्यात्मकुशलाश्च ये ।
सत्त्ववन्तो महाभागाः पश्यन्ति प्रभवाप्ययौ ॥ २

एवं धर्मेण वर्तेत क्रियाश्शिष्टवदाचरेत् ॥ २॥

असंरोधेन भूतानां वृत्तिं लिप्सेत वै द्विजः ।

---

1. अ-ग—वर्णतस्तथा

सञ्च आगतविज्ञानश् शिष्टश्शास्त्रविचक्षणः ॥ ३॥

स्वधर्मेण क्रिया लोके कुर्वाण[1]स्सोऽप्युपायतः ।
[2]निष्ठितस्तेषु गृहवान् षट्सु कर्मसु वै द्विजः ॥ ४॥

पञ्चभिस्सततं यज्ञैश् श्रद्दधानो यजेत च ।
धृतिमानप्रमत्तश्च दान्तो धर्मविदात्मवान् ॥ ५॥

वीतहर्ष[3]मदक्रोधो ब्राह्मणो नावसीदति ॥ ६

दानमध्ययनं यज्ञस् तपो ह्रीरार्जवं दमः ।
एतैर्विवर्धते तेजः पाप्मानं चापकर्षति ॥ ७

धूतपाप्मा तु मेधावी लघ्वाहारो जितेन्द्रियः ।
कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदम् ॥ ८

अग्नींश्च ब्राह्मणांश्चार्चेद् देवताः प्रणमेत च ।
वर्जयेदुशतीं वाचं हिंसां चाधर्मसंहिताम् ॥ ९

एषा हि पूर्विका वृत्तिर् ब्राह्मणस्य विधीयते ।
ज्ञानागमेन कर्माणि कुर्वन् कर्मसु सिद्ध्यति ॥ १०

पञ्चेन्द्रियजलां घोरां लोभकूलां सुदुस्तराम् ।
मन्युपङ्कामनाधृष्यां नदीं तरति बुद्धिमान् ॥ ११

काममन्यूद्यतं पश्येन्नित्यमत्यन्त[4]मोहितम् ॥ १२॥

---

1. ख-ग—स्सोऽप्यसङ्करः 2. ख—तिष्ठंस्तेषु
3. ग—भयक्रोधो 4. अ-क-घ—कोविदः

महता विधिदृष्टेन बलिनाऽप्रतिघातिना ।
स्वभावस्रोतसा नित्यम् उह्यते सततं जगत् ॥　　१२॥

कालोदकेन महता वर्षावर्तेन सन्ततम् ।
मासोर्मिणर्तुवेगेन पक्षोलपतृणेन च ॥　　१३॥

निमेषोन्मेषफेनेन अहोरात्रजवेन च ।
कामग्राहेण घोरेण वेदयज्ञप्लवेन च ॥　　१४॥

धर्मद्वीपेन भूतानां [1]धनकामरवेण च ।
ऋतवाङ्मोक्षतीरेण [2]विवित्सातरुवाहिना ॥　　१५॥

स्रोतसा युगभूतेन ब्रह्मप्रायभवेन च ।
धात्रा सृष्टानि भूतानि कृष्यन्ते यमसादनम् ॥　　१६॥

[3]एतत् प्रज्ञामयैर्धीरा निस्तरन्ति मनीषिणः ।
प्लवैरप्यप्लवन्तो हि किं करिष्यन्त्यचेतसः ॥　　१७॥

उपपन्नं हि यत् प्राज्ञो निस्तरेन्नेतरो जनः ।
दूरतो गुणदोषौ हि प्राज्ञस्सर्वत्र पश्यति ॥　　१८॥

संशयात्तु स कामात्मा चलचित्तोऽल्पचेतनः ।
अप्राज्ञो न तरत्येव यो ह्यास्ते न स गच्छति ॥　　१९॥

---

1. ख—धर्मकामपरेण च
2. ख-ग – विहिंसातरुवाहिना
3. ख—एवं प्रज्ञाप्लवै

[1]अप्लवो हि महान् दोषो मोहमात्मनि गच्छति ।
काम[2]ग्राहगृहीतस्य ज्ञानमप्यस्य न प्लवः ॥ २०॥

तस्मादुन्मज्जनस्यार्थे प्रयतेत विचक्षणः ।
एतदुन्मज्जनं तस्य यदयं ब्राह्मणो भवेत् ॥ २१॥

त्र्यवदाते कुले जातस् त्रिसन्देहस्त्रिकर्मकृत् ।
तस्मादुन्मज्जनं तिष्ठेन्निस्तरेत् प्रज्ञया स्वया ॥ २२॥

संस्कृतस्य हि दान्तस्य नियतस्य यतात्मनः ।
प्राज्ञस्यानन्तरा सिद्धिर् इह लोके परत्र च ॥ २३॥

वर्तेत तेषु गृहवान् अक्रुध्यन्ननसूयकः ।
पञ्चभिस्सततं यज्ञैर् विघसाशी यजेत च ॥ २४॥

सतां वृत्तेन धर्मेण क्रियाश्शिष्टवदाचरेत् ।
[3]अनुरोधेन लोकस्य वृत्तिं लिप्सेदगर्हिताम् ॥ २५॥

श्रुतविज्ञानतत्त्वज्ञश् [4]शिष्टाचारविचक्षणः ।
स्वधर्मेण क्रिया लोके कुर्वाणस्सोऽप्यसङ्करः ॥ २६॥

क्रियावाञ् श्रद्दधानश्च दाता प्राज्ञोऽनसूयकः ।
धर्माधर्मविशेषज्ञस् सर्वं तरति दुस्तरम् ॥ २७॥

धृतिमानप्रमत्तश्च दान्तो धर्मविदात्मवान् ।

---

1. ख—नास्तीदमर्धम्
2. ख—क्रोध
3. ख-ग—असंरोधेन
4. ग—शिष्टशास्त्रवि

वीतहर्ष[1]भयक्रोधो ब्राह्मणो नावसीदति ॥ २८॥

एषा पूर्वतरा वृत्तिर् ब्राह्मणस्य विधीयते ।
ज्ञानवृद्धैव कर्माणि कुर्वन् सर्वत्र सिध्यति ॥ २९॥

अधर्मं धर्मकामो हि करोति ह्यविचक्षणः ।
धर्मं चाधर्मसङ्काशं शोचन्निव करोति सः ॥ ३०॥

धर्मं करोमीति करोत्यधर्मम्
अधर्मकामश्च करोति धर्मम् ।
उभे बालः कर्मणी न प्रजानन्
स जायते म्रियते चापि देही ॥ ३१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥
[ अस्मिन्नध्याये ३१॥ श्लोकाः ]

---

1. ख—मद

## ॥ एकविंशत्यधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति ज्ञानस्य श्रेयस्साधनतापरशुकसम्बोध्यक-व्यासवाक्यानुवादः ॥

---

व्यासः—

अथ चेद्रोचयेदेतद् उह्यते मनसा तथा ।
उन्मज्जंश्च निमज्जंश्च ज्ञानवान् प्लववान् भवेत् ॥ १

प्रज्ञया निर्मितैर्धीरास् तारयन्त्यबुधान् प्लवैः ।
नाबुधास्तारयन्त्यन्यान् आत्मानं वा कथञ्चन ॥ २

[1]हीनदोषो मुनिर्योगाद् युक्तो युञ्जीत वा दश ।
दशकर्मसुखानर्थान् उपायापायनिष्क्रियः ॥ ३

चक्षुराचारसङ्ग्राहैर् मनसा दर्शनेन च ।
यच्छे[2]द्वाचं मनो बुद्ध्या य इच्छेज्ज्ञानमुत्तमम् ॥ ४

ज्ञानेन यच्छेदात्मानं य इच्छेच्छान्तिमात्मनः ।
एतेषां चेदनुद्रष्टा पुरुषोऽपि सुदारुणः ॥ ५

यदि वा सर्ववेदज्ञो यदि वाऽप्यनृचो जपन् ।
यदि वा धार्मिको यज्वा यदि वा पापकृत्तमः ॥ ६

---

1. ख-ग—छिन्नदोषो मुनिर्योगान्युक्तो युञ्जीत द्वादश ।
2. ख-ग—द्वाङ्मनसी

यदि वा पुरुषव्याघ्रो यदि वैक्लव्यधारणः ।
तरत्येवं महादुर्गं जरामरणसागरम् ॥ ७

एवं ह्येतेन योगेन युञ्जानोऽप्येवमन्ततः ।
अपि जिज्ञासमानोऽपि शब्दब्रह्मातिवर्तते ॥ ८

धर्मोपस्थो ह्रीवरूथ उपायापायकूबरः ।
अपानाक्षः प्राणयुगः प्रज्ञायुर्जीवबन्धनः ॥ ९

चेतनाबन्धुरश्चारुर् आचारग्राहनेमिमान् ।
दर्शनस्पर्शनवहो घ्राणश्रवणवाहनः ॥ १०

प्रज्ञानाभिर्धर्मतन्त्रप्रतोदो ज्ञानसारथिः ।
क्षेत्रज्ञाधिष्ठितो धैर्यश् श्रद्धादमपुरस्सरः ॥ ११

त्यागरश्म्यनुगः क्षेम्यश् शौचगो ध्यानगोचरः ।
जीवयुक्तो रथो दिव्यो ब्रह्मलोके विराजते ॥ १२

अथ [1]सत्त्वं समासाद्य रथमेनं युयुक्षतः ।
अक्षरं गन्तुमनसो विधिं वक्ष्यामि शीघ्रगम् ॥ १३

सप्त यो धारणाः कृत्स्ना [2]वाग्यतः प्रतिपद्यते ।
पृष्ठतः पार्श्वतश्चान्यास् तावत्यस्ताः प्रधारणाः ॥ १४

क्रमशः पार्थिवं यच्च वायव्यं खं तथा पयः ॥ १४॥

---

1. ख-ग—सन्त्वरमाणस्य रथमेकं
2. ख—पश्यतः

ज्योतिषो यत्तदैश्वर्यम् अहङ्कारस्य बुद्धितः ।
अव्यक्तस्य तथैश्वर्यं क्रमशः प्रतिपद्यते ॥ १५॥

व्युत्क्रमाच्चापि यस्यैते तथा युङ्क्ते स योगतः ।
तथाऽस्य योगयुक्तस्य सिद्धिमात्मनि पश्यतः ॥ १६॥

[1]निर्मथ्यमानस्सूक्ष्मात्मा रूपाण्येतानि दर्शयेत् ।
शैशिरस्तु यथा धूमस् सूक्ष्मस्संश्रयते नभः ॥ १७॥

तथा देहाद्विमुक्तस्य पूर्वरूपं भवत्युत ।
अथ [2]धूमस्य विरमेद् द्वितीयं रूपदर्शनम् ॥ १८॥

जलरूपमिवाकाशे तत्रैवात्मनि पश्यति ।
अपां व्यतिक्रमे चापि वह्निरूपं प्रकाशते ॥ १९॥

[3]तस्मिन्नुपरते चास्य वायव्यं सूक्ष्ममप्यथ ।
रूपं प्रकाशते तस्य पीतवर्णवदप्यजे ॥ २०॥

तस्मिन्नुपरते रूपम् आकाशस्य प्रकाशते ।
[4]ऊर्णासवर्णरूपं तत् तस्य रूपं प्रकाशते ॥ २१॥

[5]ततश्चैतां गतिं गत्वा सोऽहङ्कारे प्रकाशते ॥ २२

1. ख—निर्मुच्यमानः सूक्ष्मत्वाद्रूपाणीमानि दर्शयेत् । [पाठान्तरम्]

2. ग—देहस्य 3. ख—अर्धचतुष्टयं नास्ति

4. अ-ख-ग-घ—नास्तीदमर्धम्

5. ख—अथ श्वेतां गतिं गत्वा वायव्यं सूक्ष्ममप्यजम् ।
सुशुक्लं चेतसस्सौक्ष्ममव्यक्तं ब्राह्मणस्य वै ॥ [पाठान्तरम्]

तस्मिन्नुपरते चास्य बुद्धिरूपं प्रकाशते ।
सुशुक्लं चेतसस्सौम्यम् अव्यक्ते ब्राह्मणस्य वै ॥ २३

एतेष्वपि हि जातेषु फलजातानि मे शृणु ।
जातस्य पार्थिवैश्वर्यैस् सृष्टिरिष्टा विधीयते ॥ २४

प्रजापतिरिवाक्षोभ्यश् शरीरात् सृजते प्रजाः ।
वर्णतो गृह्यते नाप्सु नापः पिबति चाशया ॥ २५

अङ्गुल्यङ्गुष्ठमात्रेण हस्तपादेन वा तथा ।
पृथिवीं कम्पयत्येको गुणो वायोरिति स्मृतः ॥ २६

आकाशभूतश्चाकाशे सवर्णत्वान्न दृश्यते ॥ २६॥

न चास्य तेजसां रूपं दृश्यते शाम्यते तथा ।
अहङ्कारस्य विजये पञ्चैते स्युर्वशानुगाः ॥ २७॥

षण्णामात्मनि बुद्धौ च जितायां प्रभवत्युत ।
निर्दोषा प्रतिभा ह्येषा कृत्स्ना समभिवर्तते ॥ २८॥

तथैव व्यक्तमात्मानम् अव्यक्तं प्रतिपद्यते ।
यतो निस्सरते लोको भवति व्यक्तसंज्ञकः ॥ २९॥

[1]विषयप्रतिसंहारस् साङ्ख्यानां सिद्धिलक्षणः ।
तत्राव्यक्तमयीं व्याख्यां शृणु त्वं विस्तरेण मे ॥ ३०॥
तथा व्यक्तमयीं चैव संख्यापूर्वं निबोध मे ॥ ३१

---

1. ग—इदमर्धं नास्ति

पञ्चविंशतितत्त्वानि तुल्यान्युभयतस्समम् ।
योगे साङ्ख्येऽपि च तथा विशेषांस्तत्र मे शृणु ॥ ३२

प्रोक्तं तद्व्यक्तमित्येव जायते वर्धते च यत् ।
जीर्यते म्रियते चैव चतुर्भिर्लक्षणैर्युतम् ॥ ३३

विपरीतमतो यत्तु तदव्यक्तमुदाहृतम् ।
[1]द्वावात्मानौ च वेदेषु सिद्धान्तेष्वप्युदाहृतौ ॥ ३४

चतुर्लक्षणजं त्वन्यच् चतुर्वर्गं प्रचक्षते ।
व्यक्तमव्यक्तजं चैव तथा बुद्धिरथेतरत् ॥ ३५

सत्त्वं क्षेत्रज्ञ इत्येतद् द्वयमव्यक्तदर्शनम् ।
द्वावात्मानौ च वेदेषु विषयेष्वनुरज्यतः ॥ ३६

विषयात् प्रतिसंहारस् साङ्ख्यानां विद्धि लक्षणम् ॥ ३६॥

निर्ममश्चानहङ्कारो निर्द्वन्द्वश्छिन्नसंशयः ।
नैव क्रुध्यति न द्वेष्टि नानृता भाषते गिरः ॥ ३७॥

आक्रुष्टस्ताडितश्चापि मैत्रीं ध्यायति नाशुभम् ।
वाङ्मनःकायदण्डानां त्रयाणां च निवर्तकः ॥ ३८॥

समस्सर्वेषु भूतेषु ब्रह्माणमतिवर्तते ।
नैवेच्छति न चानिच्छो यात्रामात्रव्यवस्थितः ॥ ३९॥

अलोलुपोऽव्यथो दान्तो नाकृतिर्न निराकृतिः ।

---

1. अ-घ—अर्धचतुष्टयं नास्ति

नास्येन्द्रियमनेकाग्रं नातिक्षिप्तो मनोरथः ॥ ४०॥

अहिंस्रस्सर्वभूतानाम् ईदृक्सङ्कल्पो विमुच्यते ॥ ४१

अथ योगाद्विमुच्यन्ते कारणैर्यैर्निबोध मे ।
योगैश्वर्यमतिक्रान्तो योऽतिक्रामति मुच्यते ॥ ४२

इत्येषोभयजा बुद्धिः कथिता ते न संशयः ।
एवं भवति निर्द्वन्द्वो ब्रह्माणं चातिवर्तते ॥ ४३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
[अस्मिन्नध्याये ४३ श्लोकाः]

---

## ॥ द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥

---

भीष्मेण युधिष्ठिरं प्रति भूतेषु तारतम्यकथनपूर्वकज्ञानप्रशंसापरशुक-संबोध्यकव्यासवाक्यानुवादः ॥

---

व्यासः—

अथ ज्ञानप्लवं धीरो गृहीत्वा शान्तिमास्थितः ।
उन्मज्जंश्च निमज्जंश्च विद्यामेवाभिसंश्रयेत् ॥ १

शुकः—

किं तज्ज्ञानमथो विद्या यया निस्तरति द्वयम् ।

प्रवृत्तिलक्षणो धर्मो निवृत्तिरिति चैव हि ॥ २

व्यासः—

[1]पारावर्यं तु भूतानां ज्ञानेनैवोपलभ्यते ।
विद्यया तात दृष्टानां विद्या हि परमा गतिः ॥ ३

यस्तु पश्येत् स्वभावेन विना भावमचेतनः ।
[2]पुष्णाति स पुनस्सर्वान् प्रज्ञया मुक्तहेतुकः ॥ ४

येषां चैकान्तभावेन स्वभावः कारणं महत् ।
दूर्वातृणबृसीका ये ते लभन्ते न किञ्चन ॥ ५

ये चैनं पक्षमाश्रित्य वर्तयन्तेऽल्पचेतसः ।
स्वभावं कारणं ज्ञात्वा न श्रेयः प्राप्नुवन्ति ते ॥ ६

स्वभावो हि विनाशाय मोहकर्ममनोभवः ।
निरुक्तमेतयोरेवं स्वभावपरिभावयोः ॥ ७

कृष्यादीनि हि कर्माणि सस्यसङ्ग्रहणानि च ।
प्रज्ञावद्भिः प्रक्लृप्तानि यानासनगृहाणि च ॥ ८

आक्रीडानां गृहाणां च [3]गतानामागतस्य च ।
प्रज्ञावन्तः प्रवक्तारो ज्ञानवद्भिरनुष्ठिताः ॥ ९

---

1. ख—अर्धद्वयं अत्र नास्ति उपरि वर्तते
2. अ-क—मुष्णाति
3. ग—गदानामगदस्य च

प्रज्ञा संयोजयत्यर्थैः प्रज्ञा श्रेयोऽधिगच्छति ।
राजानो भुञ्जते राज्यं प्रज्ञया तुल्यलक्षणाः ॥ १०

[1]भूतानां जन्म सर्वेषां विविधानां चतुर्विधम् ।
जराय्वण्डमथोद्भेदस्वेद इत्युपलक्षयेत् ॥ ११

स्थावरेभ्यो विशिष्टानि जङ्गमान्युपलक्षयेत् ।
उपपन्नं हि यच्छ्रेष्ठं विशिष्येत विशेषतः ॥ १२

आहुर्द्विबहुपादानि जङ्गमानि द्वयानि तु ।
[2]द्विपादानि विशिष्टानि जातिधर्मावधारणात् ॥ १३

[3]द्विपादानि द्वयान्याहुः पार्थिवानीतराणि च ।
पार्थिवानि विशिष्टानि तानि ह्यन्नानि भुञ्जते ॥ १४

पार्थिवानि द्वयान्याहुर् मध्यमान्युत्तमानि च ।
[4]उत्तमानि विशिष्टानि जातिधर्मोपधारणात् ॥ १५

[5]उत्तमानि द्वयान्याहुर् धर्मज्ञानीतराणि च ।
धर्मज्ञानि विशिष्टानि कार्याकार्योपधारणात् ॥ १६

---

1. ख—परावरं तु भूतानां ज्ञानेनैवोपलभ्यते ।
विद्यया तात सृष्टानां विद्यैवेह परा गतिः ॥ [अधिकः पाठः]
2. ख—बहुपाद्भ्यो विशिष्टानि द्विपदानि बहून्यपि । [पाठान्तरम्]
3. ख—द्विपादानि द्विजान्याहुर् धर्मज्ञानीतराणि च ।
ग—द्विपादानि च यान्याहुः [पाठान्तरम्]
4. ख—मध्य 5. ख—मध्य

धर्मज्ञानि द्वयान्याहुर् वेदज्ञानीतराणि च ।
वेदज्ञानि विशिष्टानि वेदो ह्येषु प्रतिष्ठितः ॥ १७

वेदज्ञानि द्वयान्याहुः प्रवक्तृणीतराणि च ।
प्रवक्तृणि विशिष्टानि सर्वधर्मोपधारणात् ॥ १८

विज्ञायन्ते हि यैर्वेदास् [1]सहधर्मफलक्रियाः ।
सयज्ञास्सकला वेदाः प्रवक्तृष्वभिनिस्सृताः ॥ १९

प्रवक्तृणि द्वयान्याहुर् आत्मज्ञानीतराणि च ।
आत्मज्ञानि विशिष्टानि [2]जन्ममोक्षोपधारणात् ॥ २०

धर्मद्वयं हि यो वेद सर्वज्ञस्सर्वधर्मवित् ।
सत्याशीस्सत्यसङ्कल्पस् सत्यक्षान्तिस्स ईश्वरः ॥ २१

धर्मज्ञानप्रतिष्ठं हि तं देवा ब्राह्मणं विदुः ।
शब्दब्रह्मणि निष्णातं परे च कृतनिश्चयम् ॥ २२

अन्तस्थं च बहिष्ठं च येऽधियज्ञाधिदैवतम् ।
जानन्ति तान् नमस्यामस् ते देवास्तात ते द्विजाः ॥ २३

तेषु विश्वमिदं भूतं साग्रं च जगदाहितम् ।
तेषां माहात्म्यभावस्य सदृशं नास्ति किञ्चन ॥ २४

---

1. ख—स्वधर्मार्थैक्रियाफलाः
2. ग—जन्माजन्मोपधारणात्

[1]आद्यन्तं निधनं चैव धर्मं चाधीत्य सर्वशः ।
चतुर्विधस्य भूतस्य सर्वस्येशास्स्वयम्भुवः ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥
[ अस्मिन्नध्याये २५ श्लोकाः ]

---

## ॥ त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति मतभेदयुगधर्मभेदादिप्रतिपादकव्यास-वाक्यानुवादः ॥

---

व्यासः—

एषा पूर्वतरा वृत्तिर् ब्राह्मणस्य विधीयते ।
ज्ञानवानेव कर्माणि कुर्वन् सर्वत्र सिद्ध्यति ॥ १

तत्र चेन्न भवेदेवं संशयः कर्मनिश्चये ।
किंतु कर्मस्वभावो वा दैवं कर्मेति वा पुनः ॥ २

[2]तत्र वेदविवित्सार्थं ज्ञानं यत् पुरुषं प्रति ।
उपपत्त्युपलब्धिभ्यां वर्णयिष्यामि तच्छृणु ॥ ३

---

1. ख—आदितो निधनं चैकं मम चाधीत्य
   ग—आद्यन्तं निधनं चैव कर्मचा
2. ग—किं तत्र वेदवित्साध्यं

पौरुषं कारणं केचित् केचित् कर्मेति मानवाः ।
दैवमेके प्रशंसन्ति स्वभावमपरे जनाः ॥ ४

पौरुषं कर्म दैवं च फलवन्ति स्वभावतः ।
त्रयमेतत् पृथग्भूतम् अविवेकं च केचन ॥ ५

एवमेतन्न चाप्येवम् उभावेवं न चाप्युभौ ।
कर्मस्था विषयं ब्रूयुस् सत्त्वस्थास्समदर्शिनः ॥ ६

त्रेतायां द्वापरे चैव कलिजातास्ससंशयाः ।
तपस्विनः प्रशान्ताश्च सत्त्वस्थाश्च कृते युगे ॥ ७

अपृथग्दर्शिनस्सर्वे ऋक्सामसु यजुष्षु च ।
कामद्वेषौ पृथग् दृष्ट्वा तपः कृत उपासते ॥ ८

तपोधर्मेण संयुक्तस् तपोनित्यस्सुसंशितः ।
तेन सर्वानवाप्नोति यान् कामान् मनसेच्छति ॥ ९

तपसा तदवाप्नोति यद्भूतं सृजते जगत् ।
[1]सत्यं तपश्च भूतानां सर्वेषां भवति प्रभुः ॥ १०

तदुक्तं वेदवादेषु गहनं वेददर्शिभिः ।
वेदान्तेषु पुनर्व्यक्तं क्रमयोगेन लक्ष्यते ॥ ११

आ[2]रम्भयज्ञाः क्षत्रास्स्युर् हविर्यज्ञा विशस्स्मृताः ।

---

1. ख—तद्भूतश्च ततस्सर्वभूतानां ग—सतद्भूतश्च भूतानां
2. ख—दानयज्ञाः

परिचारयज्ञाश्शूद्रास्तु जपयज्ञा द्विजातयः ॥ १२

परिनिष्ठितकार्यो हि स्वाध्यायेन द्विजो भवेत् ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ १३

त्रेतायां सकला वेदा यज्ञा वर्णाश्रमास्तथा ।
संरोधादायुषस्त्वेते व्यस्यन्ते द्वापरे युगे ॥ १४

द्वापरे विप्लवं यान्ति वेदाः कलियुगे तथा ।
दृश्यन्ते नापि दृश्यन्ते कलेरन्ते पुनः पुनः ॥ १५

उत्सीदन्ति स्वधर्माश्च तत्राधर्मेण पीडिताः ।
गवां भूमेश्च ये चापाम् ओषधीनां च ये रसाः ॥ १६

अधर्मान्तर्हिता वेदा वेदधर्मास्तथाऽऽश्रमाः ।
विक्रियन्ते स्वधर्माश्च स्थावराणि चराणि च ॥ १७

यथा सर्वाणि भूतानि वृष्ट्या तृप्यन्ति प्रावृषि ।
सृज्यन्ते वेदतोऽङ्गानि तथा वेदा युगे युगे ॥ १८

विहितं कालनानात्वम् अनादिनिधनं च यत् ।
कीर्तितं यत् पुरस्तात्ते यतस्संयान्ति च प्रजाः ॥ १९

धातेदं प्रभवस्थानं भूतानां संयमो यमः ।
स्वभावेनैव वर्तन्ते द्वन्द्वसृष्टानि भूरिशः ॥ २०

सर्गः कालः क्रिया वेदाः कर्ता कार्यं क्रियाफलम् ।
एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
[अस्मिन्नध्याये २१ श्लोकाः]

## ॥ चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति वर्णाश्रमोचितधर्मानुष्ठानपूर्वकब्रह्मज्ञानस्य तत्प्राप्तिसाधनत्वादिप्रतिपादकव्यासवाक्यानुवादः ॥

भीष्मः—

इत्युक्तो हि प्रशस्यैतत् परमर्षेस्तु शासनम् ।
मोक्षधर्मार्थसंयुक्तम् इदं प्रष्टुं प्रचक्रमे ॥ १

शुकः—

प्रजावाञ् श्रोत्रियो यज्वा [1]कृतप्रज्ञोऽनसूयकः ।
अनागतमनैतिह्यं कथं ब्रह्माधिगच्छति ॥ २

तपसा ब्रह्मचर्येण सर्वत्यागेन मेधया ।
[2]साङ्ख्यं वा यदि वा योगं एतत् पृष्टो ब्रवीहि मे ॥ ३

---

1. ग—वृद्धप्रज्ञोऽ
2. ग—सांख्ये वा यदि वा योगे

मनसश्चेन्द्रियाणां च ऐकाग्र्यं यदवाप्यते ।
येनोपायेन पुरुषैस् तच्च व्याख्यातुमर्हसि ॥　　४

व्यासः—

नान्यत्र विद्यातपसोर् नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र लोभसन्त्यागात् सिद्धिं विन्दति कश्चन ॥　　५

महाभूतानि सर्वाणि पूर्वसृष्टौ स्वयम्भुवः ।
भूयिष्ठं प्राणभृत्काये निविष्टानि शरीरिषु ॥　　६

भूमेर्देहो जलात् स्रोतो ज्योतिषश्चक्षुषी स्मृते ।
प्राणापानाश्रयो वायुः खेष्वाकाशश्शरीरिणाम् ॥　　७

क्रान्ते विष्णुर्बले शक्रः कोष्ठेऽग्निर्भुक्तिमिच्छति ।
कर्णयोः प्रदिशश्श्रोत्रे जिह्वायां वाक् सरस्वती ॥　　८

कर्णौ त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
[1]दर्शनानीन्द्रियोक्तानि द्वाराण्याहार्यसिद्धये ॥　　९

शब्दस्स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः ।
इन्द्रियाणि पृथक् स्वार्थान् मनसा दर्शयन्त्युत ॥　　१०

इन्द्रियाणि मनो युङ्क्ते वश्यान् यन्तेव वाजिनः ।
मनश्चापि सदा युङ्क्ते भूतात्मा हृदये स्थितः ॥　　११

इन्द्रियाणां यथा तेषां सर्वेषामीश्वरं मनः ।

---

1. ख-ग—दश तानी

नियमे च विसर्गे च भूतात्मा मनसस्तथा ॥ १२
इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना मनः ।
प्राणापानौ च जीवश्च नित्यं देहेषु देहिनाम् ॥ १३
आश्रयो नास्ति सत्त्वस्य गुणस्सत्त्वस्य चेतना ।
सत्त्वं हि तेजस्सृजति न गुणान् वै कदाचन ॥ १४
एवं सप्तदशं देहं वृतं षोडशभिर्गुणैः ।
मनीषी मनसा विप्रः पश्यत्यात्मानमात्मनि ॥ १५
न ह्ययं चक्षुषा दृश्यो न च सर्वैरपीन्द्रियैः ।
मनसा दीपभूतेन महानात्मा प्रकाशते ॥ १६
अशब्दस्पर्शरूपं तद् अरसागन्धमव्ययम् ।
अशरीरं शरीरेषु निरीक्षेत निरिन्द्रियम् ॥ १७
अव्यक्तं सर्वदेहेषु मर्त्येष्वमृतमाहितम् ।
योऽनुपश्यति स प्रेत्य कल्पते ब्रह्मभूयसे ॥ १८
विद्या[1]विनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डितास्समदर्शिनः ॥ १९
स च सर्वेषु भूतेषु जङ्गमेषु ध्रुवेषु च ।
वसत्येको महानात्मा येन सर्वमिदं ततम् ॥ २०
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।

---

1. ख—ऽभिजन

यदा पश्यति भूतात्मा ब्रह्म सम्पद्यते तदा ॥ २१

यावानात्मनि मे ह्यात्मा तावानात्मा परात्मनि ।
य एवं सततं वेद सोऽमृतत्वाय कल्पते ॥ २२

सर्वभूतात्मभूतस्य सर्वभूतहितस्य च ।
देवाश्च मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥ २३

शकुनीनामिवाकाशे जले वारिचरस्य च ।
यथा गतिर्न दृश्येत तथैव सुमहात्मनः ॥ २४

कालः पचति भूतानि सर्वाण्येवात्मनाऽऽत्मनि ।
यस्मिंस्तु पच्यते कालस् तं न वेदेह कश्चन ॥ २५

[1]नात ऊर्ध्वं न तिर्यक् च नाधश्चरति वा पुनः ।
[2]इन्द्रियैरिह बुद्ध्या वा गृह्यते न कदाचन ॥ २६

न मध्ये प्रतिगृह्णाति नैव कश्चित् कुतश्चन ॥ २६॥

सर्वेऽन्तस्था इमे लोका बाह्यमेषां न किञ्चन ।
यस्सहस्रं समागच्छेद् यथा बाणो गुणाच्युतः ॥ २७॥

नैवान्तं कारणस्येयाद् यदि च स्यान्मनोजवः ।
तस्मात् सूक्ष्मतरं नास्ति नास्ति स्थूलतमं ततः ॥ २८॥

सर्वतः पाणिपादं तत् सर्वतोक्षिशिरोमुखम् ।

---

1. ख—न चैवोर्ध्वं×नाधस्ताच्च कुतश्चन
2. अ-क-ग-घ—नास्तीदमर्धम्

सर्वतश्श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ २९॥

[1]तदेवाणोरणुतरं महद्भ्यश्च महत्तरम् ।
तदन्तस्सर्वभूतानां ध्रुवं तिष्ठन् न दृश्यते ॥ ३०॥

[2]अक्षरश्च क्षरश्चैव द्वैधीभावोऽयमात्मनः ।
क्षरस्सर्वेषु भूतेषु दिवि ह्यमृतमक्षरम् ॥ ३१॥

नवद्वारं पुरं गत्वा हंसो हि नियतो वशी ।
ईश्वरस्सर्वभूतस्य स्थावरस्य चरस्य च ॥ ३२॥

[3]हानेन गतकालानां नवानां सञ्चयेन च ।
शरीराणामजस्याहुर् हंसत्वं पारदर्शिनः ॥ ३३॥

हंसोक्तं यत् क्षरं चैव कूटस्थं यत् तदक्षरम् ।
तद्विद्वानक्षरं प्राप्य जह्यान्मरणजन्मनी ॥ ३४॥

एकत्वं बुद्धिमनसोर् इन्द्रियाणां च सर्वशः ।
आत्मनो व्यापिनस्तात ज्ञानमेतदनुत्तमम् ॥ ३५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥
[ अस्मिन्नध्याये ३५॥ श्लोकाः ]

---

1 ख—तदेवाहुरणुभ्योऽणु तन्महद्भ्यो महत्तरम् ।
2. ख—अक्षरं च क्षरं चैव
3. ग—एतेनाङ्गविकल्पानां

## ॥ पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति योगस्वरूपादिनिरूपकशुकसम्बोध्यकव्यासवचनानुवादः ॥

---

व्यासः—

पृच्छतस्तव सत्पुत्र यथावदिह तत्त्वतः ।
साङ्ख्यन्यायेन संयुक्तं यदेतत् कीर्तितं मया ॥ १
योगकृत्यं तु ते कृत्स्नं वर्तयिष्यामि तच्छृणु ॥ १॥

एकत्वं बुद्धिमनसोर् इन्द्रियाणां च सर्वशः ।
आत्मनोऽ[1]व्ययिनस्तात ज्ञानमेतदनुत्तमम् ॥ २॥

तदेतदुपशान्तेन दान्तेनाध्यात्मशीलिना ।
आत्मारामेण शुद्धेन बोद्धव्यं शुचिकर्मणा ॥ ३॥

योगदोषान् समुच्छिन्द्यात् पञ्च यान् कवयो विदुः ।
कामं क्रोधं च लोभं च भयं स्वप्नं च पञ्चमम् ॥ ४॥

क्रोधं शमेन जयति कामं सङ्कल्पवर्जनात् ।
सत्त्वसंसेवनाद्धीरो निद्रामुच्छेत्तुमर्हति ॥ ५॥

अप्रमादाद्भयं जह्याल्लोभं प्राज्ञोपसेवनात् ।
एवमेतान् योगदोषाञ् जयेन्नित्यमतन्द्रितः ॥ ६॥

---

1. ख—व्यापिनस्तात

धृत्या शिश्नोदरं रक्षेत् पाणिपादं च चक्षुषा ।
चक्षु[1]श्श्रोत्रं च मनसा मनो वाचं च विद्यया ॥ ७॥

अग्नींश्च ब्राह्मणानर्चेद् देवताः प्रणमेत च ।
वर्जये[2]द्रुशतीं वाचं हिंसायुक्तां मनोनुगाम् ॥ ८॥

ब्रह्म तेजोमयं शुक्लं यस्य सर्वमिदं [3]ततम् ।
[4]एकस्य सर्वभूतस्य द्वयं स्थावरजङ्गमम् ॥ ९॥

ध्यानमध्ययनं दानं सत्यं ह्रीरार्जवं क्षमा ।
शौचमाहारसंशुद्धिर् इन्द्रियाणां च निग्रहः ॥ १०॥

एतैर्विवर्धते तेजः पाप्मानं चापकर्षति ॥ ११

सिद्ध्यन्ति चास्य सर्वार्था विज्ञानं च प्रकाशते ।
समस्सर्वेषु भूतेषु लब्धालब्धेन वर्तयेत् ॥ १२

धूतपाप्मा तु तेजस्वी लघ्वाहारो जितेन्द्रियः ।
कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदम् ॥ १३

मनसश्चेन्द्रियाणां च कृत्वैकाग्र्यं समाहितः ।
पूर्वरात्रेऽपरात्रे च धारयेन्मन आत्मना ॥ १४

जन्तोः पञ्चेन्द्रियस्यास्य यदेकं छिद्रमिन्द्रियम् ।

---

1. ख—श्श्रोत्रे च मनसा मनो बुद्धिसमाधिना
2. ख—द्दुशतीं×युक्तामनर्थकाम्
3. ख-ग—रसः 4. ख-ग—अर्धश्लोकं नास्ति

ततोऽस्य स्रवति प्रज्ञा दृतेः पादादिवोदकम् ॥ १५

मनस्तु पूर्वमादद्यात् [1]कुलीरमिव मत्स्यहा ।
ततश्श्रोत्रं च चक्षुश्च जिह्वा घ्राणं च योगवित् ॥ १६

तत एतानि संयम्य मनसि स्थापये[2]द्व्रती ।
तथैवापोह्य सङ्कल्पान् मनो ह्यात्मनि धारयेत् ॥ १७

[3]तं च ज्ञानेन सन्धाय मनसि स्थापयेद्व्रती ।
यदेतान्यवतिष्ठन्ते मनष्षष्ठानि चात्मनि ॥ १८

प्रसीदन्ति च संस्थाय तदा ब्रह्म प्रकाशते ।
विधूम इव सप्तार्चिर् आदित्य इव मूर्तिमान् ॥ १९

[4]वैद्युतोऽग्निरिवाकाशे पश्यत्यात्मानमात्मनि ।
सर्वस्तत्र स सर्वत्र व्यापकत्वाच्च दृश्यते ॥ २०

तं पश्यन्ति महात्मानो ब्राह्मणा ये मनीषिणः ।
धृतिमन्तो महाप्राज्ञास् सर्वभूतहिते रताः ॥ २१

एवं परिमितं कालम् आचरन् संशितव्रतः ।
आसीनो हि रहस्येको गच्छेदक्षरसात्मताम् ॥ २२

---

1. ख-ग—कुमीन
2. ख-ग—र्यतिः
3. ख—पञ्च ज्ञानानि सन्धाय मनस्संस्थापयेद्यतिः ।
   ग—तत्त्वज्ञानेन सन्धाय मनस्संस्थापयेद्यतिः ।
4. ख—अर्धचतुष्टयं नास्ति

[1]प्रमादो भ्रम आवर्तो घ्राणं श्रवणदर्शने ।
अद्भुतानि रसस्पर्शे शीतोष्णे मारुताकृतिः ॥ २३

[2]प्रतिहारोपसर्गांश्च प्रतिसंहृत्य योगतः ।
तांस्तत्त्वविदनादृत्य [3]मनसैव निवर्तयेत् ॥ २४

कुर्यात् परिचयं योगे त्रैकाल्यं नियतो मुनिः ।
गिरिशृङ्गे तथा चैत्ये वृक्षाग्रेषु च योजयेत् ॥ २५

संनियम्येन्द्रियग्रामं गोष्ठे [4]भाण्डं मनागिव ।
एकाग्रं चिन्तयेन्नित्यं योगान्नोद्वेजयेन्मनः ॥ २६

येनोपायेन शक्येत संनियन्तुं चलं मनः ।
तत्तद्युक्तो निषेवेत न चैव विचलेत् ततः ॥ २७

शून्या गिरिगुहाश्चैव देवतायतनानि च ।
शून्यागाराणि चैकाग्रो निवासार्थमुपक्रमेत् ॥ २८

नाभिष्वजेत् परं वाचा मनसा कर्मणा तथा ।
उपेक्षको यताहारो लब्धालब्धे समो भवेत् ॥ २९

यश्चैनमभिनिन्देत यश्चैनमपि वादयेत् ।
समस्तयोश्चाप्युभयोर् नाभिध्यायेच्छुभाशुभम् ॥ ३०

---

1. ख—प्रमोहो
2. ख-ग—प्रतिभामुपसर्गांश्च प्रतिसंहृत्य
3. ख—सोत्मनैव
1. ख—भाण्डमना इव

न प्रहृष्येत लाभेषु नालाभेष्वथ चिन्तयेत् ।
समस्सर्वेषु भूतेषु सधर्मा मातरिश्वनः ॥ ३१

एवं स्वस्थात्मनस्साधोस् सर्वत्र समदर्शिनः ।
षण्मासान्नित्ययुक्तस्य शब्दब्रह्माऽतिवर्तते ॥ ३२

[1]अनन्ताश्च प्रजा दृष्ट्वा समलोष्टाश्मकाञ्चनः ।
एतस्मिन् निरतो मार्गे विरमेन्न विमोहितः ॥ ३३

अपि वर्णापकृष्टस्तु नारी वा धर्मकाङ्क्षिणी ।
तावप्येतेन मार्गेण गच्छेतां [2]परमं पदम् ॥ ३४

अजं पुराणं [3]परमं सनातनं
[4]यदिन्द्रियैरुपलभ्येत निश्चलैः ।
अणोरणीयो महतो महत्तरं
तदात्मना पश्यति युक्तमात्मवान् ॥ ३५

भीष्मः—

इदं महर्षेर्वचनं महात्मनो
यथावदुक्तं मनसाऽनुदृश्य च ।
अवेक्ष्य चेयात् परमेष्ठिसात्मतां
प्रयान्ति यां भूतगतिं मनीषिणः ॥ ३६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥
[अस्मिन्नध्याये ३६ श्लोकाः]

---

1. ख-ग—वेदनार्ताः 2. ख—परमां गतिम्
3. ख-ग—अजरं 4. ग—यतेन्द्रि

## ॥ षड्विंशत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति विद्याकर्मस्वरूपादिनिरूपकव्यासवाक्यानुवादः ॥

शुकः—

यदिदं वेदवचनं कुरु कर्म त्यजेति च ।
एतदन्योन्यवैरूप्यं वर्तते प्रतिकूलतः ॥ १

कां [1]दिशं विद्यया यान्ति कां च गच्छन्ति कर्मणा ।
एतद्वै श्रोतुमिच्छामि तद्भवान् प्रब्रवीतु मे ॥ २

भीष्मः—

इत्युक्तः प्रत्युवाचेदं पराशरसुतस्सुतम् ॥ २॥

व्यासः—

कर्मविद्यामयावेतौ व्याख्यास्यामि क्षराक्षरौ ।
यां [2]दिशं विद्यया याति यां च गच्छति कर्मणा ॥ ३॥
शृणुष्वैकमनाः पुत्र गह्वरं ह्येतदन्तरम् ॥ ४

अस्ति धर्म इति ह्युक्त्वा नास्तीत्यत्रैव यो वदेत् ।
तस्य पक्षस्य सदृशम् इदं मम भवेदथ ॥ ५

1. ख—गतिं
2. ख—गतिं विद्यया यान्ति यां च गच्छन्ति

द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः ।
प्रवृत्तिलक्षणो धर्मो निवृत्तौ च व्यवस्थितः ॥ ६

विद्यया जायते नित्यम् अव्ययो ह्यक्षरात्मकः ।
कर्मणा बध्यते जन्तुर् विद्यया च विमुच्यते ॥ ७
तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ ७॥

कर्मणा जायते प्रेत्य मूर्तिमान् षोडशात्मकः ।
कर्म त्वेके प्रशंसन्ति स्वल्पबुद्धितया नराः ॥ ८॥
तेन ते देहजालानि रमयन्त उपासते ॥ ९

ये तु बुद्धिं परां प्राप्ता धर्मनैपुण्यदर्शिनः ।
ते कर्म न प्रशंसन्ति कूपं नद्यां पिबन्निव ॥ १०

कर्मणः फलमाप्नोति सुखदुःखे भवाभवौ ।
विद्यया तदवाप्नोति यत्र गत्वा न शोचति ॥ ११

यत्र गत्वा न म्रियते यत्र गत्वा न जायते ।
न जीर्यते यत्र गत्वा यत्र गत्वा न वर्धते ॥ १२

[1]तद्याति परमं ब्रह्म पुराणमजरं ध्रुवम् ।
अव्याहतमनायासम् अमृतं त्वं च विन्दति ॥ १३

---

1. ख—यदस्त ब्रह्म परममव्यक्तमजरं
ग—तद्याति परमं ब्रह्म परमव्यक्तमध्रुवम् ।

द्वन्द्वैर्यत्र न बध्यन्ते मानसेन च कर्मणा ।
समास्सर्वत्र मैत्राश्च सर्वभूतहिते रताः ॥ १४

विद्यामयोऽन्यः पुरुषस् तात कर्ममयोऽपरः ॥ १४॥

विद्धि चन्द्रमसं दर्शे सूक्ष्मया कलया स्थितम् ।
[1]विद्यामयं तं पुरुषं नित्यं ज्ञानगुणात्मकम् ॥ १५॥

तदेतदृषिणा प्रोक्तं विस्तरेणानुमीयते ॥ १६

नवं च शशिनं दृष्ट्वा वक्रतन्तुमिवाम्बरे ।
एकादशविकारात्मा कलासम्भारसम्भृतः ॥ १७

मूर्तिमानिति तं विद्धि तात कर्मगुणात्मकम् ॥ १७॥

तस्मिन् यस्संस्थितो ह्यग्निर् नित्यं स्थाल्यामिवाहितः ।
आत्मानं तं विजानीहि नित्यं त्यागजितात्मकम् ॥ १८॥

देवो यस्संश्रितस्तस्मिन्नब्बिन्दुरिव पुष्करे ।
क्षेत्रज्ञं तं विजानीहि नित्यं [2]ज्ञानजितात्मकम् ॥ १९॥

तमो रजश्च सत्त्वं च [3]विद्धि जीवगुणात्मकम् ।
जीवमात्मगुणं विद्याद् आत्मानं परमात्मनः ॥ २०॥

---

1. ख—नास्तीदमर्धम्
2. ख—ज्ञानचिदात्मकम्
3. ख—बुद्धिजीवगुणानिमान्

अचेतनं जीवगुणं वदन्ति
स चेष्टते चेष्टयते च सर्वम् ।
ततः परं क्षेत्रविदो वदन्ति
प्राकल्पयद्यो भुवनानि सप्त ॥ २१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥
[ अस्मिन्नध्याये २१॥ श्लोकाः ]

## ॥ सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥



शुकं प्रति व्यासेन ब्रह्मचर्याश्रमधर्मनिरूपणम् ॥



शुकः—

[1]क्षरात् प्रभृति यस्सर्गस् सगुणानीन्द्रियाणि च ।
बुद्ध्यैश्वर्याभिसंसर्गः प्रधानश्चात्मनश्श्रुतम् ॥ १

भूय एव तु लोकेऽस्मिन् सद्वृत्तिं हैतुकीं क्रियाम् ।
यया सन्तः प्रवर्तन्ते तामिच्छाम्यनुवर्तितुम् ॥ २

वेदे वचनमुक्तं तु कुरु कर्म त्यजेति च ।
कथमेतद्विजानीयां [2]तद्भवान् वक्तुमर्हसि ॥ ३

---

1. घ—पुरा प्रभृति 2. ख—तच्च व्याख्यातुमर्हसि

लोकवृत्तान्ततत्त्वज्ञः पूतोऽहं गुरुशासनात् ।
कृत्वा बुद्धिं विमुक्तात्मा द्रक्ष्याम्यात्मानमात्मना ॥ ४

व्यासः—

एषा वै विहिता वृत्तिः पुरस्ताद्ब्रह्मणा स्वयम् ।
एषा पूर्वतरैस्सद्भिर् आचीर्णा परमर्षिभिः ॥ ५

ब्रह्मचर्येण वै लोकाञ् जयन्ति परमर्षयः ।
आत्मनश्च हृदि श्रेय अन्विच्छन्मनसाऽऽत्मनि ॥ ६

वने मूलफलाशी च [1]तप्यस्व परमं तपः ।
पुण्यायतनचारी च भूतानामविहिंसकः ॥ ७

विधूमे सन्नमुसले वानप्रस्थप्रतिश्रये ।
काले प्राप्ते चरेद् भैक्षं कल्पते ब्रह्मभूयसे ॥ ८

निस्तुतिर्निर्नमस्कारः परित्यज्य शुभाशुभे ।
अरण्ये विचरैकाकी येन केनचिदाशितः ॥ ९

शुकः—

यदिदं वेदवचनं लोकवादे विरुध्यते ।
प्रमाणे चाप्रमाणे च विरुद्धे शास्त्रतः कुतः ॥ १०

इत्येतच्छ्रोतुमिच्छामि भगवन् प्रब्रवीतु मे ।
कर्मणामविरोधेन कथमेतत् प्रवर्तते ॥ ११

---

1. ख—कुर्वन् सुविपुलं

भीष्मः—

इत्युक्तः प्रत्युवाचेदं गन्धवत्यास्सुतस्सुतम् ।
ऋषिस्तत् पूजयन् वाक्यं पुत्रस्यामिततेजसः ॥ १२

व्यासः—

गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ।
यथोक्तकारिणस्सर्वे गच्छन्ति परमां गतिम् ॥ १३

एको य आश्रमानेतान् अधितिष्ठेद्यथाविधि ।
अकामद्वेषसंयुक्तस् स परत्र [1]महीयते ॥ १४

चतुष्पदी हि निश्श्रेणी ब्रह्मण्येषा प्रतिष्ठिता ।
एतामाश्रित्य निश्श्रेणीं ब्रह्मलोके महीयते ॥ १५

आयुषस्तु चतुर्भागं ब्रह्मचर्यानसूयकः ।
गुरौ वा गुरुपुत्रे वा वसेद्धर्मार्थकोविदः ॥ १६

जघन्यशायी पूर्वं स्याद् उत्थाय गुरुवेश्मनि ।
यच्च शिष्येण कर्तव्यं कार्यं दासेन वा पुनः ॥ १७

कृतमित्येव तत् सर्वं कृत्वा तिष्ठेत पार्श्वतः ।
किङ्करस्सर्वकारी च सर्वकर्मसु कोविदः ॥ १८

कर्मशेषेण तु गुरोर् अध्येतव्यं बुभूषता ।
दक्षिणेनोपसादी स्याद् आहूतो गुरुमाव्रजेत् ॥ १९

1. अ-क-घ—न हीयते

शुचिर्दक्षो गुणोपेतो [1]ब्रूयादिष्टमिवान्तरा ।
चक्षुषा गुरुमव्यग्रो निरीक्षेत जितेन्द्रियः ॥ २०

नाभुक्तवति चाश्नीयाद् अपीतवति नो पिबेत् ।
[2]न तिष्ठति तथाऽऽसीत नासुप्ते प्रस्वपेत च ॥ २१

उत्तानाभ्यां च पाणिभ्यां पादावस्य मृदु स्पृशेत् ।
दक्षिणं दक्षिणेनैव सव्यं सव्येन पीडयेत् ॥ २२

अभिवाद्य गुरुं ब्रूयाद् अधीष्व भगवन्निति ।
इदं करिष्ये भगवन्निदं चापि कृतं मया ॥ २३

इति सर्वमनुज्ञाप्य निवेद्य गुरवे धनम् ।
कुर्यात् कृत्वा च तत् सर्वम् आख्येयं गुरवे पुनः ॥ २४

यांस्तु गन्धान् रसान् वाऽपि ब्रह्मचारी न सेवते ।
सेवेतैतान् समावृत्त इति धर्मेषु निश्चयः ॥ २५

ये केचिद्विस्तरेणोक्ता नियमा ब्रह्मचारिणः ।
तान् सर्वाननुगृह्णीयाद् भवेच्चानपगो गुरोः ॥ २६

स एवं गुरवे प्रीतिम् उपहृत्य यथाबलम् ।
अग्राम्येणाश्रमेष्वेवं शिष्यो वर्तेत कर्मणा ॥ २७

वेदव्रतोपवासेन चतुर्थे चायुषो गते ।
गुरवे दक्षिणां दत्त्वा समावर्तेद्यथाविधि ॥ २८

---

1. ग—ब्रूयादिषुमिवान्तरा  2. ख—ना

धर्मलब्धैर्युतो दारैर् अग्नीनुत्पाद्य यत्नतः ।
द्वितीयमायुषो भागं गृहमेधी व्रती भवेत् ॥ २९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥
[अस्मिन्नध्याये २९ श्लोकाः]

---

## ॥ अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति गृहस्थधर्मप्रतिपादकव्यासवाक्यानुवादः ॥

---

व्यासः—

द्वितीयमायुषो भागं गृहमेधी गृहे वसेत् ।
धर्मलब्धैर्युतो दारैर् अग्नीनुत्पाद्य यत्नतः ॥ १

गृहस्थवृत्तयश्चैव चतस्रः कविभिस्स्मृताः ॥ १॥

[1]कुसूलधान्यः प्रथमः कुम्भीधान्यस्त्वनन्तरः ।
अश्वस्तनोऽथ कापोतीम् आस्थितो वृत्तिमाचरेत् ॥ २॥

एषां परः परो ज्यायान् धर्मतो लोकजित्तमः ॥ ३

षट्कर्मा वर्तयत्येकस् त्रिभिरेकः प्रवर्तते ।
द्वाभ्यामेकश्चतुर्थश्च ब्रह्मसत्रे व्यवस्थितः ॥ ४

---

1. ख-कुटुम्बधान्यप्रतिमः

गृहमेधिव्रतान्यत्र महान्तीह प्रचक्षते ॥ ४॥
नात्मार्थे पाचयेदन्नं न वृथा घातयेत् पशून् ।
प्राणी वा यदि वाऽप्राणी संस्कारं यजुषाऽर्हति ॥ ५॥
न दिवा प्रस्वपेज्जातु न पूर्वापररात्रयोः ॥ ६
न भुञ्जीतान्तरा काले नानृतावाह्वयेत् स्त्रियम् ।
नास्यानश्नन् वसेद्विप्रो गृहे कश्चिदपूजितः ॥ ७
तथाऽस्यातिथयः पूज्या हव्यकव्यवहास्सदा ।
वेदविद्याव्रतस्नाताश् श्रोत्रिया वेदपारगाः ॥ ८
स्वकर्मजीविनो दान्ताः क्रियावन्तस्तपस्विनः ।
तेषां हव्यं च कव्यं [1]चाप्यर्हणार्थं विधीयते ॥ ९
नखरैस्सम्प्रयातस्य स्वकर्मख्यापकस्य वा ।
अपविद्धाग्निहोत्रस्य गुरोर्वाऽलीककारिणः ॥ १०
संविभागोऽत्र भूतानां सर्वेषामेव शिष्यते ॥ १०॥
तथैवापचमानेभ्यः प्रदेयं गृहमेधिना ॥ ११
विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः ।
अमृतं यज्ञशेषस्य भोजनं हविषा समम् ॥ १२
भृत्यशेषं तु योऽश्नाति तमाहुर्विघसाशिनम् ॥ १२॥
स्वदारनिरतो दान्तो ह्यनसूयुर्जितेन्द्रियः ॥ १३

---

1. घ—च प्रहर्षार्थं

ऋत्विक्पुरोहिताचार्यैर् मातुलातिथिसंश्रितैः ।
बालवृद्धातुरैर्वैद्यैर् ज्ञातिसम्बन्धिबान्धवैः ॥ १४

मातापितृभ्यां जामीभिर् भ्रात्रा पुत्रेण भार्यया ।
दुहित्रा दासवर्गेण विवादं नानुयोजयेत् ॥ १५

एतैर्विमुच्य संवादान् सर्वपापैर्विमुच्यते ।
एतैर्जितस्तु जयति सर्वाँल्लोकान् न संशयः ॥ १६

आचार्यो ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः ।
अतिथिस्त्विन्द्रलोकेशो देवलोकस्य चर्त्विजः ॥ १७

जामयोऽप्सरसां लोके वैश्वदेवेषु ज्ञातयः ।
सम्बन्धिबान्धवा दिक्षु पृथिव्यां मातृमातुलौ ॥ १८

वृद्धबालातुरकृशास् त्वाकाशे प्रभविष्णवः ॥ १८॥

भ्राता ज्येष्ठस्समः पित्रा भार्या पुत्रस्स्वका तनुः ।
छाया स्वा दासवर्गस्तु दुहिता कृपणं परम् ॥ १९॥

तस्मादेतैरधिक्षिप्तस् सहेन्नित्यमसञ्ज्वरः ।
गृहधर्मरतो विद्वान् धर्मनित्यो जितक्लमः ॥ २०॥

न चार्थबद्धः कर्माणि धर्मं वा किञ्चिदाचरेत् ।
गृहस्थवृत्तयस्तिस्रस् तासां निश्श्रेयसं परम् ॥ २१॥

परस्परं तथैवाहुश् चातुराश्रम्यमेव तत् ।
ये चोक्ता नियमास्तेषां सर्वं कार्यं बुभूषता ॥ २२॥

कुम्भीधान्यैरुञ्छशिलैः कापोतीं चास्थितैस्तथा ।
यस्मिंश्चैते वसन्त्यर्हास् तद्राष्ट्रमभिवर्धते ॥ २३॥
दश पूर्वान् दश परान् पुनाति च पितामहान् ।
गृहस्थवृत्तिं चाप्येतां वर्तयेद्यो गतव्यथः ॥ २४॥
स चक्रचरलोकानां सदृशीमाप्नुयाद्गतिम् ।
यतेन्द्रियाणामथ वा गतिरेषा विधीयते ॥ २५॥
स्वर्गलोको गृहस्थानाम् [1]उदारमनसां हितः ।
स्वर्गो विमानसंयुक्तो वेददृष्टस्सुपुष्पितः ॥ २६॥
स्वर्गलोको गृहस्थानां प्रतिष्ठा नियतात्मनाम् ।
ब्रह्मणा विहिता श्रेणिर् एषा [2]यस्माद्विधीयते ॥ २७॥
द्वितीयं क्रमशः प्राप्य स्वर्गलोके महीयते ॥ २८

अतःपरं परममुदारमाश्रमं
तृतीयमाहुस्त्यजतां कलेबरम् ।
वनौकसां गृहपतिनामनुत्तमं
शृणु त्वमक्लिष्टशरीरकारिणाम् ॥ २९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥
[ अस्मिन्नध्याये २९ श्लोकाः ]

---

1. घ—इतश्चत्वारः पादा न सन्ति
2. क-ग-घ—यस्मिन् प्रमुच्य

## ॥ एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति वनस्थधर्मप्रतिपादकव्यासवाक्यानुवादः ॥

भीष्मः—

प्रोक्ता गृहस्थवृत्तिस्ते [1]विहिता या मनीषिभिः ।
तदनन्तरमुक्तं यत् तन्निबोध युधिष्ठिर ॥　१
[2]व्यासेन कथितं पूर्वं सुताय सुमहात्मने ॥　१॥

व्यासः—

क्रमशस्तु विधीयेत तृतीया वृत्तिरुत्तमा ॥　२
संयोगवृत्तिखिन्नानां वानप्रस्थाश्रमौकसाम् ।
श्रूयतां पार्थ भद्रं ते सर्वलोकाश्रयात्मनाम् ॥　३
प्रेक्षापूर्वं निवृत्तानां पुण्यदेशनिवासिनाम् ॥　३॥
गृहस्थस्तु यदा पश्येद् वलीपलितमात्मनः ।
अपत्यस्यापि चापत्यं वनमेव तदाऽऽश्रयेत् ॥　४॥
तृतीयमायुषो भागं वानप्रस्थाश्रमे वसेत् ।
तानेवाग्नीन् परिचरेद् यजमानो दिवौकसः ॥　५॥
नियतो नियताहारष् षष्ठभक्तोऽ[3]प्रमादवान् ।

---

1. ख—गृहीता या मनीषिणा
2. ख-ग-घ—नास्तीदमर्धम्
3. ख—प्रयत्नवान्

तदग्निहोत्रं ता गावो यज्ञाङ्गानि च सर्वशः ॥ ६॥

[1]अकृष्टं वै व्रीहियवं नीवारं विघसानि च ।
हवींषि सम्प्रयच्छेत मखेष्वत्रापि पञ्चसु ॥ ७॥

वानप्रस्थाश्रमेऽप्येताश् चतस्रो वृत्तयस्स्मृताः ।
सद्यः प्रक्षालकाः केचित् केचिन्मासिकसञ्चयाः ॥ ८॥

वार्षिकं सञ्चयं केचित् केचिद्द्वादशमासिकम् ।
कुर्वन्त्यतिथिपूजार्थं [2]यज्ञ[3]तन्त्रार्थमेव च ॥ ९॥

अभ्रावकाशा वर्षासु हेमन्ते जलसंश्रयाः ।
ग्रीष्मे च पञ्चतपसश् शश्वच्च मितभोजनाः ॥ १०॥

भूमौ विपरिवर्तन्ते तिष्ठन्ति प्रपदैरपि ।
स्थानासनैर्वर्तयन्ति सवनेष्वभिषिञ्चते ॥ ११॥

दन्तोलूखलिनः केचिद् अश्मकुट्टास्तथा परे ।
शुक्लपक्षे पिबन्त्येके यवागूं कथितां [4]सकृत् ॥ १२॥

कृष्णपक्षे पिबन्त्येके भुञ्जते वा यथागतम् ।
मूलैरेके फलैरेके पुष्पैरेके दृढव्रताः ॥ १३॥

वर्तयन्ति यथान्यायं वैखानसमते स्थिताः ॥ १४

1. ख—अफालकृष्टं धान्यं च नीवारं च बिसानि च । [पाठान्तरम्]
2. ख—पूजातन्त्रार्थमेव च
3. ख—यात्रार्थमेव च
4. ख—क्वचित्

एताश्चान्याश्च विविधा दीक्षास्तेषां [1]मनीषिणाम् ॥ १४॥

चतुर्थश्चौपनिषदो धर्मस्साधारणस्स्मृतः ।
वानप्रस्थो गृहस्थश्च ततोऽन्यस्सम्प्रवर्तते ॥ १५॥

अस्मिन्नेव युगे तात विप्रैस्सर्वार्थदर्शिभिः ॥ १६

अगस्त्यस्सप्तऋषयो मधुच्छन्दोऽघमर्षणः ।
साङ्कृतिस्सुदिवातस्थिर् यवक्रीतः कृतश्रमः ॥ १७

अहोवीर्यस्तथा [2]काव्यः कण्वो मेधातिथिः कुशः ।
[3]स्मृतपालश्च निर्वाकश् शून्यपालश्श्रुतश्रवाः ॥ १८

एवं धर्मास्सुविद्वांसस् ततस्ते स्वर्गमाप्नुवन् ॥ १८॥

तात प्रत्यक्ष[4]धर्माणस् तथा यायावरा गणाः ।
ऋषीणामुग्रतपसां धर्मनैपुणदर्शिनाम् ॥ १९॥

अवाच्या अपरिमेयाश्च ब्राह्मणा वनमाश्रिताः ।
वैखानसा वालखिल्याः [5]विदिताश्च तथा परे ॥ २०॥

---

1. ख—महात्मनाम्
2. ख—कण्वस्ताण्ड्यो मेधातिथिर्वसुः
   ग—काव्यस्ताण्ड्यो मेधातिथिस्स्मृतः
3. ख—चक्रोपकस्सुनिर्वाकः शून्यपालः कृतश्रमः ।
   घ—वह्नोवाकश्च निर्वाकः शून्यपालः प्रतिश्रवाः ।
   ग—चलोवाकश्च निर्वाकः
4. क-ग-घ—कर्माणस्
5. ख-ग-घ—सिकताश्च

कर्मभिस्ते निरानन्दा धर्मनित्या जितेन्द्रियाः ।
गताः प्रत्यक्षधर्माणस् ते सर्वे वनमाश्रिताः ॥ २१॥

अनक्षत्रास्त्वनाधृष्या दृश्यन्ते ज्योतिषां गणाः ॥ २२

[1]जरसा तु परिद्यूनो व्याधिना परिपीडितः ।
चतुर्थे त्वायुषश्शेषे वानप्रस्थाश्रमं त्यजेत् ॥ २३

साद्यस्कां संनिरुप्येष्टिं सर्ववेदसदक्षिणाम् ।
आत्मयाजी सो त्मरतिर् आत्मक्रीडो त्मसंश्रयः ॥ २४

आत्मन्यग्नीन् समारोप्य त्यक्त्वा सर्वपरिग्रहान् ।
साद्यस्कांश्च यजेद्यज्ञान् इष्टीश्चैवेह सर्वशः ॥ २५

[2]सदेव याजिनां यज्ञस् तथैवात्मनि वर्तते ॥ २५॥

त्रींश्चैवाग्नींस्त्यजेत् सम्यग् आत्मन्येवात्ममोक्षणात् ।
प्राणेभ्यो यजुषां पञ्च षट् चाश्नीयादकुत्सयन् ॥ २६॥

केशरोमनखान् वाप्य वानप्रस्थो मुनिस्तदा ।
आश्रमादाश्रमं सद्यः पूतो गच्छति कर्मभिः ॥ २७॥

अभयं सर्वभूतेभ्यो दत्त्वा यः प्रव्रजेत् पुनः ।
लोकास्तेजोमयास्तस्य प्रेत्य चानन्त्यमश्नुते ॥ २८॥

---

1. ख—जरयाऽपि परीताङ्गा × ताः ग—जरया तु घ—जरयाऽपि
2. ख—सदैव याजिनां यज्ञादात्मनीत्या प्रवर्तते ।

सुनीतवृत्तो व्यपनीतकल्मषो
न चेह नामुत्र च कर्म हीयते ।
अरोषमोहो गतसन्धिविग्रहो
भवेदुदासीनवदात्मविन्नरः ॥ २९॥

यमेषु चैवात्मगतेषु न व्यथेत्
स्वशास्त्रसूत्राहुतिमन्त्र[1]वित् क्रमात् ।
भवेदथेष्टा गतिरात्मयाजिनो
न संशयो धर्मपरे जितेन्द्रिये ॥ ३०॥

अतः परं श्रेष्ठमतीव सद्गुणैर्
अधिष्ठितं [2]त्रीनधिवृत्तमाश्रमान् ।
चतुर्थमुक्तं परमाश्रमं शृणु
प्रकीर्त्यमानं परमं परायणम् ॥ ३१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥
[ अस्मिन्नध्याये ३१॥ श्लोकाः ]

---

1. ख-ग—विक्रमैः; घ—विक्रमः
2. ख—जगति तीव्रमुत्तमम्

## ॥ त्रिंशदधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति तुरीयाश्रमधर्मप्रतिपादकव्यासवचनानुवादः॥

शुकः—

वर्तमानस्तथैवात्र वानप्रस्थाश्रमे यथा ।
योक्तव्यो त्मा कथं शक्त्या परं वै काङ्क्षता पदम् ॥ १

व्यासः—

प्राप्य संस्कारमेताभ्याम् आश्रमाभ्यां ततः परम् ।
यत् कार्यं [1]परमार्थं च तदिहैकमनाश्शृणु ॥ २

कषायं पाचयित्वा च श्रेणिस्थानेषु[2] च त्रिषु ।
प्रव्रजेच्च परं स्थानं परिव्रज्यामनुत्तमाम् ॥ ३

तद्भवानेवमभ्यस्य वर्ततां श्रूयतां तथा ।
एक एव चरेद्धर्मं सिद्ध्यर्थमसहायवान् ॥ ४

एकश्चरति यः पश्यन् न जहाति न हीयते ।
निरग्निरनिकेतस्स्याद् ग्राममन्नार्थमाश्रयेत् ॥ ५

अश्वस्तननिधानस्स्यान्मुनिभावसमन्वितः ।
लघ्वाशी नियताहारस् सकृदन्नं निषेवते ॥ ६

कपालं वृक्षमूलानि कुचेलमसहायता ।

1. ख-ग—परमार्थार्थं 2. घ—सन्धिषु

उपेक्षा सर्वभूतानाम् एतावद्भिक्षुलक्षणम् ॥ ७

यस्मिन् वाचः प्रणश्यन्ति कूपे प्रास्ताश्शिला इव ।
[1]न वक्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत् ॥ ८

नैव पश्येन्न शृणुयान्न वाच्यं जातु कस्यचित् ।
ब्राह्मणानविशेषेण नैव ब्रूयात् कथञ्चन ॥ ९

यद्ब्राह्मणस्य कुशलं तदेव सततं वदेत् ।
तूष्णीमासीत निन्दायां कुर्वन् भेषजमात्मनः ॥ १०

येन पूर्णमिवाकाशं भवत्येकेन सर्वदा ।
शून्यं येन जनाकीर्णं तं देवा ब्राह्मणं विदुः ॥ ११

[2]येन केनचिदाच्छन्नो [3]येन केनचिदाशितः ।
यत्र क्वचन शायी च तं देवा ब्राह्मणं विदुः ॥ १२

अहेरिव गणाद्भीतस् [4]सन्मानान्मरणादिव ।
कुणपादिव च स्त्रीभ्यस् तं देवा ब्राह्मणं विदुः ॥ १३

न कुप्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः ।
सर्वभूतेष्वभयदस् तं देवा ब्राह्मणं विदुः ॥ १४

---

1. क—नवद्वारं पुनर्याति; अ—नवद्वारं पुरं याति
   घ—नवद्वारं पुरं हन्ति
2. ग—इदमर्धं नास्ति
3. अ—नास्त्ययं पादः; घ—यस्य कस्य चिदाशितः
4. क—सौहित्यान्नरकादिव

नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत [1]निर्वेशं भृतको यथा ॥ १५

अनभ्याहतचित्तस्स्याद् अनभ्याहतवाक् तथा ।
निर्मुक्तस्सर्वपापेभ्यो निरमित्रोऽकुतोभयः ॥ १६

[2]अभयं सर्वभूतेभ्यो भूतानामभयं यतः ।
तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन ॥ १७

यथा नागपदेऽन्यानि पदानि पदगामिनाम् ।
सर्वाण्येवापिधीयन्ते पदजातानि कौञ्जरे ॥ १८

एवं सर्वमहिंसायां धर्मार्थमपिधीयते ।
मृतस्स नित्यं भवति यो हिंसां प्रतिपद्यते ॥ १९

अहिंसक[3]स्स्यान्मतिमान् धृतिमान् नियतेन्द्रियः ।
शरण्यस्सर्वभूतानां गतिमाप्नोत्यनुत्तमाम् ॥ २०

एवं प्रज्ञानतृप्तस्य निर्भयस्य मनीषिणः ।
न मृत्यु[4]रधिको भावात् स मुक्तिमधिगच्छति ॥ २१

---

1. ख—निर्देशं 2. घ—नास्तीदमर्थम्
3. ख—स्समस्सत्यो; ग—समस्तस्य
4. क—न मृत्युरधिरोहाय स मृत्युमधि+ति
ख—रधिको+स मुक्तिमधिगच्छति
ग—रधिको+स मृत्युरधिगच्छति
घ—रधिको+ स मृत्युमधिगच्छति

विमुक्तं सर्वसङ्गेभ्यो मुनिमाकाशवत् स्थितम् ।
आकाशशरणं शान्तं तं देवा ब्राह्मणं विदुः ॥ २२

जीवितं यस्य धर्मार्थं धर्मो ज्ञानार्थमेव च ।
अहोरात्रं च पुण्यार्थं तं देवा ब्राह्मणं विदुः ॥ २३

निराशिषमनारम्भं निर्नमस्कार[1]मस्तुतिम् ।
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥ २४

सर्वाणि भूतानि सुखे रमन्ते
सर्वाणि दुःखस्य भृशं त्रसन्ति ।
तेषां भयोत्पादनजातखेदः
कुर्यान्न कर्माणि हि श्रद्दधानः ॥ २५

दानं हि भूताभयदक्षिणायाः
दानानि सर्वाण्यधितिष्ठतीह ।
[2]तृष्णां तनुं यः प्रथमां जहाति
सोऽनन्तमाप्नोत्यभयं प्रजाभ्यः ॥ २६

[3]स दत्तमास्येन हविर्जुहोति
लोकस्य नाभिर्जगतः प्रतिष्ठा ।
तस्याङ्गमङ्गानि कृताकृतं च
वैश्वानरस्सर्वमेव प्रपेदे ॥ २७

1. घ—मास्तिकम्    2. ख-ग-घ—तीक्ष्णां
3. ख—उत्तानमास्येन

प्रादेशमात्रे हि हृदि स्थितं यत्
तस्मिन् प्राणानात्मयाजी जुहोति ।
तस्याग्निहोत्रं हुतमात्मसंस्थं
सर्वेषु लोकेषु सदैवतेषु ॥ २८

देवं त्रिधातुं त्रिवृतं सुपर्णं
ये विद्युरग्र्यां परमार्थतां च ।
ते सर्वलोकेषु महीयमाना
देवास्समर्था अमृतं [1]वहन्ति ॥ २९

वेदांश्च [2]वेद्यं च विधिं च कृत्स्नं
मिथो निरुक्तं परमार्थतां च ।
सर्वं शरीरात्मनि यः प्रपेदे
तस्य स्म देवास्स्पृहयन्ति नित्यम् ॥ ३०

भूमावसक्तं दिवि चाप्रमेयं
हिरण्मयं चाण्डजमण्डमध्ये ।
पतत्रिणं पक्षिणमन्तरिक्षे
यो वेद भोग्यात्मनि दीप्तरश्मिम् ॥ ३१

---

1. ख—व्रजन्ति ; ग—भुजन्ते ; घ—भजन्ते
2. ख—विद्यां च

आवर्तमानमजरं विवर्तनं
षण्णेमिनं द्वादशारं सुपर्व ।
यस्येदमास्ये परियाति विश्वं
तत् कालचक्रं निहितं गुहायाम् ॥ ३२

[1]यस्सम्प्रजानञ्जगतश्शरीरं
सर्वान् स लोकानधिगच्छतीह ।
तस्मिन् हुतं तर्पयतीह देवांस्
ते वै तृप्तास्तर्पयन्त्यास्यमस्य ॥ ३३

तेजोमयो नित्यतनुः पुराणो
लोकाननन्तानभयानुपैति ।
भूतानि यस्मान्न त्रसन्ते कदाचित्
[2]स भूतेभ्यो न त्रसते कदाचित् ॥ ३४

अगर्हणीयो न च गर्हतेऽन्यान्
स वै विप्रः परमात्मान[3]मिच्छेत् ।
विनीतमोहो ह्यपनीतकल्मषो
न चेह नामुत्र च [4]सोऽर्थमिच्छति ॥ ३५

1. ख—यस्य प्रसादात्    2. ख—नास्त्ययं पादः
3. ख—मीक्षेत्;    ग—मृच्छेत्
4. ग—लोभमृच्छति

अरोषणो यस्समलोष्टकाञ्चनः
प्रहीणशोको गतसन्धिविग्रहः ।
अपेतनिन्दास्तुतिरप्रियाप्रियश्
चरेदुदासीनवदेव भिक्षुकः ॥ ३६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥
[अस्मिन्नध्याये ३६ श्लोकाः]

---

## ॥ एकत्रिंशदधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति कठवल्ल्यर्थप्रतिपादकव्यासवाक्यानुवादः ॥

---

व्यासः—

प्रकृतेस्तु विकारा ये क्षेत्रज्ञस्तैः परिश्रितः ।
ते चैनं न प्रजानन्ति स विजानाति तानिह ॥ १

तैश्चैवं कुरुते कार्यं मनष्षष्ठैरिहेन्द्रियैः ।
सुदान्तैरिव संयन्ता दृढैः परमवाजिभिः ॥ २

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर् बुद्धेरात्मा महान् परः ॥ ३

महतः परमव्यक्तम् अव्यक्तात् पुरुषः परः ।

पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥ ४

एवं सर्वेषु भूतेषु गूढो त्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया तत्त्वदर्शिभिः ॥ ५

अन्तरात्मनि संलीय मनष्षष्ठानि मेधया ।
इन्द्रियाणीन्द्रियार्थांश्च बहुचिन्त्यमचिन्तयन् ॥ ६

ध्यानोपरमणं कृत्वा विद्यासम्पादितं मनः ।
अनिश्वरन् प्रशान्तात्मा तद्दृच्छत्यमृतं परम् ॥ ७

इन्द्रियाणां तु सर्वेषां वश्यात्मा चलितस्मृतिः ।
आत्मनस्सम्प्रदानेन मर्त्यो मृत्युमुपाश्नुते ॥ ८

[1]हित्वा तु सर्वसङ्कल्पान् सत्त्वे चित्तं निवेशयेत् ।
सत्त्वे चित्तं समावेश्य ततः [2]काले ज्वरो भवेत् ॥ ९

चित्तप्रसादेन यतिर् जहाति हि शुभाशुभम् ।
प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमानन्त्यमश्नुते ॥ १०

लक्षणं तु प्रसादस्य यथा तृप्तस्सुखं स्वपेत् ।
निवाते वा यथा दीपो दीप्यमानो न कम्पते ॥ ११

एवं पूर्वापरे रात्रौ युञ्जन्नात्मानमात्मना ।
लघ्वाहारो विशुद्धात्मा पश्यत्यात्मानमात्मनि ॥ १२

---

1. ख—आहृत्य
2. ग—कालकरो; ख-घ—कालञरो

रहस्यं सर्ववेदानाम् अनैतिह्यमनागतम् ।
आत्मप्रत्ययिकं शास्त्रम् इदं पुत्रानुशासनम् ॥ १३

धर्माख्यानेषु सर्वेषु चित्राख्यानेषु यद्वसु ।
[1]दशेदं ऋक्सहस्राणि निर्मथ्यामृतमुद्धृतम् ॥ १४

नवनीतं यथा दध्नः काष्ठादग्निर्यथैव ह ।
तथैव विदुषां ज्ञानं पुत्रहेतोस्समुद्धृतम् ॥ १५

स्नातकानामिदं शास्त्रं वाच्यं पुत्रानुशासनम् ।
तदिदं नाप्रशान्ताय नादान्तायातपस्विने ॥ १६

नावेदविदुषे वाच्यं तथा नानुगताय च ।
नासूयकायानृजवे न चानिर्दिष्टकारिणे ॥ १७

न तर्कशास्त्रदग्धाय तथैव पिशुनाय च ॥ १७॥

श्लाघिने श्लाघनीयाय प्रशान्ताय तपस्विने ।
इदं प्रियाय शिष्याय पुत्रायानुगताय च ॥ १८॥

रहस्यधर्मं वक्तव्यं नान्यस्मै तु [2]कथञ्चन ॥ १९

यद्यप्यस्य महीं दद्याद् रत्नपूर्णामिमां नरः ।
इदमेव ततश्श्रेय इति मन्येत तत्त्ववित् ॥ २०

अतो गुह्यतरार्थं यद् अध्यात्ममतिमानुषम् ।
यत्तन्महर्षिभिर्दृष्टं वेदान्तेषु च गीयते ॥ २१

---

1. घ—दर्शनानां सहस्राणि 2. घ—कदाचन

तत्तेऽहं वर्तयिष्यामि यदि मां परिपृच्छसि ॥ २१॥

यच्च ते मनसि वर्तते परं
यत्र चास्ति तव संशयः क्वचित् ।
श्रूयतामयमहं तवाग्रतः
पुत्र किं हि कथयामि ते परम् ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥
[ अस्मिन्नध्याये २२॥ श्लोकाः ]

## ॥ द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति अध्यात्मविषयकव्यासवाक्यानुवादः ॥

शुकः—

अध्यात्मं विस्तरेणेह पुनरेव वदस्व मे ।
यदध्यात्मं यथा वेद [1]भगवन्नृषिसत्तम ॥ १

व्यासः—

अध्यात्मं यदिदं तात पुरुषस्येह विद्यते ।
तत्तेऽहं सम्प्रवक्ष्यामि तस्य व्याख्यामिमां शृणु ॥ २
भूमिरापस्तथा ज्योतिर् वायुराकाशमेव च ।

1. ग—भगवान् ऋषिसत्तमः

महाभूतानि पञ्चैव सागरस्योर्मयो यथा ॥ ३

प्रसार्येह यथाऽङ्गानि कूर्मस्संहरते पुनः ।
तद्वन्महान्ति भूतानि यवीयस्सु विकुर्वते ॥ ४

इति तन्मयमेवेदं सर्वं स्थावरजङ्गमम् ।
सर्गे च प्रलये चैव तस्मान्निर्दिश्यते तथा ॥ ५

महाभूतानि पञ्चैव सर्वभूतेषु भूतकृत् ।
अकरोत्तेषु वैषम्यं योऽस्मिन् यदनुपश्यति ॥ ६

शुकः—

अकरोद्यच्छरीरेषु कथं तदुपलक्षये ।
[1]इन्द्रियाणि गुणाः केचित् कथं तानुपलक्षये ॥ ७

व्यासः—

एतत् ते वर्तयिष्यामि [2]यथावदनुपूर्वशः ।
शृणु तत्त्वमिहैकाग्रो यथा तत्त्वं यथा च तत् ॥ ८

शब्दश्श्रोत्रं तथा खानि त्रयमाकाशसम्भवम् ।
प्राणश्चेष्टा तथा स्पर्श एते वायुगुणास्त्रयः ॥ ९

रूपं चक्षुर्विपाकश्च त्रिधा ज्योतिर्विधीयते ।
रसोऽथ रसनं स्नेहो गुणास्त्वेते त्रयोऽम्भसाम् ॥ १०

घ्रेयं घ्राणं शरीरं च भूमेरेते गुणास्त्रयः ।

---

1. ख—नासीदमधर्मम्
2. क-ग-घ—यथावदिह दर्शनम्

[1]श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी ॥ ११
एतावानिन्द्रियग्रामो व्याख्यातः पाञ्चभौतिकः ॥ ११॥
वायोस्स्पर्शो रसोऽद्भ्यश्च ज्योतिषो रूपमुच्यते ।
आकाशप्रभवश्शब्दो गन्धो भूमिगुणस्स्मृतः ॥ १२॥
मनो बुद्धिस्स्वभावश्च त्रय एते त्मयोनिजाः ।
न गुणानतिवर्तन्ते गुणेभ्यः परमा गतिः ॥ १३॥
इन्द्रियाणि तथा पञ्च षष्ठं तु मन उच्यते ।
सप्तमीं बुद्धिमेवाहुः क्षेत्रज्ञः पुनरष्टमः ॥ १४॥
चक्षुरालोकनायैव संशयं कुरुते मनः ।
बुद्धिरध्यवसानाय साक्षी क्षेत्रज्ञ उच्यते ॥ १५॥
रजस्तमश्च सत्त्वं च त्रय एते त्वयोनिजाः ।
समास्सर्वेषु भूतेषु तद्गुणेपूपलक्षयेत् ॥ १६॥
यथा कूर्म इवाङ्गानि प्रसार्य विनियच्छति ।
एवमेवेन्द्रियग्रामं बुद्धिस्सृष्ट्वा नियच्छति ॥ १७॥
यदूर्ध्वं पादतलयोर् अवाङ्मूर्ध्नश्च पश्यति ।
एतस्मिन्नेव कृत्ये च वर्तते बुद्धिरुत्तमा ॥ १८॥
गुणान् निनीयते बुद्धिस् सुदृढैवेन्द्रियाणि च ।
मनष्षष्ठानीन्द्रियाणि बुद्ध्यभावे कुतो गुणाः ॥ १९॥
तत्र यत् प्रीतिसंयुक्तं किञ्चिदात्मनि लक्षयेत् ।

---

1. ख—नास्तीदमर्धम्

प्रशान्तमिव संशुद्धं सत्त्वं तदुपधारयेत् ॥ २०॥

[1]यत् तु सन्तापसंयुक्तम् [2]अप्रीतिकरमात्मनः ।
[3]रजः प्रवर्तकं तत् स्यात् सततं हारि देहिनाम् ॥ २१॥

यत् तु सम्मोहसंयुक्तम् अव्यक्तविषयं भवेत् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ २२॥

प्रहर्षः प्रीतिरानन्दस् [4]साम्यं स्वस्थात्मचित्तता ।
अकस्माद्यदि वा कस्माद् वर्तते सात्त्विको गुणः ॥ २३॥

[5]अतिमानो मृषावादो मोहो लोभस्तथाऽक्षमा ।
लिङ्गानि रजसस्तानि वर्तन्ते हेत्वहेतुतः ॥ २४॥

तथा मोहः प्रमादश्च तन्द्री निद्राऽप्रबोधिता ।
कथञ्चिदभिवर्तन्ते विज्ञेयास्तामसा गुणाः ॥ २५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥
[ अस्मिन्नध्याये २५॥ श्लोकाः ]

---

1. घ—अर्धचतुष्टयं नास्ति
2. ख—काये मनसि वा भवेत्
3. ख—अप्रतर्क्यमविज्ञेयं रजस्तदुपधारयेत् । [ अधिकः पाठः ]
   ग—रजः प्रवर्तते तस्मात् सततं हारि देहिनाम् । [ पाठान्तरम् ]
4. ख—सौम्यं ; ग—साम्यं
5. ख—अतिवादो

## ॥ त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ज्ञानादिसाधनप्रतिपादकव्यासवाक्यानुवादः ॥

व्यासः—

मनः प्रसृजते भावं बुद्धिरध्यवसायिनी ।
हृदयं प्रियाप्रिये वेद त्रिविधा कर्मवेदना ॥ १

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
[1]मनसस्तु परा बुद्धिर् बुद्धेरात्मा [2]परो मतः ॥ २

बुद्धिरात्मा मनुष्यस्य बुद्धिरे[3]वमनात्मनि ।
यदा विकुरुते भावं तदा भवति सा मनः ॥ ३

इन्द्रियाणां पृथग्भावाद् बुद्धिर्विक्रियतेऽसकृत् ।
शृण्वती भवति श्रोत्रं स्पृशती स्पर्श उच्यते ॥ ४

पश्यन्ती भवते दृष्टी रसन्ती रसनं भवेत् ।
जिघ्रती भवति घ्राणं बुद्धिर्विक्रियते पृथक् ॥ ५

इन्द्रियाणीति यान्याहुस् तेष्वदृश्याऽधितिष्ठति ।
तिष्ठती पुरुषे बुद्धिस् त्रिषु भावेषु वर्तते ॥ ६

1. ख—नास्तीदमर्धम् 2. घ—महान् परः
3. ख—वात्मनो स्मनि

कदाचिल्लभते प्रीतिं कदाचिदपि शोचति ।
न सुखेन न दुःखेन कदाचिदिह युज्यते ॥ ७

[1]एवं भावात्मिका भावांस् त्रीनेताननुवर्तते ।
सरितां सागरो भर्ता वेलामिव महोर्मिमान् ॥ ८

यदा प्रार्थयते किञ्चित् तदा भवति सा मनः ।
अधिष्ठानानि वै बुद्धेः पृथगेतानि संस्मरेत् ॥ ९

इन्द्रियाण्येवमेतानि विजेतव्यानि कृत्स्नशः ।
सर्वाण्येवानुपूर्व्येण यद्यन्नानुविधीयते ॥ १०

[2]साऽविभागगता बुद्धिर् भावे तमसि वर्तते ।
प्रवर्तमानं तु [3]रजस् सत्त्वमप्यनुवर्तते ॥ ११

ये चैव भावा वर्तन्ते सर्वे एष्वेव ते त्रिषु ।
[4]अन्वर्थास्सम्प्रवर्तन्ते रथनेमिमरा इव ॥ १२

प्रदीपार्थे नरः कुर्याद् इन्द्रियैर्बुद्धिसत्तमैः ।
निश्चरद्भिर्यथायोगम् उदासीनो यदृच्छया ॥ १३

एवंस्वभावमेवेदम् इति विद्वान् न मुह्यति ।
अशोचन्नप्रहृष्यंश्च नित्यं विगतमत्सरः ॥ १४

न ह्यात्मा शक्यते द्रष्टुम् इन्द्रियैः कामगोचरैः ।

---

1. ख-ग—सेयं 2. ख-ग—अविभाग×मनसि वर्तते
3. अ-क-घ—मनस् 4. घ—ये चैनमनुवर्तन्ते

प्रवर्तमानैरनयैर् दुर्धर्षैरकृतात्मभिः ॥ १५

तेषां तु मनसा रश्मीन् यदा सम्यङ्नियच्छति ।
तदा प्रकाशते ह्यात्मा दीपो दीप्यन् निराकृतिः ॥ १६

सर्वेषामेव भूतानां तमस्युपरते यथा ।
[1]प्रकाशं भवते सर्वं तथेदमुपधार्यताम् ॥ १७

यथा वारिचरः पक्षी न लिप्यति जले चरन् ।
एवमेव कृतप्रज्ञो न दोषैर्विषयांश्चरन् ॥ १८
असज्जमानस्सर्वेषु न [2]कथञ्चन लिप्यते ॥ १८॥

त्यक्त्वा पूर्वकृतं कर्म रतिर्यस्य परात्मनि ।
सर्वभूतात्मभूतस्स गुणसर्गे न सज्जते ॥ १९॥

सत्त्वमात्मा प्रसृजति गुणानपि कदाचन ।
न गुणा विदुरात्मानं गुणान् वेद स सर्वदा ॥ २०॥

परिद्रष्टा गुणानां स स्रष्टा चैव यथा भवेत् ।
[3]क्षेत्रक्षेत्रज्ञयोरेवम् अन्तरं विद्धि सूक्ष्मयोः ॥ २१॥

सृजतेऽत्र गुणानेक एको न सृजते गुणान् ।
पृथग्भूतौ प्रकृत्या तौ सम्प्रयुक्तौ च सर्वदा ॥ २२॥

---

1. क-ख-ग-घ—नास्तीदमर्धम्
2. घ—कदाचन
3. ख—सत्त्वक्षेत्रयोरेतदन्तरं

यथा मत्स्योऽद्भिरन्यस्सन् सम्प्रयुक्तस्तथैव तौ ।
मशकोदुम्बरौ वाऽपि सम्प्रयुक्तौ तथैव हि ॥ २३॥

इषीका वा यथा मुञ्जे पृथक् च सह चैव ह ।
तथैव सहितावेतावन्योन्यस्मिन् प्रतिष्ठितौ ॥ २४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥
[अस्मिन्नध्याये २४॥ श्लोकाः]

## ॥ चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति ज्ञानादिप्रशंसापरव्यासवाक्यानुवादः ॥

व्यासः—

सृजते त्रिगुणान् सत्त्वं क्षेत्रज्ञस्त्वनुतिष्ठति ।
गुणान् विक्रियतस्सर्वान् उदासीनवदीश्वरः ॥ १

स्वभावयुक्तं तत् सत्त्वं यदिमान् सृजते गुणान् ।
ऊर्णनाभिर्यथा सत्त्वं सृजते तन्तुवद्गुणान् ॥ २

प्रध्वस्ता न निवर्तन्ते निवृत्तिर्नोपलभ्यते ।
एवमेके व्यवस्यन्ति निवृत्तिरिति चापरे ॥ ३

उभयं सम्प्रधार्यैतद् अध्यवस्येद्यथामति ॥ ३॥

इतीमं हृदयग्रन्थिं बुद्धिचिन्तामयं दृढम् ।

अतीत्य सुखमासीत न शोचंश्छिन्नसंशयः ॥ ४॥

अनेनैव विधानेन भवेद्गर्भशयो महान् ।

अनादिनिधनं नित्यं आसाद्य विचरेन्नरः ॥ ५॥

[1]न क्रुध्यन् न प्रहृष्यंश्च नित्यं विगतमत्सरः ॥ ६

[2]ताम्येयुः प्रच्युताः पृथ्व्यां यथा पूर्णां नदीं नराः ।

अवगाढा ह्यविद्वांसो विद्धि लोकमिमं तथा ॥ ७

न तु ताम्यति वै विद्वान् स्थले चरति तत्त्ववित् ।

एवं यो विन्दते त्मानं केवलं ज्ञानमास्थितः ॥ ८

एवं बुद्ध्वा नरस्सर्वो भूतानामागतिं गतिम् ।

---

1. च—नास्तीदमर्धम्

2. इतोऽध्यायसमाप्तिपर्यन्तश्लोकाः-च-कोशे न सन्ति-अधिकः पाठस्तु दृश्यते—

च—जययुक्तो रथो दिव्यो ब्रह्मलोके महीयते ।
अथ सत्वरमासाद्य रथमेवं युयुक्षतः ॥
अक्षरं गन्तुमनसो विधिं वक्ष्यामि शीघ्रगम् ।
सप्तयोधायनं कृत्वा वाम्यतः प्रतिपद्यते ॥
पृष्ठतः पार्श्वतश्चान्या धावन्त्यास्थाः प्रसारणात् ।
क्रमशः पार्थिवं यच्च वायव्यं खं तथा पयः ॥
ज्योतिषो यत्तदैश्वर्यं अहङ्कारस्य बुद्धितः ।
अव्यक्तस्य यदैश्वर्यं क्रमशः प्रतिपद्यते ॥
व्यक्तमाश्चापि यस्यैते तथा युक्तेन योगतः ।
तथास्थं भवयुक्तस्य विधिमात्मनि पश्यतः ॥

पूर्वतोऽनुवृत्तम्—

निर्मथ्यमानं सूक्ष्मात्मा रूपाणीमानिदर्शयेत् ।
शैशिरस्तु यथा धूमस् सूक्ष्मं संश्रयते नभः ॥
तथा देहाद्विमुक्तस्य पूर्वरूपं तदच्युत ।
अथ धूमस्य विरमे द्वितीयं रूपदर्शनम् ॥
जलरूपमिवाकाशं तत्रैवात्मनि पश्यति ।
अपरं व्यतिक्रमेच्चापि वह्निरूपं प्रकाशते ॥
तस्मिन्नुपरते वाऽस्य वायव्यं सूक्ष्ममस्त्यथ ।
रूपं प्रकाशते तत्र पीतवर्णवदच्यजः ॥
तस्मिन्नुपरते रूपम् आकाशस्य प्रकाशते ।
ऊष्मा सवर्णरूपं तत् तस्य रूपं प्रकाशते ॥
तस्मिन्नुपरते वाऽस्य बुद्धिरूपं प्रकाशते ।
सुशुक्लं चेतसस्सम्यक् अव्यक्तं ब्राह्मणस्य वै ॥
एतेष्वपीह जातेषु फलजातानि मे शृणु ।
जातस्य पार्थिवैश्वर्यैस् सृष्टिरेषा विधीयते ॥
प्रजापतिरिवाक्षोभ्यश् शरीरात् सृजति प्रजाः ।
वर्णतो गृह्यते वाऽप्सु नायं पिबति चाशयाः ॥
स्ना चास्य तेजसा रूपं दह्यते शाम्यते तथा ।
अङ्गुल्याऽङ्गुष्ठमात्रेण वस्त्रपादेनवत् तथा ॥
पृथिवीं कम्पयन्त्येते गुणापायादिति स्मृतः ।
आकाशभूतश्चाकाशे स्वर्णत्वान्न च दृश्यते ॥
अहङ्कारस्य विजये पञ्च ते स्युर्वशानुगाः ।
षण्णामात्मनि बद्धौ तु नितायं प्रभवत्युत ॥
निर्दोषप्रभवा ह्येषा कृत्स्ना समभिवर्तते ।
तथैव व्यक्तमात्मानं अव्यक्तं प्रतिपद्यते ॥
यतो निस्सरतो लोको भवति व्यक्तसंज्ञकः ।
तत्रासन्नमयीं व्याख्यां शृणु त्वं विस्तरेण वै ॥

समवेक्ष्य शनैस्सम्यग् लभते गतिमुत्तमाम् ॥ ९

एतद्वै जन्मसामग्र्यं ब्राह्मणस्य विशेषतः ।
आत्मज्ञानं शमश्चैव पर्याप्तं तत् परायणम् ॥ १०

---

पूर्वतोऽनुवृत्तम्—

तथा व्यक्तमयीं चैव व्याख्यां पूर्वं निबोध मे ।
पञ्चविंशतितत्त्वानि तुल्यान्युभयतस्समम् ॥
योगे साङ्ख्येऽपि च तथा विशेषांस्तत्र मे शृणु ।
प्रोक्तं तद्व्यर्थमित्येव जायते वर्तते च यत् ॥
जीवते म्रियते चैव चतुर्भिर्लक्षणैर्युधि ।
विपरीतमतो यत्तु तदव्यक्तमुदाहृतम् ॥
पापात्मानौ च देवेषु सिद्धान्तेष्वप्युदाहृतौ ।
चतुर्लक्षणजन्तुर्यश्च् चतुर्वर्गः प्रचक्षते ॥
व्यक्तमव्यक्तजं चैव तथा बुद्धिरथेतरत् ।
सत्त्वं क्षेत्रज्ञ इत्येतद् द्वयमव्यक्तदर्शनम् ॥
द्वावात्मानौ च देवेषु विषयेषु च राजतः ।
विषयान् प्रतिसंहारस् सालोकं सिद्धिलक्षणम् ॥
निर्ममश्चानहङ्कारो निर्द्वन्द्वश्छिन्नसंशयः ।
नैव क्रुध्यति न द्वेष्टि नात्मता भवते गिरः ॥
आक्रुष्टस्ता सिद्धितश्चापि मैत्रं ध्यायति नाशुभम् ।
वाङ्मनःकायदण्डानां त्रयाणां च निवर्तकम् ॥
समस्सर्वेषु भूतेषु ब्रह्माणमतिवर्तते ।
नैवेच्छति न चानिच्छन् मात्रामात्रव्यवस्थितः ॥
अलोलुपोऽप्यथो दान्तो नाकृतिर्न निराकृतिः ।
नास्येन्द्रियमनःप्राणबुद्धयस्सर्वसाक्षिणः ॥ [अधिकः पाठः]

इति शान्तिपर्वणि मोक्षधर्मे पञ्चसप्ततितमोऽध्यायः ॥

एवं बुद्ध्वा भवेद्बुद्धः [1]किमन्यद्बुद्धलक्षणम् ।
विज्ञायैतद्विमुच्यन्ते कृतकृत्या मनीषिणः ॥ ११

न भवति विदुषां महद्भयं
यदविदुषां सुमहद्भयं परत्र ।
न हि गतिरधिकाऽस्ति कस्यचिद्
भवति हि या विदुषां सनातनी ॥[2] १२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षडशीतितितमोऽध्यायः ॥ ८६ ॥
[अस्मिन्नध्याये १२ श्लोकाः]

---

1. ग—अयं पादो नास्ति

2. ख-ग—लोकमातुरमसूयते जनस्
तत्तदेव च निरीक्ष्य शोचते ।
तत्र पश्य कुशलानशोचतो
ये विदुस्तदुभयं कृताकृतम् ॥
यः करोत्यनभिसन्धिपूर्वकं
तच्च निर्णुदति यत् पुरा कृतम् ।
नाप्रियं तदुभयं कुतः प्रियं
तस्य तज्जनयतीह कुर्वतः ॥ [अधिकः पाठः]

## ॥ पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ज्ञानोपायादिप्रतिपादकव्यासवाक्यानुवादः ॥

शुकः—

यस्माद्धर्मात् परो धर्मो विद्यते नेह कश्चन ।
यो विशिष्टश्च धर्मेभ्यस् तं भवान् [1]प्रब्रवीतु मे ॥ १

व्यासः—

धर्मं ते सम्प्रवक्ष्यामि पुराणमृषिसंस्कृतम् ।
विशिष्टं सर्वधर्मेभ्यस् तमिहैकमनाश्शृणु ॥ २

[2]इन्द्रियाणि प्रमाथीनि बुद्ध्या संयच्छ यत्नतः ।
सर्वतो निष्पतिष्णूनि पिता बालानिवात्मजान् ॥ ३

मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः ।
तज्ज्यायस्सर्वधर्मेभ्यस् स धर्मः पर उच्यते ॥ ४

खानि सर्वाणि सन्धाय मनष्षष्ठानि मेधया ।
आत्मतृप्त उपासीत बहु चिन्त्यमचिन्तयन् ॥ ५

गोचरेभ्यो निवृत्तानि यदा स्थास्यन्ति वेश्मसु ।
तदा त्वमात्मनाऽऽत्मानं परं द्रक्ष्यसि शाश्वतम् ॥ ६

सर्वात्मानं महात्मानं विधूममिव पावकम् ।

---

1. ग—वक्तुमर्हति　　2. ख—अर्धचतुष्टयं नास्ति

सम्पश्यन्ति महात्मानो ब्राह्मणा ये मनीषिणः ॥ ७

यथा पुष्पफलोपेतो बहुशाखो महाद्रुमः ।
आत्मनो नाभिजानीते क्व मे पुष्पं क्व मे फलम् ॥ ८

एवमात्मा न जानीते क्व गमिष्ये कुतोन्वहम् ।
अन्यो ह्यत्रान्तरात्माऽस्ति यस्सर्वमनुपश्यति ॥ ९

ज्ञानदीपेन दीप्तेन पश्यत्यात्मानमात्मना ।
दृष्ट्वा त्वमात्मनाऽऽत्मानं निरात्मा भव सर्ववित् ॥ १०

विमुक्तस्सर्वपापेभ्यस् त्वचं त्यक्त्वा यथोरगः ।
परां बुद्धिमवाप्येह विपाप्मा विगतज्वरः ॥ ११

सर्वतःप्रभवां घोरां नदीं लोभप्रवाहिनीम् ।
पञ्चेन्द्रियग्राहवतीं मनस्सङ्कल्परोधसम् ॥ १२

लोभमोहतृणच्छन्नां कामक्रोधसरीसृपाम् ।
सत्यतीर्थानृतक्षोभां क्रोधपङ्कां सरिद्वराम् ॥ १३

अव्यक्तप्रभवां शीघ्रां दुस्तरामकृतात्मभिः ।
प्रतरस्व नदीं बुद्ध्या कामग्राहसमाकुलाम् ॥ १४

संसारसागरगमां योनिपातालदुस्तराम् ।
आत्मजन्मोद्भवां तात जिह्वावर्तां दुरासदाम् ॥ १५

यां तरन्ति कृतप्रज्ञा धृतिमन्तो मनीषिणः ॥ १५॥

तां तीर्णस्सर्वतोमुक्तः [1]पूतात्मा ह्यात्मविच्छुचिः ।
उत्तमां बुद्धिमास्थाय ब्रह्मभूयं भविष्यसि ॥ १६॥

सन्तीर्णस्सर्वसङ्क्लेशान् प्रसन्नात्मा विकल्मषः ।
भूमिष्ठानीव भूतानि पर्वतस्थो निशामयेत् ॥ १७॥

न क्रुध्यन्न प्रहृष्यंश्च अनृशंसमतिस्तथा ।
ततो द्रक्ष्यसि सर्वेषां भूतानां प्रभवाप्ययम् ॥ १८॥

एनं वै सर्वधर्मेभ्यो विशिष्टं मेनिरे बुधाः ।
धर्मं धर्मभृतां श्रेष्ठा मुनयस्तत्त्वदर्शिनः ॥ १९॥

आत्मनोऽव्ययिनो ज्ञानम् इदं पुत्रानुशासनम् ।
प्रयताय [2]प्रवक्तव्यं हितायानुगताय च ॥ २०॥

आत्मज्ञानमिदं गुह्यं सर्वगुह्यतमं महत् ।
अब्रुवं यदहं तात आत्मसाक्षिकमञ्जसा ॥ २१॥

नैव स्त्री न पुमान् वाऽपि नैव चेदं नपुंसकम् ।
अदुःखमसुखं चैव ब्रह्मभूतं भवात्मकम् ॥ २२॥

नैत[3]च्छ्रुत्वा पुमान् स्त्री वा पुनर्भवमवाप्नुयात् ।
स्वभावप्रतिपत्त्यर्थम् एतद्धर्मं विधीयते ॥ २३॥

---

1. ख—विधूतात्माऽऽत्मवित्
2. क-ग-घ—प्रदातव्यं
3. ख—ज्ञात्वा

यथा मतानि सर्वाणि न चैतानि यथा तथा ।
कथितानि मया पुत्र भवन्ति न भवन्ति च ॥ २४॥

तत् प्रीतियुक्तेन गुणान्वितेन वा
पुत्रेण सत्पुत्र मनोनुगेन ।
पृष्टो हीदं प्रीतमना यथार्थं
ब्रूयात् सुतस्येह यदुक्तमेतत् ॥ २५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥
[ अस्मिन्नध्याये २५॥ श्लोकाः ]

## ॥ षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ *

भीष्मेण युधिष्ठिरं प्रति साधनसामग्रीप्रतिपादकव्यासवाक्यानुवादः ॥

व्यासः—

गन्धान् रसान् नानुरुन्ध्येत् सुखं वा
नालङ्कारांश्चाप्नुयात् तस्य तस्य ।
मानं च कीर्तिं च यशश्च नेच्छेत्
स वै प्रचारः पश्यतो ब्राह्मणस्य ॥ १

* अयमध्यायो ख-कोशे नोपलभ्यते

सर्वान् वेदानधीयीत शुश्रूषुर्ब्रह्मचर्यवान् ।
ऋचो यजूंषि सामानि वेदवेदाङ्गपारगः ॥ २

इष्टीश्च विविधाः प्राप्य क्रतूंश्चैवाप्तदक्षिणान् ।
नैव प्राप्नोति ब्राह्मण्यम् [1]अविज्ञातं कथञ्चन ॥ ३

ज्ञाता यस्सर्वभूतानां सर्ववित् सर्वभूतकृत् ।
[2]नाकाले म्रियते जातु न देवो न च ब्राह्मणः ॥ ४

यदा चायं न बिभेति यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा ॥ ५

यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥ ६

कामबन्धनमेवेदं नान्यदस्तीह बन्धनम् ।
कामबन्धनमुक्तो हि ब्रह्मभूयाय कल्पते ॥ ७

कामतो मुच्यमानस्तु धूमाभ्रादिव चन्द्रमाः ।
विरजाः कालमाकाङ्क्षन् धीरो धैर्येण वर्तते ॥ ८

आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।

---

1. ख—अभिध्यानात्;  ग—अविज्ञाता कथञ्चन
2. ख—नाकामो म्रियते जातु न तेन न च ब्राह्मणः ।
ग—नाकामो म्रियते जातु न वेदे न च ब्राह्मणः ।  [पाठान्तरम्]

स कामकामो न तु कामकामस्
स वै लोकं स्वर्गमुपैति देही ॥ ९

वेदस्योपनिषत् सत्यं सत्यस्योपनिषद्दमः ।
दमस्योपनिषद्दानं दानस्योपनिषत् तपः ॥ १०

तपसोपनिषत्त्यागस् त्यागस्योपनिषत् सुखम् ।
सुखस्योपनिषत् स्वर्गस् स्वर्गस्योपनिषच्छमः ॥ ११

क्लेदनं शोकतमसोस् सन्तीर्णस्तृष्णया सह ।
सत्त्वमृच्छति सन्तोषाच् छान्तिलक्षणमुत्तमम् ॥ १२

[1]विशोको निर्ममश्शान्तः प्रशान्तात्माऽऽत्मविच्छुचिः ।
षड्भिर्लक्षणवानेतैस् [2]समग्रं पुनरेष्यति ॥ १३

षड्भिस्सत्त्वगुणोपेतैः प्राज्ञैरधिकमन्त्रिभिः ।
ये विदुः प्रत्यगात्मानम् इहस्थानमृतान् विदुः ॥ १४

अकृत्रिममसंहार्यं प्राकृतं निरुपस्कृतम् ।
अध्यात्मसुकृतप्रज्ञस् सुखमव्ययमश्नुते ॥ १५

निष्प्रचारं मनः कृत्वा प्रतिष्ठाप्य च सर्वतः ।
यामयं लभते तुष्टिं सा न शक्यमतोऽन्यथा ॥ १६

येन तृप्यत्यभुञ्जानो येन तृप्यत्य[3]वित्तवान् ।

1. ख—निर्मोहो    2. ख—समग्रो मुनिरिष्यते
3. ख-ग—वित्त

येनास्नेहो बलं धत्ते यस्तं वेद स वेदवित् ॥ १७

असङ्गो ह्यात्मनो द्वाराण्यपिधाय विचिन्तयन् ।
यो ह्यास्ते ब्राह्मणोऽक्लिष्टस् स आत्मरतिरुच्यते ॥ १८

समाहितं परे तत्त्वे क्षीणकाममवस्थितम् ।
सर्वतस्सुखमन्वेति वपुश्चान्द्रमसं यथा ॥ १९

सविशेषाणि भूतानि गुणांश्चाभजतो मुनेः ।
सुखेनापोह्यते दुःखं भास्करेण तमो यथा ॥ २०

तमतिक्रान्तकर्माणम् अतिक्रान्तगुणक्षयम् ।
ब्राह्मणं विषयाश्लिष्टं जरामृत्यू न विन्दतः ॥ २१

स यदा सर्वतो मुक्तस् समः पर्यवतिष्ठते ।
इन्द्रियाणीन्द्रियार्थांश्च शरीरस्थो न वर्तते ॥ २२

कारणं परमं प्राप्य अतिक्रान्तस्य कार्यताम् ।
पुनरावर्तनं नास्ति सम्प्राप्तस्य परात् परम् ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥
[अस्मिन्नध्याये २३ श्लोकाः]

---

## ॥ [1]सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति आकाशादिभूतगुणादिप्रतिपादकव्यासवाक्यानुवादः ॥

---

व्यासः—

द्वन्द्वाग्निर्मोक्षजिज्ञासुर् अर्थधर्मावनुष्ठितः ।
वक्ता गुणवता शिष्यश् श्राव्यः पूर्वमिदं महत् ॥ १

आकाशं मारुतो ज्योतिर् आपः पृथ्वी च पञ्चमी ।
भावाभावौ च कालश्च सर्वभूतेषु पञ्चसु ॥ २

---

1. इतः प्रभृति अध्यायत्रयं ख-कोशे नास्ति ।
तत्स्थाने अथमेकोऽध्यायोऽधिकतया उपलभ्यते इति ज्ञेयम् ।

ख-कोशेऽधिकः पाठः

व्यासः—

द्वन्द्वनिर्मोक्षजिज्ञासुर् अर्थधर्मावनुष्ठितः ।
वक्ता गुणवता शिष्यश् श्राव्यः पूर्वमिदं महत् ॥
वरणं मारुतात्मेति प्राणापानौ च तन्मयौ ।
स्पर्शनं चेन्द्रियं विद्यात् तथा स्पर्शं च तन्मयम् ॥
तापः पाकः प्रकाशश्च ज्योतिश्चक्षुश्च तन्मयम् ।
तस्य रूपं गुणं विश्वं प्रत्याहाराय भारत ॥

शक्रः—

यत् तद्यानसहस्रेण ज्ञातिभिः परिवारितः ।
लोकान् प्रतापयन् सर्वान् यास्यस्मानवितर्कयन् ॥

पूर्वतोऽनुवृत्तम्—

दृष्ट्वा स कृपणं त्वं मामवस्थामात्मनो बले ।
ज्ञातिमित्रपरित्यक्तश् शोचस्याहो न शोचसि ॥
प्रीतिं प्राप्यातुलां सर्वाँल्लोकांश्चात्मवशे स्थितान् ।
विनिपातमिमं चाप्यशोचत्याहो न शोचसि ॥

बलिः—

अनित्यतां च दृष्ट्वाऽहं कालपर्ययमात्मनः ।
तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत् ॥
अन्तवन्त इमे देहा भूतानाममराधिप ।
तेन शक्र न शोचामि नापराधादिदं मम ॥
जीवितं च शरीरं च जात्या वै सह जायते ।
उभे सह विवर्धेते उभे सह विनश्यतः ॥
न हीदृशमहंभावम् अवशः प्राप्य केवलम् ।
यदैवमभिजानामि का व्यथा मे विजानतः ॥
भूतानां निधनं निष्ठा स्रोतसामिव सागरः ।
नैतत् सम्यगजानन्तो नरा मुह्यन्ति वज्रभृत् ॥
ये त्वेवं नाभिजानन्ति रजोमोहपरायणाः ।
ते कृच्छ्रं प्राप्य सीदन्ति बुद्धिर्येषां प्रणश्यति ॥
बुद्धिलाभात्तु पुरुषस् सर्वं नुदति किल्बिषम् ।
विपाप्मा लभते सत्त्वं सत्त्वस्थस्सम्प्रसीदति ॥
ततस्तु ये निवर्तन्ते जायन्ते वा पुनः पुनः ।
कृपणाः परितप्यन्ते तेऽनर्थैरभिदूषिताः ॥
अर्थसिद्धिमनर्थं च जीवितं मरणं तथा ।
सुखदुःखफलं चैव न द्वेष्टि न च कामये ॥
हतं हन्ति हतो ह्येव न नरो हन्ति कञ्चन ।
उभौ तौ न विजानीतो यश्च हन्ति हतश्च यः ॥
हत्वा जित्वा च मघवन् यः कश्चित् पुरुषायते ।

पूर्वतोऽनुवृत्तम्

अकर्ता ह्येव भवति कर्ता त्वेव करोति तत् ॥
को हि लोकस्य कुरुते विनाशप्रभवावुभौ ।
कृतं योऽभिमन्येत कर्ता तस्यापि चापरः ॥
पृथिवी वायुराकाशम् आपो ज्योतिश्च पञ्चमम् ।
एतद्योनीनि भूतानि तत्र का परिदेवना ॥
महाविद्योऽल्पविद्यश्च बलवान् दुर्बलश्च यः ।
दर्शनीयो विरूपश्च सुभगो दुर्भगश्च यः ॥
सर्वं कालस्समादत्ते गम्भीरस्स्वेन तेजसा ।
तस्मात् कालवशं प्राप्ते का व्यथा मे विजानतः ॥
दग्धमेवानुदहति हतमेवानुहन्यते ।
नश्यते नष्टमेवाग्रे लब्धव्यं लभते नरः ॥
न......द्वपः कुतः पारं न परं सम्प्रदृश्यते ।
नान्तमस्य प्रपश्यामि विधेर्दिव्यस्य चिन्तयन् ॥
यदि मे पश्यतः कालो भूतानि न विनाशयेत् ।
स्यान्मे हर्षश्च दर्पश्च क्रोधश्चैव शचीपते ॥
तुषभक्षं तु मां ज्ञात्वा प्रविविक्तजने गृहे ।
बिभ्रतं गार्दभं रूपम् आगम्य परिगर्हसे ॥
इच्छन्नहं विकुर्यां हि रूपाणि बहुधाऽऽत्मनः ।
विभीषणानि येनेह पलायेथास्त्वमेव मे ॥
कालस्सर्वं समादत्ते कालस्सर्वं प्रयच्छति ।
कालेन विहितं सर्वं मा कृथाश्शक्र पौरुषम् ॥
पुरा सर्वं प्रव्यथते मयि क्रुद्धे पुरन्दर ।
अवैमि त्वस्य लोकस्य धर्मं शक्र सनातनम् ॥
त्वमप्येवमवेक्षस्व माऽऽत्मना विस्मयं गमः ।
प्रभावश्चाप्रभावश्च नात्मसंस्थः कदाचन ॥
कौमारमेव ते चित्तं तथैवाद्य यथा पुरा ।

पूर्वतोऽनुवृत्तम्

समवेक्षस्व मघवन् बुद्धिं विन्दस्व नैष्ठिकीम् ॥
देवा मनुष्याः पितरो गन्धर्वोरगराक्षसाः ।
आसन् सर्वे मम वशे तत् सर्वं वेत्थ वासव ॥
नमस्तस्मै दिशे ह्यस्तु यस्यां वैरोचनो बलिः ।
इति मामप्यमन्यन्त बुद्धिमात्सर्यमोहिताः ॥
नाहं तदनुशोचामि नात्मभ्रंशं शचीपते ।
एवं मे निश्चिता बुद्धिश्शास्तु तिष्ठाम्यहं वशे ॥
दृश्यते हि कुले जातो दर्शनीयः प्रतापवान् ।
दुःखं जीवन् सहामात्यो भवितव्यं हि तत्तथा ॥
कल्याणी रूपसम्पन्ना दुर्भगा शक्र दृश्यते ।
अलक्षणा विरूपा च सुभगा शक्र दृश्यते ॥
नैतदस्मत्कृतं शक्र नैतच्छक्र त्वया कृतम् ।
यत्त्वमेवं गतो वज्रिन् यद्वाऽप्येवं गता वयम् ॥
न कर्म तव नान्येषां कुतो मम शतक्रतो ।
ऋद्धिर्वाऽप्यथवाऽनृद्धिः पर्यायकृतमेव तत् ॥
पश्यामि त्वां विराजन्तं देवराजमवस्थितम् ।
श्रीमन्तं द्युतिमन्तं च गर्जन्तं च ममोपरि ॥
(एतच्चैव) यमर्थं बुद्धिमध्यास्ते न सोऽर्थः परिसीदति ।
परमन्त्रवियुक्ता वा सोऽर्थस्संसीदति क्रमात् ॥
यदर्थं पृथगध्यास्ते मनस्तत्परिसीदति ।
पृथग्भूतं यथा बुद्ध्या मनो भवति केवलम् ॥
तत्सनं विवृतं शून्यं रजः पर्यवतिष्ठते ।
तन्मनः कुरुते सख्यं रजसा सह संयुता ॥
तं चादाय जनं पौरं रजसे सम्प्रयच्छति ॥ [अधिकः पाठः]

इति शान्तिपर्वणि मोक्षधर्मे त्रिनवतितमोऽध्यायः

अन्तरात्मकमाकाशं तन्मयं श्रोत्रमिन्द्रियम् ।
तस्य शब्दं गुणं विद्यान्मुनिश्शास्त्रविधानवित् ॥ ३

चरणं मारुतात्मेति प्राणापानौ च तन्मयौ ।
स्पर्शनं चेन्द्रियं विद्यात् तथा स्पर्शं च तन्मयम् ॥ ४

तापः पाकः प्रकाशश्च ज्योतिश्चक्षुश्च तन्मयम् ।
तस्य रूपं गुणं विद्यात् तमोनाशकमात्मवान् ॥ ५

प्रक्लेदो द्रवता स्नेह इत्यापो ह्युपदिश्यते ।
रसनं चेन्द्रियं जिह्वा रसश्चापां गुणो मतः ॥ ६

सङ्घातः पार्थिवो धातुर् अस्थिदन्तनखानि च ।
श्मश्रु रोम च केशाश्च सिरा स्नायु च चर्म च ॥ ७

इन्द्रियं घ्राणसंज्ञानं नासिकेत्यभिशब्दितम् ।
गन्धश्चैवेन्द्रियार्थोऽयं विज्ञेयः पृथिवीमयः ॥ ८

उत्तरेषु गुणास्सन्ति सर्वे पूर्वेषु नोत्तराः ।
पञ्चानां भूतसङ्घानां सन्तर्ति मुनयो विदुः ॥ ९

मनस्तु नवमं चैषां बुद्धिस्तु दशमी स्मृता ।
एकादशस्त्वन्तरात्मा स सर्वपर उच्यते ॥ १०

व्यवसायात्मिका बुद्धिर् मनो व्याकरणात्मकम् ।
कर्मानुमानाद्विज्ञेयस् स जीवः क्षेत्रसंज्ञितः ॥ ११

एभिः कालाष्टमैर्भावैर् यस्सर्वैस्सर्वमन्वितम् ।
पश्यत्यकल्मषो बुद्ध्या स मोहं नानुवर्तते ॥　　१२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥
[ अस्मिन्नध्याये १२ श्लोकाः ]

## ॥ अष्टात्रिंशदधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति योगिप्रशंसादिपरव्यासवाक्यानुवादः ॥

व्यासः—

शरीराद्विप्रमुक्तं हि सूक्ष्मभूतं शरीरिणम् ।
कर्मभिः परिपश्यन्ति शास्त्रोक्तैः[1] शास्त्रचेतसः ॥　　१

यथा मरीच्यस्सहिताश्चरन्ति
　गच्छन्ति तिष्ठन्ति च दृश्यमानाः ।
देहैर्विमुक्ता विचरन्ति लोकांस्
　तथैव सत्त्वान्यतिमानुषाणि ॥　　२

प्रतिरूपं यथैवाप्सु तावत् सूर्यस्य लक्ष्यते ।
सत्त्ववांस्तु तथा सत्त्वं प्रतिरूपं प्रपश्यति ॥　　३

1. ग—शान्ततेजसः;　　घ—शान्तचेतसः

तानि सूक्ष्माणि सत्त्वस्था विमुक्तानि शरीरतः ।
तेन तत्त्वेन तत्त्वज्ञाः पश्यन्ति नियतेन्द्रियाः ॥ ४

स्वपतां जाग्रतां चैष सर्वेषामात्मचिन्तनम् ।
[1]प्रधानाद्द्वैधयुक्तानां दहते कर्मजं रजः ॥ ५

यथाऽहनि तथा रात्रौ यथा रात्रौ तथाऽहनि ।
वशे तिष्ठति तत्रात्मा सततं योगयोगिनाम् ॥ ६

तेषां नित्यं सतां नित्यो भूतात्मा सततं गुणैः ।
सप्तभिस्त्वन्वितस्सूक्ष्मैश् चरिष्णुरजरामरः ॥ ७

मनोबुद्धिपराभूतस् स्वदेहपरदेहवित् ।
स्वप्नेष्वपि भवत्येष विज्ञाता सुखदुःखयोः ॥ ८

तत्रापि लभते दुःखं तत्रापि लभते सुखम् ।
कामं क्रोधं च तत्रापि कृत्वा व्यसनमृच्छति ॥ ९

प्रीणितश्चापि भवति महतोऽर्थानवाप्य च ।
करोति पुण्यं तत्रापि जाग्रन्निव च पश्यति ॥ १०

तमोभ्रमतितेजोंशं भूतानां हृदये स्थितम् ।
तमोरजोभ्यामाविष्टो नान्यं पश्यति मूर्तिषु ॥ ११

शास्त्रयोगपरा भूत्वा स्वमात्मानमभीप्सवः ।

---

1. ग—प्रधानं द्वैध

तमोरजोभ्यां निर्मुक्तास् तं प्रपश्यन्ति मूर्तिषु ॥ १२

अनुच्छ्वासान्यमूर्तीनि यानि वज्रोपमान्यपि ॥ १२॥

पृथक् भूतेषु सृष्टेषु चतुर्ष्वाश्रमकर्मसु ।

समाधौ योगमेवैषां शाण्डिल्यश्शममब्रवीत् ॥ १३॥

विदित्वा सप्त सूक्ष्माणि षडङ्गं च महेश्वरम् ।

प्रधानविनियोगज्ञः परं ब्रह्माधिगच्छति ॥ १४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि नवतितमोऽध्यायः ॥ ९० ॥
[ अस्मिन्नध्याये १४॥ श्लोकाः ]

---

## ॥ एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति कामादिशक्तिप्रतिपादनपूर्वकतज्जयोपाय-प्रतिपादनपरव्यासवाक्यानुवादः ॥

---

व्यासः—

हृदि कामद्रुमश्चित्रो मोहसञ्चयसम्भवः ।

क्रोधमानमहास्कन्धो विवित्सापरिवेषणः ॥ १

तस्य चाज्ञानमाधारः [1]प्रमादः परिषेचनम् ।

---

1. अ-क-ख-घ—प्रधानं परि

सोऽभ्यसूयापलाशो हि पुरा दुष्कृतसारवान् ॥ २

सम्मोहचिन्ताविटपश् शोकशाखो [1]भयाङ्कुरः ।
मोहनाभिः पिपासाभिर् [2]लताभिः परिवेष्टितः ॥ ३

उपासते महावृक्षं सुलुब्धास्ते फलेप्सवः ।
आयतैस्संयताः पाशैः फलानि परिभक्षयन् ॥ ४

यस्तान् पाशान् वशे कृत्वा तं वृक्षमपकर्षति ।
गतस्स दुःखयोरन्तं जरामरणयोर्द्वयोः ॥ ५

संरोहत्यकृतप्रज्ञस् ससत्त्वो हन्ति पादपम् ।
स तमेवाहतो हन्ति विषं ग्रस्तमिवातुरम् ॥ ६

तस्यानुगतमूलस्य मूलमुद्ध्रियते बलात् ।
[3]त्यागाप्रमादात् कृतिना सत्येन परमासिना ॥ ७

एवं यो वेद कामस्य केवलं परिसर्पणम् ।
एतच्च शस्त्रं कामस्य सुदुःखान्यतिवर्तते ॥ ८

शरीरं पुरमित्याहुस् स्वामिनी बुद्धिरिष्यते ।
तत्र बुद्धेश्शरीरस्थं मनो नामार्थचिन्तकम् ॥ ९

इन्द्रियाणि जनाः पौरास् तदर्थास्तु पुरोहिताः ।

---

1. क-ग-घ—भयङ्करः
2. घ—स्वकाभिः
3. घ—त्यागात् + साम्येन ; ग—त्यागाप्रमादाकृतिना साम्येन

तत्र द्वौ दारुणौ दोषौ तमो नाम रजस्तथा ॥　　१०

यमर्थमुपजीवन्ति पौरास्सह पुरेश्वराः ।
अद्वारेण तमेवार्थं द्वौ दोषावुपजीवतः ॥　　११

[1]तत्र बुद्धिर्हि दुर्धर्षा मनस्साधर्म्यमुच्यते ।
पौराश्चापि मनस्त्रस्तास् तेषामपि चला स्थितिः ॥　　१२

यमर्थं बुद्धिरध्यास्ते सोऽर्थः परिविषीदति ।
पौरमन्त्रिवियुक्तोऽयं सोऽर्थस्संसीदति क्रमात् ॥　　१३
यमर्थं पृथगध्यास्ते मनस्तत् परिषीदति ॥　　१३॥

पृथग्भूतं यथा बुद्ध्या मनो भवति केवलम् ।
अत्रैनं विकृतं शून्यं रजः पर्यवतिष्ठते ॥　　१४॥

तन्मनः कुरुते सख्यं रजसा सह सङ्गतम् ।
तं चादाय जनं पौरं रजसे सम्प्रयच्छति ॥　　१५॥

**इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥**
**॥ ८८ ॥ मोक्षधर्मपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥**
**[ अस्मिन्नध्याये १५॥ श्लोकाः ]**

---

1. **ष—अर्धषट्कं नास्ति**

## ॥ चत्वारिंशदधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति पृथिव्यादिभूतगुणप्रतिपादकव्यासवाक्यानुवादः ॥

भीष्मः—

भूतानां गुणसङ्ख्यानं भूयः पुत्र निशामय ।
द्वैपायनमुखाद्भ्रष्टं श्लाघया परयाऽनघ ॥ १

दीप्तानलनिभः प्राह भगवान् [1]धर्मवत्सलः ।
तत्तेऽहमपि वक्ष्यामि भूयः पुत्र निदर्शनम् ॥ २

व्यासः—

भूमेस्स्थैर्यं गुरुत्वं च काठिन्यं प्रसवात्मता ।
गन्धो भारश्च शक्तिश्च सङ्घातस्स्थापना धृतिः ॥ ३

अपां शैत्यं रसः क्लेदो द्रवत्वं स्नेहसौम्यते ।
जिह्वा विष्यन्दनं चैव भूमावा[2]स्रवणं तथा ॥ ४

[3]अग्नेर्दुर्धर्षता दीप्तिस् तापः पाकः प्रकाशनम् ।
शौचं रागो लघुस्तैक्ष्ण्यं [4]सततं चोर्ध्वभासिता ॥ ५

---

1. ख—ध्रुववर्चसे ; ग—धूम्रवर्चसः ; घ—वर्चसः
2. ख—भौमाभ्यास्रवणं ; घ—श्रपणं
3. ख—अर्धचतुष्टयं नास्ति
4 ग—दशमं

वायोस्तिर्यग्गतिस्स्पर्शो पांसूत्थानं स्वतन्त्रता ।
बलं शैघ्र्यं च मोक्षश्च  कर्मचेष्टात्मता तथा ॥ ६

आकाशस्य गुणश्शब्दो व्यापिता छिद्रताऽपि च ।
अनाश्रयमनालम्बम् अव्यक्तमविकारिता ॥ ७

अप्रतीघातता चैव श्रोतृत्वं विवराणि च ।
गुणाः पञ्चाशतं प्रोक्ताः पञ्चभूतविभाविताः ॥ ८

[1]फलोपपत्तिर्व्यक्तिश्च विसर्गः कल्पना क्षमा ।
सदसत्त्वाशुता चैव मनसो नव वै गुणाः ॥ ९

इष्टानिष्टविकल्पश्च व्यवसायस्समाधिता ।
[2]संशयः प्रतिपत्तिश्च बुद्धेः पञ्चेह ये गुणाः ॥ १०

[3]आहुष्षष्टिं भूतगुणान् वै
भूतविषक्ताः [4]प्रकृतिविसृष्टाः ।
नित्यविषक्ताश्चाक्षरसृष्टास्
सर्वमनित्यं तदिह वदन्ति ॥ ११

---

1. ग—बलं·  2. ख—नास्तीदमर्धम्

3. ख—युधिष्ठिरः—
एतेभ्य एनो निर्वृत्तास्सुगुणाबात्मनोऽपि वा ।
संश्रयः प्रतिपत्तिश्च बुद्धौ पञ्चेह या गुणाः ।
एतन्मे सर्वमाचक्ष्व सूक्ष्मज्ञानं पितामह ॥
भीष्मः—  [अधिकः पाठः]

4. ख-ग—नित्यविषक्ताः;  घ—प्रीतिविशिष्टाः

[1]तत् पुत्र चिन्तालयनं यदुक्तम्
अनागतं तेन च सम्प्रतीह ।
भूतार्थतत्त्वं तदवाप्य सर्वं
भूतप्रवाहादिव शान्तबुद्धिः ॥ १२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥
[ अस्मिन्नध्याये १२ श्लोकाः ]

## ॥ एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति नारदाकम्पनसंवादानुवादः ॥ १ ॥ नारदेनाकम्पनं प्रति स्थाणुप्रजापतिसंवादानुवादारम्भः ॥ २ ॥

युधिष्ठिरः—

य इमे पृथिवीपालाश् शेरते पृथिवीतले ।
पृतनामध्यगास्ते हि गतसत्त्वा महाबलाः ॥ १

एकैकशो भीमबला नागायुतबलास्तथा ।
एते हि निहतास्सङ्ख्ये तुल्यतेजोबलैर्नरैः ॥ २

1. ख—तत्पुत्रचित्तलयनं कलितं
घ—तत्पुत्रपालनं यदुक्तं मनोगतं तव सम्प्रतीह

नैषां पश्यामि हर्तारं [1]प्राणानां संयुगे पुरा ।
विक्रमेणैव सम्पन्नास् तेजोबलसमन्विताः ॥ ३

अथ चेमे महाप्राज्ञाश् शेरते हि गतासवः ।
मृता इति च शब्दोऽयं वर्तत्येव गतासुषु ॥ ४

इमे मृता नृपतयः प्रायशो भीमविक्रमाः ।
तत्र मे संशयो जातः कुतस्संज्ञा मृता इति ॥ ५

कस्स मृत्युः कुतो मृत्युः केन मृत्युरिह प्रजाः ।
हरत्यमरसङ्काश तन्मे ब्रूहि पितामह ॥ ६

भीष्मः—

पुरा कृतयुगे तात राजा ह्यासीदकम्पनः ।
स शत्रुवशमापन्नस् सङ्ग्रामे क्षीणवाहनः ॥ ७

तस्य पुत्रो हरिर्नाम नारायणसमो बले ।
स शत्रुभिर्हतस्सङ्ख्ये सबलस्सपदानुगः ॥ ८

स राजा शत्रुवशगः पुत्रशोकसमन्वितः ।
यदृच्छया शान्तिपरो ददर्श भुवि नारदम् ॥ ९

तस्मै स सर्वमाचष्ट यथावृत्तं जनेश्वरः ।
शत्रुभिर्ग्रहणं सङ्ख्ये पुत्रस्य मरणं तथा ॥ १०

तस्य तद्वचनं श्रुत्वा नारदोऽथ तपोधनः ।

---

1. ख-घ—प्राणिनां

आख्यानमिदमाचष्टे पुत्रशोकहरं तथा ॥ ११

नारदः—

राजन् शृणु महाख्यानं ममेदं बहुविस्तरम् ।
यथावृत्तं श्रुतं चैव मयाऽपि वसुधाधिप ॥ १२

प्रजास्सृष्ट्वा महातेजाः [1]प्रजासर्गे पितामहः ।
अतीव वृद्धा बहुला [2]न मृतास्ते ततः प्रजाः ॥ १३

[3]न ह्यन्तरमभूत् किञ्चित् कचिज्जन्तुभिरच्युत ।
निरुच्छ्वासमिवोन्नद्धं त्रैलोक्यमभवन्नृप ॥ १४

तस्य चिन्ता समुत्पन्ना संहारं प्रति भूपते ।
चिन्तयन् नाध्यगच्छत् स संहारे हेतुकारणम् ॥ १५

तस्य रोषान्महाराज खेभ्योऽग्निरुदतिष्ठत ।
तेन सर्वा दिशो राजन् ददाह स पितामहः ॥ १६

ततो दिवं भुवं खं च जगच्च सचराचरम् ।
ददाह पावको राजन् भगवत्क्रोधसम्भवः ॥ १७

तत्रादह्यन्त भूतानि जङ्गमानि ध्रुवाणि च ॥
महता कोपवेगेन कुपिते प्रपितामहे ॥ १८

1. घ—पूर्वं
2. ख—नामृष्यन्त पुनः; ग—नामृष्यत ततः प्रजाः
घ—माभून्मृत्युस्
3. घ—न ह्यन्तमगमञ्जूमिः पूर्णा प्राणिभिरच्युत । [पाठान्तरम्]

ततो हरो जटी स्थाणुश्[1]श्मशाननिलयश्शिवः ।
जगाम शरणं देवो ब्रह्माणं परमेष्ठिनम् ॥ १९

तस्मिन्नभिगते स्थाणौ प्रजानां हितकाम्यया ।
अब्रवी[2]द्वरदो देवो ज्वलन्निव तदा शिवम् ॥ २०

करवाण्यद्य कं कामं वरार्होऽसि मतो मम ।
कर्ता ह्यस्मि प्रियं शम्भो तव यद्धृदि वर्तते ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥
॥ अस्मिन्नध्याये २१ श्लोकाः ॥

---

## ॥ द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥



स्थाणुवचनाद्ब्रह्मणा लोकदाहककोपाग्नेरन्तर्नियमनम् ॥ १ ॥ तथा स्वचक्षुरादीन्द्रियेभ्यो जातां मृत्युदेवीं प्रति प्रजासंहारे नियोजनम् ॥ २ ॥

---

स्थाणुः—

प्रजासर्गनिमित्तां मे कार्यवत्तामिमां प्रभो ।
विद्धि सृष्टास्त्वया हीमा मा कुप्यस्त्वं पितामह ॥ १

---

1. ख—वेदाध्वरपतिश्शिवः
2. ध—त् परमो

तव तेजोऽग्निना देव प्रजा दह्यन्ति सर्वशः ।
तद्दृष्ट्वा मम कारुण्यं मा कुप्यस्त्वं जगत्प्रभो ॥ २

प्रजापतिः—

न कुप्येऽहं न मे कामो न भवेरन् प्रजा इति ।
लाघवार्थं धरण्यास्तु ततस्संहार इष्यते ॥ ३

इयं हि मां सदा देवी भारार्ता समचोदयत् ।
संहारार्थं महादेव भारेणाप्सु निमज्जती ॥ ४

यदहं नाधिगच्छामि बुद्ध्या बहु विचारयन् ।
संहारमासां वृद्धानां ततो मां क्रोध आविशत् ॥ ५

स्थाणुः—

संहारात्त्वं निवर्तस्व मा क्रुध्यस्त्रिदशेश्वर ।
मा प्रजास्स्थावरांश्चैव जङ्गमांश्च व्यनीनशः ॥ ६

पल्वलानि च सर्वाणि सर्वं चैव तृणोलपम् ।
स्थावरं जङ्गमं चैव भूतग्रामं चतुर्विधम् ॥ ७

तदेतद्भस्मसाद्भूतं जगत् सर्वमुपप्लुतम् ।
प्रसीद भगवन् साधो वर एष वृतो मया ॥ ८

नष्टा न पुनरेष्यन्ति प्रजा ह्येताः कथञ्चन ।
तस्मान्निवर्त्यतामेतत् तेजस्स्वेनैव तेजसा ॥ ९

उपायमन्यं सम्पश्य प्रजानां हितकाम्यया ।

यथेमे जन्तवस्सर्वे निवर्तेरन् परन्तप ॥ १०

अभावं नाधिगच्छेयुर् उत्सन्नप्रजनाः प्रजाः ।
[1]पुत्रत्वेनानुसङ्कल्प्य त्वयाऽहं तपसाऽप्यज ॥ ११

[2]अधिदैवं नियुक्तोऽस्मि लोकानां हितकारणात् ॥ ११॥

त्वद्भूवं हि जगन्नाथ जगत्स्थावरजङ्गमम् ।
प्रसाद्य त्वां महादेव याचाम्यावृत्तिजाः प्रजाः ॥ १२॥

नारदः—

श्रुत्वा तु वचनं देवस् स्थाणोर्नियतवाङ्मनाः ।
तेजस्तत् स्वं निजमाह पुनरेवान्तरात्मनि ॥ १३॥

ततोऽग्निमुपसंहृत्य भगवाँल्लोकभावनः ।
प्रवृत्तिं च निवृत्तिं च कल्पयामास वै प्रभुः ॥ १४॥

उपसंहरतस्तस्य तमग्निं रोषजं तदा ।
प्रादुर्बभूव [3]विश्वेशात् खेभ्यो नारी महात्मनः ॥ १५॥

कृष्णरक्ताम्बरधरा रक्तनेत्रतलान्तरा ।
दिव्यकुण्डलसम्पन्ना दिव्याभरणभूषिता ॥ १६॥

सा विनिस्सृत्य खेभ्योऽस्य दक्षिणामाश्रयद् दिशम् ।

---

1. ख—नासीदमर्धम्
   घ—अर्धचतुष्टयं नास्ति
2. ख—अधिदैवान्नियुक्तोऽस्मि त्वया लोकेषु हीश्वर । [पाठान्तरम्]
3. ख—विश्वेभ्यः

ददृशातेऽथ तां कन्यां देवौ विश्वेश्वरावुभौ ॥ १७॥

तामाहाथ तदा देवो लोकानामादिरीश्वरः ।
मृत्यो इति महीपाल जहि चेमाः प्रजा इति ॥ १८॥

प्रजापतिः—

त्वं हि संहारबुद्ध्या मे चिन्तिता रुषितेन च ।
तस्मात् संहर सर्वास्त्वं प्रजास्सजडपण्डिताः॥ १९॥

अविशेषेण चैव त्वं प्रजास्संहर भामिनि ।
मम त्वं हि नियोगेन श्रेयः परमवाप्स्यसि ॥ २०॥

नारदः—

एवमुक्ता तु सा देवी मृत्युः [1]कनकमालिनी ।
प्रदध्यौ दुःखिता बाला साश्रुपातमतीव हि ॥ २१॥

पाणिभ्यां साऽथ जग्राह तान्यश्रूणि जनेश्वर ।
मानवानां हितार्थाय ययाचे पुनरेव सा ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चतुर्णवतितमोऽध्यायः ॥ ९४ ॥
[ अस्मिन्नध्याये २२॥ श्लोकाः ]

———

## ॥ त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥

नारदेन मृत्युब्रह्मसंवादानुवादपूर्वकमकम्पनस्य पुत्रशोकापनोदनम् ॥

[1]नारदः—

विनीय दुःखमबला सात्त्वतीवायतेक्षणा ।
उवाच प्राञ्जलिर्भूत्वा लतेवावर्जिता तदा ॥ १

मृत्युः—

त्वया सृष्टा कथं नारी मादृशी वदतां वर ।
रौद्रं कर्माभिजायेत सर्वप्राणिभयङ्करम् ॥ २

बिभेम्यहमधर्मस्य धर्म्यमादिश कर्म मे ।
त्वं मां भीतामवेक्षस्व शिवेनेश्वर चक्षुषा ॥ ३

बालान् वृद्धान् वयस्थांश्च न [2]हरेयमनागसः ।
प्राणिनः प्राणिनामीश नमस्तेऽस्तु प्रसीद मे ॥ ४

प्रियान् पुत्रान् वयस्यांश्च भ्रातृमातृपितॄनपि ।
अनुध्यास्यन्ति यद्देव मृतांस्तेभ्यो बिभेम्यहम् ॥ ५

कृपणाश्रुपरिक्लेदो दहेन्मां शाश्वतीस्समाः ।
तेभ्योऽहं बलवद्भीता शरणं त्वामुपागता ॥ ६

---

1. ब—भीष्मः　　[पाठान्तरम्]
2. ब—मारेय

यमस्य भवने देव [1]यान्त्यन्ते पापकर्मिणः ।
[2]निवेदये त्वां वरद प्रसादं कुरु मे विभो ॥ ७

एतदिच्छाम्यहं कामं त्वत्तो लोकपितामह ।
[3]इच्छेयं त्वत्प्रसादाच्च तपस्तप्तुं सुरेश्वर ॥ ८

पितामहः—

[4]त्वं हि संहारबुद्ध्या मे चिन्तिता रुषितेन च ।
तस्मात् संहर सर्वास्त्वं प्रजा मा च विचारय ॥ ९

एवमेतदवश्यं हि भविता नैतदन्यथा ।
क्रियतामनवद्याङ्गि यथोक्तं मद्वचोऽनघे ॥ १०

नारदः—

एवमुक्ता महाबाहो मृत्युः परपुरञ्जय ।
न व्याजहार तस्थौ च प्रह्वा भगवदुन्मुखी ॥ ११

पुनः पुनरथोक्ता सा गतसत्त्वेव भामिनी ।
तूष्णीमासीत् ततो देवो लोकानामीश्वरेश्वरः ॥ १२

प्रससाद किल ब्रह्मा स्वयमेवात्मनाऽऽत्मवान् ।
स्मयमानश्च लोकेशो लोकान् सर्वानवैक्षत ॥ १३

---

1. ख—पात्यन्ते ; घ—यान्त्यन्ये
2. ख—प्रसादये त्वा × प्रभो
3. घ—नास्तीदमधर्मम्
4. ख—मृत्युस्सङ्कल्प्यतामेवं प्रजास्संहर हेतुना । [पाठान्तरम्]

निवृत्तरोषे तस्मिंस्तु भगवत्यपराजिते ।
सा कन्याऽपजगामास्य समीपादिति नश्श्रुतिः ॥ १४

अपसृत्याप्रतिश्रुत्य प्रजासंहरणं तदा ।
त्वरमाणेव राजेन्द्र मृत्युर्धेनुकमभ्यगात् ॥ १५

सा तत्र परमं देवी तपोऽचरत दुश्चरम् ।
[1]समा ह्येकपदे तस्थौ दशपद्मानि पञ्च च ॥ १६

तां तथा कुर्वतीं तत्र तपः परमदुश्चरम् ।
पुनरेव महातेजा ब्रह्मा वचनमब्रवीत् ॥ १७

कुरुष्व मे वचो मृत्यो तदनादृत्य सत्वरा ।
तथैवैकपदे तात पुनरन्यानि सप्त सा ॥ १८

तस्थौ पद्मानि षट् चैव पञ्च द्वे चैव मानद ।
भूयः पद्मायुतं तात मृगैस्सह चचार सा ॥ १९

पुनर्गत्वा ततोऽनन्तं मौनमातिष्ठदुत्तमम् ।
अप्सु वर्षसहस्राणि सप्त चैकं च पार्थिव ॥ २०

ततो जगाम सा कन्या कौशिकीं भरतर्षभ ।
तत्र वायुजलाहारा चचार नियमं पुनः ॥ २१

ततो ययौ महाभागा गङ्गां मेरुं च केवलम् ।
तस्थौ दार्विव निश्चेष्टा प्रजानां हितकाम्यया ॥ २२

1. घ—अर्धचतुष्टयं नास्ति

ततो हिमवतो मूर्ध्नि यत्र देवास्समीजिरे ।
तत्राङ्गुष्ठेन राजेन्द्र निखर्वं परमं तपः ॥ २३

तस्थौ पितामहं चैव तोषयामास यत्नतः ॥ २३॥

ततस्तामब्रवीत्तत्र लोकानां प्रपितामहः ॥ २४

ब्रह्मा—

किमिदं वर्तसे पुत्रि क्रियतां मम तद्वचः ॥ २४॥

नारदः—

ततोऽब्रवीत् पुनर्मृत्युर् भगवन्तं पितामहम् ॥ २५

मृत्युः—

न हरेयं प्रजा देव पुनस्त्वाऽहं प्रसादये ॥ २५॥

नारदः—

तामधर्मभयत्रस्तां पुनरेव प्रजापतिः ।
तदाऽब्रवीद्देवदेवो निगृह्येदं वचस्ततः ॥ २६॥

ब्रह्मा—

अधर्मो नास्ति ते मृत्यो संयच्छेमाः प्रजाश्शुभे ।
मयाऽप्युक्तं मृषा भद्रे भविता नेह किञ्चन ॥ २७॥

धर्मस्सनातनश्च त्वाम् इहैवानुप्रवेक्ष्यति ।
अहं च विबुधाश्चैव त्वद्धिते निरतास्सदा ॥ २८॥

इममन्यं च ते कामं ददामि मनसेप्सितम् ।
न त्वां दोषेण यास्यन्ति व्याधिसम्पीडिताः प्रजाः ॥ २९॥

पुरुषेषु च रूपेण पुरुषस्त्वं भविष्यसि ।
स्त्रीषु स्त्रीरूपिणी चैव तृतीये च नपुंसकम् ॥ ३०॥

नारदः—

सैवमुक्ता महाराज कृताञ्जलिरुवाच ह ।
पुनरेव महात्मानं नेति देवेशमव्ययम् ॥ ३१॥

तामब्रवीत्तदा देवो मृत्यो संहर मानवान् ।
अधर्मस्ते न भविता तथा ध्यास्याम्यहं शुभे ॥ ३२॥

[1]त्वं हि शक्ता च युक्ता च पूर्वोत्पन्ना च भामिनि ।
अनुशिष्टा च निर्दोषा तस्मात् तत्वं कुरु मे मतम् ॥ ३३॥

यानश्रुबिन्दून् पतितानपश्यं
ये पाणिभ्यां धारितास्ते पुरस्तात् ।
ते व्याधयो मानवान् घोररूपाः
प्राप्ते काले पीडयिष्यन्ति मृत्यो ॥ ३४॥

सर्वेषां त्वं प्राणिनामन्तकाले
कामक्रोधौ सहितौ योजयेथाः ।
एवं धर्मस्त्वामुपैष्यत्यमोघो
न चाधर्मं लप्स्यसे तुल्यवृत्तिः ॥ ३५॥

1. ख—नासीदमधर्मम्

एवं धर्मं पालयिष्यस्यमोघं
　　न चात्मानं मज्जयिष्यस्यधर्मे ।
तस्मात् कामं रोचयाभ्यागतं त्वं
　　सा त्वं साधो संहरस्वेह जन्तून् ॥　　३६॥

सा वै तदा मृत्युसंज्ञा कृता सा
　　शापाद्भीता बाढमित्यब्रवीत् तम् ।
[1]अथो प्राणान् प्राणिनामन्तकाले
　　कामक्रोधौ प्राप्य नित्यं निहन्ति ॥　　३७॥

मृत्योर्ह्येते व्याधयश्चाश्रुपाता
　　मनुष्याणां युज्यते यैश्शरीरम् ।
सर्वेषां वै प्राणिनां प्राणनान्ते
　　[2]तस्माच्छोकं मा कृथा बुद्ध्व बुद्ध्या ॥　　३८॥

सर्वे देवाः प्राणिनां प्राणनान्ते
　　गत्वा वृत्तास्सन्निवृत्तास्तथैव ।
एवं सर्वे मानवाः प्राणनान्ते
　　गत्वा वृत्ता देववद्राजसिंह ॥　　३९॥

वायुर्भीमो भीमनादो महौजास्
　　सर्वेषां च प्राणिनां प्राणभूतः ।

---

1. ग-घ—तेषां
2. ख—इतः पादचतुष्टयं नास्ति

नानावृत्तिर्देहिनां देहभेदे
　　तस्माद्वायुर्देवदेवो विशिष्टः ॥　　४०॥

[1]सर्वे देवा मर्त्यसंज्ञाविशिष्टास्
　　सर्वे मर्त्या देवसंज्ञाविशिष्टाः ।
तस्मात् पुत्रं मा शुचो राजसिंह
　　पुत्रस्स्वर्गं प्राप्यते मोदते ह ॥　　४१॥

भीष्मः—

एवं मृत्युर्देवसृष्टा प्रजानां
　　प्राप्ते काले संहरन्ती यथावत् ।
[2]तस्याश्चैव व्याधयस्तेऽश्रुपाताः
　　प्राप्ते काले संहरन्तीह जन्तून् ॥　　४२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥
[ अस्मिन्नध्याये ४२॥ श्लोकाः ]

---

1. ग—इदमर्धं नास्ति　　2. ग—इदमर्धं नास्ति

## ॥ चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति धर्मलक्षणकथनम् ॥

युधिष्ठिरः—

इमे वै मानवास्सर्वे धर्मे प्रति विशङ्किताः ।
कोऽयं धर्मः कुतो धर्मस् तन्मे ब्रूहि पितामह ॥ १

[1]धर्मस्त्वयमिहार्थः किम् अमुत्रार्थोऽपि वा भवेत् ।
उभयार्थोऽपि वा धर्मस् तन्मे ब्रूहि पितामह ॥ २

भीष्मः—

सदाचारस्स्मृतिर्वेदास् त्रिविधं धर्मलक्षणम् ।
[2]चतुर्थमर्थमप्याहुः कवयो धर्मलक्षणम् ॥ ३

अविध्युक्तानि कर्माणि व्यवस्यन्त्युप्तमूषरे ।
लोकयात्रार्थमेवेह धर्मस्य नियमः कृतः ॥ ४

उभयत्र सुखोदर्क इह चैव परत्र च ।
अलब्ध्वा निपुणं धर्मं पापः पापेषु सज्जति ॥ ५

न च पापकृतः पापान्मुच्यन्ते केचिदापदि ।
अपापवादी भवति यदा भवति धर्मवित् ॥ ६

---

1. ख—अर्धद्वयं नास्ति
2. ख-ग-घ—नास्तीदमर्धम्

[1]धर्मनिष्ठस्सदाचारस् तमेवाश्रित्य चावसेत् ॥ ६॥

सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।
सत्येन विधृतं सर्वं सर्वं सत्ये प्रतिष्ठितम् ॥ ७॥

अपि पापकृतो रौद्रास् सत्यं कृत्वा मिथःकृतम् ।
[2]अद्रोहमविसंवादं प्रवर्तन्ते तदाश्रयाः ॥ ८॥

[3]तेऽपि मिथ्याविधिं कुर्युर् विनश्येयुरसंशयम् ।
न हर्तव्यं परधनम् इति [4]धर्मविदो विदुः ॥ ९॥

मन्यन्ते बलवन्तस्तद् दुर्बलैस्सम्प्रवर्तितम् ।
यदा नियतिदौर्बल्यम् अथैषामेव रोचते ॥ १०॥

न ह्यत्यन्तं बलयुता भवन्ति सुखिनोऽपि वा ॥ ११

रमतेऽपहरंस्तेनः परवित्तमराजके ।
यदाऽस्य तद्धरन्त्यन्ये तदा राजानमिच्छति ॥ १२

यथा धर्मसमाविष्टो रौद्रं गृह्णाति तस्करम् ।
तदा तेषां स्पृहयते ये वै तुष्टास्स्वकैर्धनैः ॥ १३

अभीतश्शुचिरभ्येति राजद्वारमशङ्कितः ।
न हि दुश्चरितं किञ्चिद् अन्तरात्मनि पश्यति ॥ १४

---

1. ख—धर्मस्य निष्ठा स्वद्वारः; ग—धर्मस्य निष्ठा स्वाचार-
2. घ—धर्मस्य निष्ठा स्वाचारं........ [अधिकः पाठः]
3. ख—नचेन्मिथोधृतिं; ग—तेचेन्मिथाश्रुतिं कुर्यु·; घ—चेन्
4. ख—धर्मस्सनातनः

[1]तस्मादनार्जवे बुद्धिर् न कार्या ते कथञ्चन ॥ १४॥

असाधुभ्योऽस्य न भयं न चोरेभ्यो न राजतः ।
न किञ्चित् कस्यचित् कुर्वन् निर्भयश्शुचिरावसेत् ॥ १५॥

सर्वतश्शङ्कते स्तेनो मृगो ग्राममिवेयिवान् ।
बहुधाऽऽचरितं पापम् अन्यस्यैवानुपश्यति ॥ १६॥

मुदितश्शुचिरभ्येति सर्वतो निर्भयस्सदा ।
न हि दुश्चरितं किञ्चिद् आत्मनोऽन्येषु पश्यति ॥ १७॥

दातव्यमित्ययं धर्म उक्तो भूतहिते रतैः ।
तं मन्यन्ते धनयुताः कृपणैस्सम्प्रवर्तितम् ॥ १८॥

यदाऽनीयन्त कार्पण्यम् अथैषामेव रोचते ।
धनवन्तोऽपि नात्यन्तं भवन्ति सुखिनोऽपि वा ॥ १९॥

यदन्यैर्विहितं नेच्छेद् आत्मनः कर्म पूरुषः ।
न तत्परेषु कुर्वीत जानन्नप्रियमात्मनः ॥ २०॥

योऽन्यस्य स्वादुवद्वक्ति कस्तं हिंसितुमर्हति ।
यदन्यस्तस्य तत् कुर्यान्न मृष्येदिति मे मतिः ॥ २१॥

जीवितुं यस्स्वयं चेच्छेत् कथं सोऽन्यं [2]प्रघातयेत् ।
यद्यदात्मन इच्छेत तत् परस्यापि चिन्तयेत् ॥ २२॥

---

1. ग—तस्माद्धर्थाजंने 2. ख—प्रमापयेत्

अतिरिक्तस्संविभजेद् भोगैरन्यानकिञ्चनान् ।
एतस्मात् कारणाद्धात्रा कुसीदंसम्प्रवर्तितम् ॥ २३॥

यस्मिंस्तु देवास्समये [1]सम्पद्येरंस्तमारभेत् ।
अथ चेल्लोभसमये स्थितिर्धर्मेऽप्यशोभना ॥ २४॥

सर्वं प्रियाभ्युपगतं पुण्यमाहुर्मनीषिणः ।
पश्यैतं लक्षणोद्देशं धर्माधर्मे युधिष्ठिर ॥ २५॥

लोकसङ्ग्रहसंयुक्तं विधात्रा विहितं पुरा ।
सूक्ष्मतत्त्वार्थनियतं सदाचरितमुत्तमम् ॥ २६॥

धर्मलक्षणमाख्यातम् एतत्ते कुरुसत्तम ।
तस्मादनार्जवे बुद्धिर् न ते कार्या कथञ्चन ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥
[ अस्मिन्नध्याये २७॥ श्लोकाः ]

---

1. ख—सन्तिष्ठेरंस्तथा भवेत्

## ॥ पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥



युधिष्ठिरेण भीष्मं प्रति धर्मप्रामाण्याक्षेपः ॥

युधिष्ठिरः—

सूक्ष्मं साधु समादिष्टं भवता धर्मलक्षणम् ।
प्रतिभा ह्यस्ति मे काचित् प्रब्रूयामनुमानतः ॥ १

भूयांसो हृदये ये मे प्रश्नास्ते व्याहृतास्त्वया ।
इममन्यं प्रवक्ष्यामि न राजन्निग्रहादिव ॥ २

[1]इमे हि पालयन्तीह सृजन्त्युत्तारयन्ति च ।
[2]न धर्मः परिपाठेन शक्यो भारत वेदितुम् ॥ ३

अन्यो धर्मस्समस्थस्य विषमस्थस्य चापरः ।
[3]अतस्ते तु कथं शक्याः परिपाठेन वेदितुम् ॥ ४

सदाचारो मतो धर्मस् सन्तस्त्वाचारलक्षणाः ।
साध्यासाध्यं कथं शक्यं सदाचारोऽप्यलक्षणः ॥ ५

दृश्यते धर्मरूपेण ह्यधर्मं प्राकृतश्चरन् ।
धर्मं चाधर्मरूपेण कश्चिदप्राकृतश्चरन् ॥ ६

1. ख—इमानि हि प्रयान्ति स्म ; ग-घ—इमानि प्रापयन्तीह
2. घ—नास्तीदमर्थम्
3. ख-ग-घ—आपदस्तु

पुनरस्य प्रमाणं हि निर्दिष्टं शास्त्रकोविदैः ।
वेदवादाश्चानुयुगं ह्रसन्तीति हि नश्श्रुतम् ॥ ७

अन्ये कृतयुगे धर्मास् त्रेतायां द्वापरे परे ।
अन्ये कलियुगे धर्मा यथाशक्ति कृता इव ॥ ८

आम्नायवचनं सत्यम् इत्ययं लोकसङ्ग्रहः ।
आम्नायेभ्यः पुनर्वेदाः प्रसृतास्सर्वतोमुखाः ॥ ९

ते चेत् सर्वे प्रमाणं वै नाप्रमाणं तु विद्यते ।
प्रमाणं चेत् प्रमाणेन विरुद्धेच्छास्त्रता कुतः ॥ १०

धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः ।
यदा विक्रियते संस्था ततस्साऽपि प्रणश्यति ॥ ११

विद्मो वैनं न वा विद्मश् शक्यं वा वेदितुं न वा ।
अणीयान् क्षुरधाराया गरीयान् पर्वतादपि ॥ १२

गन्धर्वनगराकारः प्रथमं सम्प्रदृश्यते ।
अन्वीक्ष्यमाणः कविभिः पुनर्गच्छत्यदर्शनम् ॥ १३

निपानानीव गोभ्याशे क्षेत्रे कुल्ये च भारत ।
स्मृतो हि शाश्वतो धर्मो विप्रहीणो न दृश्यते ॥ १४

[1]कामादपेक्षया चान्ये कारणैरपरैस्तथा ।
असन्तोऽपि वृथाचारं भजन्ते बहवोऽपरे ॥ १५

---

1. ख-ग-घ—कामादन्ये क्षयादन्ये

धर्मो भवति स क्षिप्रं विलोमस्तेष्वसाधुषु ।
अन्ये तानाहुरुन्मत्तान् अपि वाचं हसन्त्युत ॥ १६

महाजनादुपावृत्ता राजधर्मं समाश्रिताः ।
न [1]च सर्वगतः कश्चिद् आचारस्सम्प्रदृश्यते ॥ १७

तेनैवान्यः प्रभवति सोऽपरं बाधते पुनः ।
दृश्यते चैव स पुनस् तुल्यरूपो यदृच्छया ॥ १८

यो नैवान्यः प्रभवति सोऽपरानपि बाधते ।
आचाराणामनैकाग्र्यं सर्वेषामेव लक्षये ॥ १९

भीष्मः—

चिराभिपन्नः कविभिः पूर्वं धर्म उदाहृतः ।
तेनाचारेण पूर्वेण संस्था भवति शाश्वती ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥
[अस्मिन्नध्याये २० श्लोकाः]

---

1. ख—हि सर्वहितः

## ॥ षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति जाजलिचरित्रकथनारम्भः ॥ १ ॥ धार्मिकं मन्येन जाजलिना खेचरकृतावज्ञया तुलाधारसमीपगमनम् ॥ २ ॥

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
तुलाधारस्य [1]वाक्यानि धर्मे जाजलिना सह ।　　१

वने वनचरः कश्चिज् जाजलिर्नाम वै द्विजः ।
सागरोद्देशमागम्य तपस्तेपे महातपाः ॥　　२

नियतो नियताहारश् चीराजिनजटाधरः ।
मलपङ्कधरो धीमान् बहून् वर्षगणान् मुनिः ॥　　३

स कदाचिन्महातेजा जलवासो महीपते ।
चचार लोकान् विप्रर्षिः प्रेक्षमाणो महाजवः ॥　　४

स चिन्तयामास मुनिर् जलमध्ये कदाचन ।
विप्रेक्ष्य सागरान्तां वै महीं सवनकाननाम् ॥　　५

न मया सदृशोऽस्तीह लोके स्थावरजङ्गमे ।
अप्सु वैहाय[2]सान् गच्छन् महायोग्यस्मि हीति वै ॥　　६

1. ख—संवादं
2. ख—सङ्गच्छेन्मयायोन्यस्सहेति वै
ग—सङ्गच्छेन्महायोग्यस्सहेति वै

स दृश्यमानो रक्षोभिर् जलमध्ये [1]च भारत ।
[2]आस्फोटयत्तदाऽऽकाशे धर्मः प्राप्तो मयेति वै ॥ ७

अब्रुवंश्च पिशाचास्तु नैवं त्वं वक्तुमर्हसि ॥ ७॥

तुलाधारो वणिग्धर्मा वाराणस्यां महायशाः ।
सोऽप्येवं नार्हते वक्तुं यथा त्वं द्विजसत्तम ॥ ८॥

इत्युक्तो जाजलिर्भूतैः [3]प्रत्युवाच महातपाः ॥ ९

जाजलिः—

पश्येयं तं महाप्राज्ञं तुलाधारं यशस्विनम् ॥ ९॥

भीष्मः—

इति ब्रुवाणं तमृषिं रक्षांस्युत्थाय सागरात् ।
अब्रुवन् गच्छ पन्थानम् आस्थायेमं द्विजोत्तम ॥ १०॥

इत्युक्तो जाजलिर्भूतैर् जगाम विमनास्तदा ।
[4]वाराणस्यां तुलाधारं समासाद्याब्रवी[5]द्विजः ॥ ११॥

युधिष्ठिरः—

किं कृतं [6]सुकृतं तात कर्म जाजलिना पुरा ।
येन सिद्धिं परां प्राप्तस् तन्मे व्याख्यातुमर्हसि ॥ १२॥

---

1. ख—वसत्युत 2. ख—नास्तीदमर्थम्
3. घ—इतोऽष्टौ पादा न सन्ति
4. ख—वाराणसीं तुलाधारं दिदृक्षुः पाण्डुनन्दन । [पाठान्तरम्]
5. ग-घ—द्विचः 6. ख-ग—दुष्करं

भीष्मः—

अतीव तपसा युक्तो घोरेण स बभूव ह ॥　　१३

नद्युपस्पर्शनपरस् सायंप्रातर्महातपाः ।
अग्निं परिचरन् सम्यक् स्वाध्यायपरमो [1]द्विजः ॥　　१४

वानप्रस्थविधानज्ञो जाजलिर्ज्वलनप्रियः ।
[2]सत्ये तपसि तिष्ठन् सन् न चाधर्ममवैक्षत ॥　　१५

वर्षास्वाकाशशायी च हेमन्ते जलसंश्रयः ।
वातातपसहो ग्रीष्मे न चाधर्ममविन्दत ॥　　१६

दुःखशय्यां च विविधां भूमौ च परिवर्तनम् ॥　　१६॥

ततः कदाचित् स मुनिर् वर्षास्वाकाशमास्थितः ।
अन्तरिक्षाज्जलं मूर्ध्ना प्रत्यगृह्णान्मुहुर्मुहुः ॥　　१७॥

क्लिन्ना बभूवुर्ग्रथिता आप्लुतस्य जटाः प्रभोः ।
अरण्यगमनो नित्यं मलिनो मलसंयुतः ॥　　१८॥

स कदाचिन्निराहारो वायुभक्षो महातपाः ।
तस्थौ काष्ठवदव्यग्रो न चचाल च कर्हिचित् ॥　　१९॥

तस्य स्म स्थाणुभूतस्य निर्विचेष्टस्य भारत ।
कुलिङ्गशकुनी राजन् नीडं शिरसि चक्रतुः ॥　　२०॥

स तौ दयावान् स मुनिर् उपप्रैक्षत दम्पती ।

---

1. ब—मुनिः　　2. ख—वन्ये तपस्यतिष्ठत् स

कुर्वाणौ नीडकं तत्र जटासु तृणतन्तुभिः ॥ २१॥

यदा च न चलत्येव स्थाणुभूतो महातपाः ।
ततस्तौ परिविश्वस्तौ सुखं तत्रोषतुस्तदा ॥ २२॥

अतीतास्वथ वर्षासु शरत्काल उपस्थिते ।
प्राजापत्येन विधिना विश्वासात् काममोहितौ ॥ २३॥

तत्रोत्पादयतां राजञ् शिरस्यण्डानि खेचरौ ।
[1]तान्यबुध्यत तेजस्वी स विप्रस्संशितव्रतः ॥ २४॥

बुद्ध्वा च सुमहातेजा न चचाल च जाजलिः ।
धर्मे धृतमना नित्यं नाधर्मं स त्वरोचयत् ॥ २५॥

अहन्यहनि चागम्य ततस्तावस्य मूर्धनि ।
आश्वासितौ च सततं सम्प्रहृष्टौ तदा विभो ॥ २६॥

अण्डेभ्यस्त्वथ पुष्टेभ्यः प्राजायन्त शकुन्तकाः ।
व्यवर्धन्त च तत्रैव न चाकम्पत जाजलिः ॥ २७॥

स रक्षमाणस्त्वण्डानि कुलिङ्गानां धृतव्रतः ।
तथैव तस्थौ धर्मात्मा निर्विचेष्टस्समाहितः ॥ २८॥

ततस्तु कालसमये बभूवुस्त्वथ पक्षिणः ।
बुबुधे तांश्च स मुनिर् जातपक्षाञ्[2]छकुन्तकान् ॥ २९॥

---

1. घ—न तस्य विप्रियं चक्रे
2. ख—कुलिङ्गकान्

ततः कदाचित् तांस्तत्र पश्यन् [1]पक्षीन् यतव्रतः ।
[2]तथैव तस्थौ धर्मात्मा निर्विचेष्टस्समाहितः ॥　　३०॥

बभूव परमप्रीतस् तदा मतिमतां वरः ॥　　३१

[3]ततस्तानिह संवृद्धान् दृष्ट्वा चैवाप्तवान् मुदम् ।
शकुनी निर्भयौ तत्र ऊषतुश्चाण्डजैस्सह ॥　　३२

जातपक्षांश्च तान् पश्यन्नुड्डीनान् पुनरागतान् ।
[4]सायं सायं द्विजान् विप्रो न चाकम्पत जाजलिः ॥　　३३

कदाचित् पुनरभ्येत्य पुनर्गच्छन्ति सन्ततम् ।
त्यक्ता मातापितृभ्यां ते न चाकम्पत जाजलिः ॥　　३४

अथ ते दिवसे चारं गत्वा सायं पुनर्नृप ।
उपावर्तन्त तत्रैव निवासार्थं शकुन्तकाः ॥　　३५

कदाचिद्दिवसान् पञ्च समुत्पत्य विहङ्गमाः ।
षष्ठेऽहनि पुनर्जग्मुर् न चाकम्पत जाजलिः ॥　　३६

क्रमेण च पुनस्सर्वे दिवसानि बहून्यपि ।
नोपावर्तन्त शकुना जातपक्षाश्च ते तदा ॥　　३७

कदाचिन्मासमात्रेण समुत्पत्य विहङ्गमाः ।

---

1. ख—विप्रो दृढव्रतः
2. अ-क-ख-ग—नास्तीदमर्धम्
3. ख-ग—तथा तानभिसंवृद्धान् दृष्ट्वा प्राप परां मुदम् ।
4. अ-क—नास्तीदमर्धम्

नैवागच्छंस्ततो राजन् प्रातिष्ठत स जाजलिः ॥ ३८

ततस्तेषु प्रलीनेषु जाजलिर्जातविस्मयः ।
सिद्धोऽस्मीति मतिं चक्रे ततस्तं मान आविशत् ॥ ३९

स तु तान् निर्गतान् दृष्ट्वा शकुन्तान् नियतव्रतः ।
सम्भावितात्मा सम्भाव्य भृशं प्रीतस्तदाऽभवत् ॥ ४०

स नद्यां समुपस्पृश्य तर्पयित्वा हुताशनम् ।
उद्यन्तमथादित्यम् अभ्यागच्छन्महातपाः ॥ ४१

सम्भाव्य चटकान् मूर्ध्नि जाजलिर्जपतां वरः ।
आस्फोटयत्तथाऽऽकाशे धर्मः प्राप्तो मयेति च ॥ ४२

अथान्तरिक्षे वागासीत् तां स शुश्राव जाजलिः ।
धर्मेण न समस्त्वं वै तुलाधारस्य जाजले ॥ ४३

वाराणस्यां महाप्राज्ञस् तुलाधारः प्रतिष्ठितः ।
सोऽप्येवं नार्हते वक्तुं यथा त्वं भाषसे द्विज ॥ ४४

सोऽमर्षवशमापन्नस् तुलाधारदिदृक्षया ।
पृथिवीमचरद्राजन् यत्रसायंगृहो मुनिः ॥ ४५

कालेन महता गच्छन् स तु वाराणसीं पुरीम् ।
विक्रीणन्तं च पण्यानि तुलाधारं ददर्श सः ॥ ४६

सोऽपि दृष्ट्वैव तं विप्रम् आयान्तं भाण्डजीवनः ।

समुत्थाय सुसंहृष्टस् स्वागतेनाभ्यपूजयत् ॥ ४७

तुलाधारः—

आयन्नेवासि विदितो मम ब्रह्मन् न संशयः ।
ब्रवीमि यत्तु वचनं तच्छृणुष्व द्विजोत्तम ॥ ४८

सागरानूपमाश्रित्य तपस्तप्तं त्वया महत् ।
न च धर्मस्य संस्थानं त्वं पुरा वेत्थ किञ्चन ॥ ४९

ततस्सिद्धस्य तपसा तव विप्र शकुन्तकाः ।
क्षिप्रं शिरस्यजायन्त ते च सम्भावितास्त्वया ॥ ५०

जातपक्षा यदा ते च गताश्च चरितुं ततः ।
मन्यमानस्ततो धर्मं चटकप्रभवं द्विज ॥ ५१

खे वाचं त्वं तदाऽश्रौषीर् मां प्रति द्विजसत्तम ।
अमर्षवशमापन्नस् ततः प्राप्तो भवानिह ॥ ५२

करवाणि प्रियं किं ते तत् प्रब्रूहि द्विजोत्तम ॥ ५२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥
[अस्मिन्नध्याये ५२॥ श्लोकाः]

---

## ॥ सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥



तुलाधारेण जाजलये धर्मरहस्योपदेशः ॥

भीष्मः—

इत्युक्तस्स तदा तेन तुलाधारेण धीमता ।
प्रोवाच वचनं धीमाञ् जाजलिर्जपतां वरः ॥ १

जाजलिः—

विक्रीणानस्सर्वरसान् सर्वगन्धांश्च वाणिज ।
वनस्पतीनोषधीश्च तेषां मूलफलानि च ॥ २

अध्यगा नैष्ठिकीं बुद्धिं कुतस्त्वामियमागता ।
एतदाचक्ष्व मे सर्वं निखिलेन महामते ॥ ३

भीष्मः—

एवमुक्तस्तुलाधारो ब्राह्मणेन यशस्विना ।
उवाच धर्मसूक्ष्माणि वैश्यो धर्मार्थतत्त्ववित् ॥ ४

जाजलिं क्लिष्टतपसं ज्ञानतृप्तस्तदा नृप ॥ ४॥

तुलाधारः—

वेदाहं जाजले धर्मं सरहस्यं सनातनम् ।
सर्वभूतेषु मैत्रत्वं पुराणं यं जना विदुः ॥ ५॥

अद्रोहेणैव भूतानाम् अल्पद्रोहेण वा पुनः ।

या वृत्तिस्स परो धर्मस् तेन जीवामि जाजले ॥ ६॥

परच्छिन्नैः काष्ठतृणैर् ममेदं शरणं कृतम् ।
[1]अलातं पद्मकं तुङ्गं गन्धांश्चोच्चावचानपि ॥ ७॥

रसांश्च तांस्तान् विप्रर्षे मद्यवर्जमहं बहून् ।
क्रीत्वा तु प्रतिविक्रीणे परहस्तादमायया ॥ ८॥

सर्वेषां यस्सुहृन्नित्यं सर्वेषां च हिते रतः ।
कर्मणा मनसा वाचा स धर्मं वेद जाजले ॥ ९॥

नाहं परेषां कर्माणि प्रशंसामि शपामि वा ।
[2]आकाशस्येव लोकस्य जाजले पश्य चित्रताम् ॥ १०॥

नानुरुध्ये विरुध्ये वा न द्वेष्मि न च कामये ।
समोऽस्मि सर्वभूतेषु पश्य मे जाजले व्रतम् ॥ ११॥

तुला मे सर्वभूतेषु समा तिष्ठति जाजले ।
इष्टानिष्टवियुक्तश्च प्रियद्वेषविवर्जितः ॥ १२॥

इति मां त्वं विजानीहि सर्वलोकस्य जाजले ।
समो मतिमतां श्रेष्ठ समलोष्टाश्मकाञ्चनः ॥ १३॥

यथाऽन्धबधिरोन्मत्ता उच्छ्वासपरमास्सदा ।
दैवेन पिहितद्वारास् सोपमा पश्यतो मम ॥ १४॥

---

1. ग—अलक्तं
2. ख—आविकस्येव पक्वस्य
आमकस्येव पक्वस्य  इति ख-कोशएव पाठान्तरमप्यस्ति

यथा वृद्धातुरकृशा निस्पृहा विषयान् प्रति ।
तथा कामार्थभोगेषु ममापि विगता स्पृहा ॥ १५॥

यदा चायं न बिभेति यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि तदा सिद्ध्यति वै द्विज ॥ १६॥

यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥ १७॥

न भूतो न भविष्योऽत्र न च धर्मोऽस्ति कश्चन ।
योऽभयस्सर्वभूतानां सम्प्राप्नोत्यभयं पदम् ॥ १८॥

यस्मादुद्विजते लोकस् सर्वो मृत्युमुखादिव ।
क्रूरवाक्यो दण्डपरस् स प्राप्नोति महद्भयम् ॥ १९॥

यथावद्वर्तमानानां वृद्धानां पुत्रपौत्रिणाम् ।
अनुवर्तामहे वृत्तम् अहिंस्राणां महात्मनाम् ॥ २०॥

प्रनष्टश्शाश्वतो धर्मस् सदाचारेण मोहितः ।
तेन वैद्यस्तपस्वी वा ज्ञानवान् वाऽपि मुह्यते ॥ २१॥

एवं यस्साधु दान्तश्च चरेदद्रोहचेतसा ।
आचाराज्ञाजले प्राज्ञः क्षिप्रं धर्ममवाप्नुयात् ॥ २२॥

नद्यावेगाद् यथा काष्ठम् उह्यमानं यदृच्छया ।
यदृच्छयैव काष्ठेन सन्धिं गच्छेत केनचित् ॥ २३॥

तत्रापराणि दारूणि संसृज्यन्ते ततस्ततः ।
तृणकाष्ठकरीषाणि कदाचिन्न समीक्षया ॥ २४॥

एवमेवायमाचारः प्रादुर्भूतो यतस्ततः ॥ २५

सहायवान् द्रव्यवान् यस् सुभगोऽपि यतस्ततः ।
ततस्तानेव कवयश् शास्त्रेपु प्रवदन्युत ॥ २६

कीर्त्यर्थमथ हृल्लेखाः पटवः कृत्स्ननिर्णयाः ॥ २६॥

यस्मान्नोद्विजते भूतं जातु किञ्चित् कथञ्चन ।
अभयं सर्वभूतेभ्यस् स प्राप्नोति महामते ॥ २७॥

[1]यस्मादुद्विजते विद्वन् सर्वलोको वृकादिव ।
क्रोशतस्तीरमासाद्य यथा सर्वे जलेचराः ॥ २८॥

[2]स भयं सर्वभूतेभ्यस् सम्प्राप्नोति महामते ॥ २९

तपोभिर्यज्ञदानैर्वा वाक्यैः प्रज्ञाश्रितैस्तथा ।
नाप्नोत्यभयदानस्य यद्यत् फलमुपाश्नुते ॥ ३०

लोके यस्सर्वभूतेभ्यो ददात्यभयदक्षिणाम् ।
[3]स सत्ययज्ञैरीजानः प्राप्नोत्यभयदक्षिणाम् ॥ ३१

न भूतानामहिंसाया ज्यायान् धर्मोऽस्ति कश्चन ॥ ३१॥

---

1. अ—अर्धद्वयं नास्ति
2. अ-ख—नास्तीदमर्धम्
3. घ—नास्तीदमर्धचतुष्टयम्

यस्मान्नोद्विजते दीनो जातु कश्चित् कथञ्चन ।
सोऽभयं सर्वभूतेभ्यस् सम्प्राप्नोति महामुने ॥ ३२॥

यस्मादुद्विजते लोकस् सर्पाद्वेश्मगतादिव ।
न स धर्ममवाप्नोति इह लोके परत्र च ॥ ३३॥

सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः ।
देवा अप्यस्य मुह्यन्ति अपदस्य पदैषिणः ॥ ३४॥

दानं भूताभयस्याहुस् सर्वदानेभ्य उत्तमम् ।
ब्रवीमि ते सत्यमिदं श्रद्धत्स्व यत जाजले ॥ ३५॥

[1]स एव सुभगो भूत्वा पुनर्भवति दुर्भगः ।
व्यापत्तिं कर्मणां दृष्ट्वा जुगुप्सन्ति जनास्सदा ॥ ३६॥

अकारणो हि नेहास्ति धर्मस्सूक्ष्मो हि जाजले ।
भूतभव्यार्थमेवेह धर्मप्रवचनं कृतम् ॥ ३७॥

सूक्ष्मत्वान्न स विज्ञातुं [2]शक्यस्ते बहुनिर्णयः ।
उपलभ्यान्तरे चान्यान् आचारान् नावबुध्यते ॥ ३८॥

ये च च्छिन्दन्ति वृक्षाणां ये च छिन्दन्ति संस्थितान् ।
कृषन्ति महतो भारान् बध्नन्ति दमयन्ति च ॥ ३९॥

हत्वा सत्त्वानि खादन्ति तान् कथं न विगर्हसे ॥ ४०

मानुषा मानुषानेव दासभोगेन भुञ्जते ।

1. ख—सन्नयो वा सुभगो    2. ख-ग—शक्यते बहुनिह्नवः

वधबन्धनिरोधेन कारयन्ति दिवानिशम् ॥ ४१
आत्मनश्चापि जानासि यद्दुःखं वधताडने ॥ ४१॥
पञ्चेन्द्रियेषु भूतेषु सर्वं वसति दैवतम् ।
आदित्यश्चन्द्रमा वायुर् ब्रह्मा प्राणः क्रतुर्यमः ॥ ४२॥
तानि जीवन्ति विक्रीय का मृतेषु विचारणा ॥ ४३
का तैले का घृते ब्रह्मन् मधुन्यप्स्वोषधीपु वा ॥ ४३॥
अदंशमशके देशे सुखसंवर्धितान् पशून् ।
तांश्च मातुः प्रियान् धुर्यान् आक्रम्य बहुधा नराः ॥ ४४॥
बहुदंशाकुलान् देशान् नयन्ति बहुकर्दमान् ॥ ४५
[1]वाहसम्पीडिता धुर्यास् सीदन्त्यविधिना परे ।
न मन्ये भ्रूणहत्याऽपि विशिष्टा तेन कर्मणा ॥ ४६
कृषिं साध्विति मन्यन्ते सा च वृत्तिस्सुदारुणा ।
भूमिं भूमिशयांश्चैव हन्ति काष्ठैरयोमुखैः ॥ ४७
तथैवानडुहो युक्तान् क्षुत्तृष्णाश्रमकर्शितान् ॥ ४७॥
अघ्न्या इति गवां नाम क एतान् हन्तुमर्हति ।
महच्चकाराकुशलं वृथा यो गां निहन्ति च ॥ ४८॥
ऋषयो यतयो ह्येते नहुषे प्रत्यवेदयन् ।
गां मातरं चाप्यवधीर् वृषभं च प्रजापतिम् । ४९॥

1. घ—अर्धपञ्चकं नास्ति

अकार्ये नहुषाकार्षीर् लप्स्यामस्त्वत्कृते व्यथाम् ॥ ५०

शतं चैकं च रोगाणां सर्वभूतेष्वपातयन् ।
ऋषयस्ते महाभागाः प्रशस्तास्ते न जाजले ॥ ५१

[1]भ्रूणघ्नं नहुषं चाहुर् न ते भोक्ष्यामहे वयम् ।
इत्युक्त्वा ते महात्मानस् सर्वे तत्त्वार्थदर्शिनः ॥ ५२

ऋषयो यतयश्शान्तास् तपसा प्रत्यषेधयन् ॥ ५२॥
ईदृशानशिवान् घोरान् आचारानिह जाजले ।
केवलाचरितत्वात्तु नैपुणान्नावबुध्यसे ॥ ५३॥

कारणाद्धर्ममन्विच्छेन्न लोकं विरसं चरेत् ॥ ५४

यो हन्याद्यश्च मां स्तौति तत्रापि शृणु जाजले ।
समौ तावपि मे स्यातां न हि मे स्तः प्रियाप्रिये ॥ ५५
एवमीदृशकं धर्मं प्रशंसन्ति मनीषिणः ॥ ५५॥

उपपत्त्या हि सम्पन्नो यतिभिश्चेह सेव्यते ।
सततं धर्मशीलैश्च नैपुणेनोपलक्ष्यते ॥* ५६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥
[अस्मिन्नध्याये ५६॥ श्लोकाः]

---

1. घ—अर्धचतुष्टयं नास्ति
* ख-कोशे अस्मिन्नध्याये ग्रन्थपातो बहुशो दृश्यते

## ॥ अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥

तुलाधारेण जाजलये धर्मरहस्योपदेशः ॥

जाजलिः—

अयं प्रवर्तितो धर्मस् तुलाधार यथा त्वया ।
स्वर्गद्वारप्रवृत्तिश्च भूतानामवरोत्स्यते ॥ १

कृषिभ्योऽन्नं च भवति ततस्त्वमुपजीवसि ।
पशुभिश्चौषधीभिश्च मर्त्या जीवन्ति वाणिज ॥ २

ततो यज्ञश्च भवति नास्तिक्यमिह जल्पसि ।
न हि वर्तेदयं लोको वार्तामुत्सृज्य केवलम् ॥ ३

तुलाधारः—

वक्ष्यामि जाजले वृत्तिं नास्मि ब्राह्मण नास्तिकः ।
न च यज्ञं विनिन्दामि यज्ञवित्तु सुदुर्लभः ॥ ४

नमो ब्राह्मण यज्ञाय ये च यज्ञविदो जनाः ।
स्वयज्ञं ब्राह्मणा हित्वा क्षत्रयज्ञमनुष्ठिताः ॥ ५

लुब्धैर्वित्तपरैर्ब्रह्मन् नास्तिकैस्सम्प्रवर्तितम् ।
वेदवेदार्थविज्ञानं सत्याभासमिवानृतम् ॥ ६

इदं देयमिदं देयम् इति नान्यच्चिकीर्षते ।
अतस्स्तैन्यं प्रभवति विकर्माणि च जाजले ॥ ७

तदेव सुकृतं हव्यं तेन तुष्यन्ति देवताः ।
नमस्कारेण हविषा स्वाध्यायैरौषधैस्तथा ॥ ८

पूजा स्याद्देवतानां हि यथाशास्त्रनिदर्शनम् ॥ ८॥

इष्टापूर्तात्तु साधूनां विदुषां जायते प्रजा ।
लुब्धेभ्यो जायते लुब्धस् समेभ्यो जायते समः ॥ ९॥

[1]यजमानं यथा चाहुर् ऋत्विजश्च तथा प्रजा ।
यज्ञात् प्रजा प्रभवति नभसोऽम्भो यथाऽमलम् ॥ १०॥

अग्नौ प्रास्ताऽऽहुतिर्ब्रह्मन्नादित्यमुपगच्छति ।
आदित्याज्जायते वृष्टिर् वृष्टेरन्नं ततः प्रजाः ॥ ११॥

यज्ञात् स्वनुष्ठितात् पूर्वे सर्वान् कामांश्च लेभिरे ।
अकृष्टपच्या पृथिवी आशीर्भिर्वीरुधोऽभवन् ॥ १२॥

न ते यज्ञेष्वात्मसु वा फलं पश्यन्ति किञ्चन ।
शंसमानाः फलं यज्ञे ये यजेरन् कथञ्चन ॥ १३॥

जानन्तश्च तथा साधु लुब्धा वित्तप्रयोजनाः ।
ते स्म पापकृतां लोकान् गच्छेयुः पापकर्मिणः ॥ १४॥

प्रमाणमप्रमाणेन यः कुर्यादशुभं नरः ।
स पापात्माऽकृतप्रज्ञस् सदैवेह द्विजोत्तम ॥ १५॥

कर्तव्यमिति कर्तव्यं वेत्ति यो ब्राह्मणो भयम् ।

1. ख—यजमानो यथापोऽहं; ग—यजमानं तथात्मानं

ब्राह्मे स वर्तते लोके नैतत्कर्तव्यता पुनः ॥ १६॥

त्रिगुणं च पुनः कर्म ज्याय इत्यनुशुश्रुम ।
सर्वभूतोपकारश्च फलभावे च संयमः ॥ १७॥

सत्ययज्ञा जपयज्ञा अलुब्धाश्चात्मवृत्तयः ।
उत्पन्नत्यागिनस्सर्वे जना आसन्नमत्सराः ॥ १८॥

क्षेत्रक्षेत्रज्ञतत्त्वज्ञास् स्वयज्ञपरिनिष्ठिताः ।
ब्राह्मं वेदमधीयन्ते तोषयन्त्यमरानपि ॥ १९॥

अखिलं दैवतं सर्वं ब्रह्मन् ब्रह्मणि संश्रितम् ।
तृप्यन्ति तृप्यतो देवास् तृप्तास्तृप्तस्य जाजले ॥ २०॥

यथाऽमृतरसैस्तृप्ता नाभिनन्दति किञ्चन ।
तथा प्रज्ञानतृप्तस्य नित्यतृप्तिस्सुखोदया ॥ २१॥

धर्मारामो धर्मपरः कृत्स्नं व्यवसितस्तथा ।
अस्ति नस्तत्त्वतो भूय इति प्राज्ञस्त्ववेक्षते ॥ २२॥

ज्ञानविज्ञानिनः केचित् परं पारं निनीषवः ।
अतीव तत् सदा पुण्यं पुण्याभिजनशोभितम् ॥ २३॥

यत्र गत्वा न शोचन्ति न च्यवन्ते व्यथन्ति च ।
ते तु तद्ब्रह्मणस्स्थानं प्राप्नुवन्तीह सात्त्विकाः ॥ २४॥

नैव ते स्वर्गमिच्छन्ति न यजन्ति तपोधनाः ।
सतां वर्त्मानुवर्तन्ते यथाबलमहिंसया ॥ २५॥

वनस्पतीनोषधीश्च फलमूलानि ते विदुः ।
न चैतानृत्विजो लुब्धा याजयन्ति [1]धनार्थिनः ॥ २६॥

स्वमेवार्थं विकुर्वाणा यज्ञांश्चक्रुरनृत्विजः ।
परिनिष्ठतकर्माणः प्रजानुग्रहकाङ्क्षिणः ॥ २७॥

प्रापयेयुः प्रजास्स्वर्गे स्वधर्माचरणेन वै ।
इति मे वर्तते बुद्धिस् समा सर्वत्र जाजले ॥ २८॥

प्रयुञ्जते येन यज्ञे सदा प्राज्ञा द्विजर्षभ ।
तेन ते देवयानेन पथा यान्ति महामुने ॥ २९॥

आवृत्तिस्तत्र चैकेषां नास्त्यावृत्तिर्मनीषिणाम् ।
उभौ तौ देवयानेन गच्छतो जाजले पथा ॥ ३०॥

स्वयं चैषामनड्वाहो युञ्जन्ति च वहन्ति च ।
स्वयमुस्राश्च दुह्यते मनस्सङ्कल्पसिद्धिभिः ॥ ३१॥

स्वयं यूपानुपादाय यजन्ते स्वाप्तदक्षिणाः ।
यस्तथा भावितात्मा स्यात् स कामाँल्लब्धुमर्हति ॥ ३२॥

ओषधीभिस्तथा ब्रह्मन् यजेरंस्ते न तादृशाः ।
श्रद्धयाऽहं पुरस्कृत्य तादृशं प्रब्रवीमि ते ॥ ३३॥

निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥ ३४॥

---

1. ग—फलार्थिनः

न श्रावयन् न च यजन् न ददद्ब्राह्मणेषु च ।
ग्राम्यां वृत्तिं लिप्समानः कां गतिं याति जाजले ॥ ३५॥

इदं तु दैवतं कृत्वा यथा यज्ञमवाप्नुयात् ।
[1-2]पुरोडाशो हि सर्वेषां पशूनां मेध्य उच्यते ॥ ३६॥

जाजलिः—

अथ स्म कर्मणा केन वाणिज प्राप्नुयात् सुखम् ।
महाप्राज्ञ वदस्वैतद् भृशं वै श्रद्दधामि ते ॥ ३७॥

तुलाधारः—

[3]उभयस्यानुपायज्ञो नैव यज्ञमथार्हति ।
आज्येन पयसा दध्ना सत्कृत्यामिक्षया त्वचा ॥ ३८॥

वालैः पादैश्च शृङ्गेण [4]सम्भवत्येव गोर्मुखम् ।
[5]पात्नीवतेन विधिना प्रकरोति नियोजयन् ॥ ३९॥

---

जाजलिः—

1. ख—न वै मुनीनां शृणुमः स्म तत्त्वं
पृच्छामि ते वाणिज कष्टमेतत् ।
पूर्वं पूर्वं चास्य नावेक्षमाणा
नातः परं तमृषयः स्थापयन्ति ॥
यस्मिन्नेवात्मतीर्थेन पशवः प्राप्नुयुर्मखम् । [अधिकः पाठः]

2. ख—अर्धद्वयं नास्ति

3. ख—उत यज्ञा उतायज्ञा मखं नार्हन्ति ते क्वचित् । [पाठान्तरम्]

4. ख—संभरत्येव गौर्मुखम्

5 ख-ग-घ—पत्नीव्रतेन क—पात्नीव्रतेन

[1]सर्वा नद्यस्सरस्वत्यस् सर्वे पुण्याश्शिलोच्चयाः ।
जाजले तीर्थमात्मेव मा स्म देशातिथिर्भवेत् ॥ ४०॥

एतानीदृशकान् धर्मान् आचरन्निह जाजले ।
कारणैर्धर्ममन्विच्छन् स लोकान् प्राप्नुते शुभान् ॥ ४१॥

भीष्मः—

एतानीदृशकान् धर्मास् तुलाधारः प्रशंसति ।
उपपत्त्या हि सम्पन्नान् नित्यं सद्भिर्निषेवितान् ॥ ४२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि शततमोऽध्यायः ॥ १०० ॥
[ अस्मिन्नध्याये ४२॥ श्लोकाः ]

---

1. ख—इष्टं तु दैवतं कृत्वा यथा यज्ञमवाप्नुयात् ।
पुरोडाशो हि सर्वेषां पशूनां मेध्य उच्यते ॥ [ अधिकः पाठः ]

## ॥ एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति जाजलितुलाधारसंवादानुवादः ॥

तुलाधारः—

सद्भिर्वा यदि वाऽसद्भिर् अयं पन्थास्समाश्रितः ।
प्रत्यक्षं क्रियतां साधु ततो ज्ञास्यसि यद्यथा ॥ १

एते शकुन्ता बह्वस् समन्ताद्विचरन्ति ह ।
तवोत्तमाङ्गे सम्भूताश् श्येनाश्चान्याश्च जातयः ॥ २

आह्वयैनान् महाब्रह्मन् विशमानांस्ततस्ततः ।
पश्येमान् हस्तपादेन श्लिष्टान् देहेन सर्वशः ॥ ३

सम्भावयन्ति पितरं त्वया सम्भाविताः खगाः ।
असंशयं पिता च त्वं पुत्रानाह्वय जाजले ॥ ४

भीष्मः—

ततो जाजलिना ते तु समाहूताः पतत्त्रिणः ।
वाचमुच्चारयन् दिव्यां धर्मस्य वचनात् किल ॥ ५

पक्षिणः—

अहिंसादि कृतं कर्म [1]इहैव च परत्र च ।
स्पर्धा निहन्ति वै धर्मं स हतो हन्ति तं नरम् ॥ ६

1. घ—इतोऽष्टौ पादा न सन्ति

[1]समानां श्रद्दधानानां सम्मतानां सुचेतसाम् ।
कुर्वतां यज्ञ इत्येव नायज्ञो जातु चेष्यते ॥ ७

श्रद्धा वै सात्त्विकी देवी सूर्यस्य दुहिता नृपु ।
[2]सावित्री प्रसवित्री च हविर्धानमयी ततः ॥ ८

[3]वाग्वृद्धं त्रायते श्रद्धा मनोवृद्धं च जाजले ।
श्रद्धावृद्धं वाङ्मनसी न यज्ञस्त्रातुमर्हति ॥ ९

अत्र गाथा ब्रह्मगीताः कीर्तयन्ति पुराविदः ॥ ९॥

शुचेरश्रद्दधानस्य श्रद्दधानस्य चाशुचेः ।
देवा [4]वृत्तममन्यन्त सदृशं यज्ञकर्मणि ॥ १०॥

श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्धुषेः ।
मीमांसित्वोभयं देवास् सममन्नमकल्पयन् ॥ ११॥

प्रजापतिस्तानुवाच विषमं कृतमित्युत ॥ १२

श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ।
भोज्यमन्नं वदान्यस्य न कदर्यस्य वार्धुषेः ॥ १३

अश्रद्दधान एवैको देवानां नार्हते हविः ।
तस्यैवान्नं न भोक्तव्यम् इति धर्मविदो विदुः ॥ १४

---

1. ख—समानामित्यादि सार्धैकादशश्लोकाःनोपलभ्यन्ते (See F. N. 2 at p. 1402)
2. ग—सविली प्रसविली च; घ—भविली प्रसविली च
3. घ—वृद्धमन्त्वा यति श्रद्धा
4. ग—वित्त

अश्रद्धा परमः पाप्मा श्रद्धा पापप्रमोचनी ।
जहाति पापं श्रद्धावान् सर्पो जीर्णामिव त्वचम् ॥ १५

ज्यायसी या पवित्राणां निवृत्तिश्श्रद्धया हि सा ।
[1]निवृत्तदोषशीलो यश् श्रद्धावान् पूत एव सः ॥ १६

किं तस्य तपसा कार्यं किं वृत्तेन किमात्मना ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धस्स एव सः ॥ १७

इति धर्मस्समाख्यातस् सद्भिर्धर्मार्थदर्शिभिः ।
वयं जिज्ञासमानास्त्वां सम्प्राप्ता धर्मदर्शनात् ॥ १८

स्पर्धां जहि महाप्राज्ञ ततः प्राप्स्यसि यत् परम् ॥ १८॥

जाजलिः—

[2]न वै मुनीनां शृणुमश्च तत्त्वं
पृच्छामि ते वाणिज तत्त्वमेतत् ।
पूर्वे हि पूर्वेऽप्यनवेक्षमाणा
नातः परं ते ऋषयस्स्थापयन्ति ॥ १९॥

यस्मिन्नेव तु तत्त्वेन पशवः प्राप्नुयुस्सुखम् ।
[3]पात्नीवतेन विधिना प्रकरोति नियोजयन् ॥ २०॥

श्रद्धावाञ् श्रद्दधानश्च [4]याम्यहं याहि वाणिज ॥ २१

---

1. घ—अनिवृत्तिर्दोषशीलः 2. ख—अर्धचतुष्टयं नास्ति
3. ग—पतिव्रतेन; घ—पत्नीवृत्तेन
4. ख—धर्मश्चैवं विवर्धति; ग—धर्म चैव हि; घ—धर्मश्चैवेह

तुलाधारः—

स्ववर्त्मनि स्थितश्चैव गरीयानेष भूतले ॥ २१॥

भीष्मः—

ततोऽचिरेण कालेन तुलाधारस्स एव च ।
दिवं गतौ महाप्राज्ञौ विहरेतां यथासुखम् ॥ २२॥

[1]स्वं स्वं स्थानमुपागम्य स्वकर्मफलनिर्जितम् ॥ २३

एवं बहुमतार्थं च तुलाधारेण भाषितम् ।
सम्यक् चैनमुपालब्धो धर्मश्चोक्तस्सनातनः ॥ २४

तस्य प्रख्यातवीर्यस्य श्रुत्वा वाक्यानि जाजलिः ।
तुलाधारस्य कौन्तेय शान्तिमेवान्वपद्यत ॥ २५

समानां श्रद्दधानानां युक्तानां च यथाबलम् ।
कुर्वतां यज्ञ इत्येव नायज्ञो जातु चेष्यते[2] ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकशततमोऽध्यायः ॥ १०१ ॥
[अस्मिन्नध्याये २६ श्लोकाः]

---

1. ख—अर्धसप्तकं नास्ति
2. ख—एवं बहुमतार्थं च तुलाधारेण भाषितम् ।
सम्यक्त्विदमुपालब्धं धर्मश्चोक्तस्सनातनः ॥
तस्य विख्यातशीलस्य श्रुत्वा वाक्यानि स द्विजः ।
तुलाधारस्य कौन्तेय शान्तिमेवान्वपद्यत ॥
समानां श्रद्दधानानां संमतानां सुचेतसाम् ।

पूर्वतोऽनुवृत्तम्—

कुर्वतां यज्ञ इत्येव न यज्ञो जातु चेष्यते ॥
श्रद्धाऽपि सात्त्विकी देवी सूर्यस्य दुहिता नृप ।
सावित्री प्रसवित्री च हविर्वाङ्मनसे ततः ॥
वाग्वृद्धं त्रायते श्रद्धा मनोवृद्धं च भारत ।
श्रद्धावृद्धं वाङ्मनसा न यज्ञस्त्रप्तुमर्हति ॥
अत्रगीतां ब्रह्मगीतां कीर्तयन्ति पुराविदः ।
शुचेरश्रद्दधानस्य श्रद्दधानस्य चाशुचेः ॥
देवाश्चित्तममन्यन्त सदृशं यज्ञकर्मणि ।
श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्धुषेः ॥
मीमांसित्वोभयं देवास् सममन्नमकल्पयन् ।
प्रजापतिस्तानुवाच विषमं कृतमित्युत ॥
श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ।
भोज्यमन्नं वदान्यस्य कदर्यस्य च वार्धुषेः ॥
अश्रद्दधान एवैको देवानां नार्हते हविः ।
तस्मै दानं न भोक्तव्यम् इति धर्मविदो विदुः ॥
अश्रद्धा परमः पाप्मा श्रद्धा पाप्मप्रमोचनी ।
जहाति चास्य तपसा कार्यं किं वृत्तेन किमात्मना ॥
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धस्स एव सः ।
इति धर्मस्समाख्यातः सद्भिर्धर्मार्थदर्शिभिः ॥
यथौपम्योपदेशेन किं कुर्वन् श्रोतुमिच्छसि ॥

[ अधिकः पाठः ]

इति शान्तिपर्वणि मोक्षधर्मे चतुश्शततमोऽध्यायः

## ॥ पञ्चाशदधिकाद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति हिंसात्यागपूर्वकं शरीराविरोधेन धर्माचरणचोदना ॥ १ ॥ विचख्युगीता कथनं च ॥ २ ॥

युधिष्ठिरः—

[1]शरीरमापदश्चैव न विदन्त्यविहिंसकाः ।
कथं यात्रा शरीरस्य निरारम्भस्य सेत्स्यते ॥ १

भीष्मः—

यथा शरीरं न ग्लायेन्नैव मृत्युवशं भवेत् ।
तथा कर्मसु वर्तेत समर्थो धर्ममाचरेत् ॥ २

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
प्रजानामुपकारार्थं गीतं राज्ञा विचख्युना ॥ ३

[2]भिन्नं स्थूलवृषं दृष्ट्वा विरावं च गवां भृशम् ।
[3]जगर्हे यज्ञवाटस्थः प्रेक्षमाणस्स पार्थिवः ॥ ४

स्वस्ति गोभ्योऽस्तु लोकेषु ततो निर्वचनं कृतम् ।
हिंसायां तु प्रवृत्तेयम् आशीरेषाऽनुकम्पिता ॥ ५

अव्यवस्थितमर्यादैर् विमूढैर्नास्तिकैर्नरैः ।

1. ख-ग-घ—अर्धचतुष्टयं नास्ति
2. ख—छिन्नष
3. ख—गोगृहे यज्ञवाटे च

संशयात्मभिरव्यक्तैर् हिंसा समनुदर्शिता ॥ ६

सर्वकर्मस्वहिंसां हि धर्मात्मा मनुरब्रवीत् ।
कामकाराद्विहिंसन्ति बहिर्वेद्यां पशून् नराः ॥ ७

तस्मात् प्रमाणतः कार्यो धर्मस्सूक्ष्मो विजानता ।
अहिंसा ह्येव सर्वेभ्यो धर्मेभ्यो ज्यायसी मता ॥ ८

उपोष्य संशितो भूत्वा हित्वा वेदकृतां श्रुतिः ।
आचार इत्यनाचारः कृपणाः फलहेतवः ॥ ९

यदि [1]च्छिन्दन्ति वृक्षांश्च यूपांश्चोद्दिश्य मानवाः ।
वृथा मांसानि खादन्ति नैष धर्मः प्रशस्यते ॥ १०

सुरा मत्स्यो मधुमांसम् आसवः कृसरौदनम् ।
धूर्तैः प्रवर्तितं ह्येतन्नैतद्वेदेषु कल्पितम् ॥ ११
कामान्मोहाच्च लोभाच्च लौक्यमेतत् प्रवर्तितम् ॥ ११॥

विष्णुमेव यजन्तीह सर्वयज्ञेषु ब्राह्मणाः ।
पायसैस्सुमनोभिश्च तस्यैव यजनं स्मृतम् ॥ १२॥

यज्ञियाश्चैव ये वृक्षा वेदेषु परिकल्पिताः ।
यच्चापि किञ्चित् कर्तव्यम् अन्यच्चोक्षैस्सुसंस्कृतम् ॥ १३॥
महासत्त्वैश्शुद्धभावैस् सर्वं देवार्हमेव तत् । १४

---

1. ख-घ—यज्ञांश्च

युधिष्ठिरः—

शरीरमापदश्चैव विवदन्त्यविहिंसकाः ।
कथं यात्रा शरीरस्य निरारम्भस्य सेत्स्यति ॥ १५

भीष्मः—

यथा शरीरं न ग्लायेन्नेयान्मृत्युवशं यथा ।
तथा कर्मसु वर्तेत समर्थो धर्ममाचरेत् ॥* १६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्विशततमोऽध्यायः ॥ १०२ ॥
[ अस्मिन्नध्याये १६ श्लोकाः ]

---

## ॥ एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति चिरकारिकोपाख्यानकथनम् ॥ १ ॥ चिरकारिककथाकथनं च ॥ २ ॥

---

युधिष्ठिरः—

कथं कार्यं परीक्षेत शीघ्रं वाऽथ चिरेण वा ।
सर्वथा कार्यदुर्गेऽस्मिन् भवान् नः परमो गुरुः ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
चिरकारेस्तु यत् पूर्वं वृत्तमङ्गिरसां कुले ॥ २

---

* ग–घ—नात्राध्यायसमाप्तिर्दृश्यते

चिरकारिक भद्रं ते भद्रं ते चिरकारिक ।
चिरकारी हि मेधावी नापराध्यति कर्मसु ॥ ३

चिरकारी महाप्राज्ञो गौतमस्याभवत् सुतः ।
चिरेण सर्वकार्याणि विमृशन् प्रतिपद्यते ॥ ४

चिरं सञ्चिन्तयत्यर्थं चिरं जाग्रच्चिरं स्वपन् ।
चिरं कार्याभिपत्तिश्च चिरकारी तथोच्यते ॥ ५

अलसग्रहणं प्राप्तो दुर्मेधा इति चोच्यते ।
बुद्धिलाघवयुक्तेन जनेनादीर्घदर्शिना ॥ ६

व्यभिचारे तु कस्मिंश्चिद् व्यतिक्रम्यापरान् सुतान् ।
पित्रोक्तः कुपितेनाथ जहीमां जननीमिति ॥ ७

स तथेति चिरेणोक्त्वा स्वभावाच्चिरकारिकः ।
विमृश्य चिरकारित्वाच् चिन्तयामास वै चिरम् ॥ ८

चिरकारिकः—

पितुराज्ञां कथं कुर्यां न हन्यां मातरं कथम् ।
कथं धर्मच्छले नास्मिन् निमज्जेयमसाधुवत् ॥ ९

पितुराज्ञा परो धर्मस् स्वधर्मो मातृरक्षणम् ।
अस्वतन्त्रं च पुत्रत्वं किं नु मामत्र पीडयेत् ॥ १०

स्त्रियं हत्वा मातरं च को नु जातु सुखी भवेत् ।
पितरं चाप्यवज्ञाय कः प्रतिष्ठामवाप्नुयात् ॥ ११

अनवज्ञा पितुर्युक्ता स्वधर्मो मातृरक्षणम् ।
युक्तक्षमाप्रभावौ तौ नातिवर्त्यौ कथं मया । १२

पिता ह्यात्मानमाधत्ते माता भर्त्रा ह्यनिन्दिता ।
शीलचारित्रगोत्रस्य धारणार्थं कुलस्य च ॥ १३

सोऽहमात्मा स्वयं पित्रा पुत्रत्वे च कृतः पुनः ।
विज्ञानमेतत् किं न स्याद् बुबुधे चात्मसम्भवम् ॥ १४

जातकर्मणि यत् प्राह पिता यच्चोपकर्मणि ।
पर्याप्तस्स दृढीकारः पितुर्गौरवनिश्चये ॥ १५

गुरोरग्र्यः परो धर्मः पोषणाध्यायनान्वितः ।
पिता यदाह धर्मस्स वेदेष्वपि सुनिश्चितः ॥ १६

प्रीतिमात्रं पितुः पुत्रस् सर्वं पुत्रस्य वै पिता ।
शरीरादीनि देयानि पिता त्वेकः प्रयच्छति ॥ १७

तस्मात् पितुर्वचः कार्यं न विचार्यं कदाचन ।
पातकान्यपि पूयन्ते पितुश्शासनकारिणः ॥ १८

[1]भोग्यभोगे प्रसवने सर्वलोकनिदर्शने ।
भर्त्रा चैव समायोगे सीमन्तोन्नयने तथा ॥ १९

आशिषस्ता भजन्त्येनं पुरुषं प्राह यत् पिता ॥ १९॥

पिता धर्मः पिता स्वर्गः पिता परमकं तपः ।

---

1. घ—भाग्यभोगे

पितरि प्रीतिमापन्ने सर्वाः प्रीणन्ति देवताः ॥ २०॥

निष्कृतिस्सर्वपापानां पिता यदभिनन्दति ॥ २१

मुच्यते बन्धनात् पुष्पं फलं वृन्ताच्च मुच्यते ।
[1]क्लिश्यन्नपि पितुस्स्नेहः पुत्रस्नेहं न मुञ्चति ॥ २२

एतद्विचिन्तितं तावत् पुत्रस्य पितृगौरवम् ।
पितुरल्पान्तरं स्थानं चिन्तयिष्यामि मातरम् ॥ २३

यो ह्ययं मयि सङ्घातो मर्त्यत्वे पाञ्चभौतिकः ।
अस्य मे जननी हेतुः पावकस्य यथाऽरणिः ॥ २४

माता देहारणिः पुंसां सर्वस्यार्तस्य निर्वृतिः ।
न च शोचति नाप्येष [2]स्थाविर्यमपकर्षति ॥ २५

श्रिया हीनोऽपि यो गेहम् अम्बेति प्रतिपद्यते ॥ २५॥

पुत्रपौत्रसमापन्नो जननीं यस्समाश्रितः ।
अपि [3]वर्षशतस्यान्ते हायनत्वे स वर्तते ॥ २६॥

समर्थं वाऽसमर्थं वा कृशं वाऽप्यकृशं तथा ।
रक्षत्येव सुतं माता नान्यः पोष्टा [4]तथाविधः ॥ २७॥

तदा स वृद्धो भवति तदा भवति दुःखितः ।

---

1. ख—क्लिश्यतोऽपि सुतस्नेहैः
2. ग-घ—स्ववीर्यं　　3. ग—वर्षसहस्रान्ते
4. ख—विधानतः

सदा शून्यं जगत् तस्य यदा मात्रा वियुज्यते ॥ २८॥

नास्ति मातृसमा च्छाया नास्ति मातृसमा गतिः ।
नास्ति मातृसमं त्राणं नास्ति मातृसमा [1]प्रपा ॥ २९॥

कुक्षौ सन्धारणाद्धात्री जननाज्जननी स्मृता ।
अङ्गानां वर्धनादम्बा वीरसूत्वेन वीरसूः ॥ ३०॥

शिशोश्शुश्रूषणाच्छुश्रूर् माता देहमनन्तरम् ।
चेतनावान् स को हन्याद् यस्य नासुषिरं शिरः ॥ ३१॥

दम्पत्योः पाणिसंश्लेषे योऽभिसन्धिः कृतः किल ।
तं माता वा पिता वेति भूतार्थो मातरि स्थितः ॥ ३२॥

माता जानाति यद्गोत्रं माता जानाति यस्य सः ।
मातुर्भरणमात्रेण प्रीतिस्स्नेहः पितुः प्रजाः ॥ ३३॥

पाणिबन्धं स्वयं कृत्वा सहधर्ममुपेत्य च ।
यदि याप्यन्ति पुरुषास् स्त्रियो नार्हन्ति याप्यताम् ॥ ३४॥

भरणाद्धि स्त्रिया भर्ता पालनाच्च पतिस्तथा ।
गुणस्यास्य निवृत्तौ तु न भर्ता न पतिस्तथा ॥ ३५॥

एवं स्त्री नापराध्नोति नर एवापराध्यति ।
व्युच्चरंश्च महादोषं नर एवापराध्यति ॥ ३६॥

स्त्रिया हि परमो भर्ता दैवतं परमं स्मृतम् ।

---

1. ख—गतिः; घ—हिता

तस्यात्मना तु सदृशम् आत्मानं परमं ददौ ॥ ३७॥

नापराधोऽस्ति नारीणां नर एवापराध्यति ।
सर्वकार्यपराधीना नापराध्यन्ति चाङ्गनाः ॥ ३८॥

यश्च नोक्तोऽथ [1]निर्देशस् स्त्रिया मिथुनवृत्तये ।
तस्य स्मारयतो व्यक्तम् अधर्मो नात्र संशयः ॥ ३९॥

एवं नारीं मातरं च गौरवे चाधिके स्थिताम् ।
अवध्यां तु विजानीयुः पशवोऽप्यविचक्षणाः ॥ ४०॥

देवतानां समावापम् एकस्थं पितरं विदुः ।
मर्त्यानां देवतानां च स्नेहादभ्येति मातरम् ॥ ४१॥

भीष्मः—

एवं विमृशतस्तस्य चिरकारितया बहु ।
[2]दीर्घः कालो व्यतिक्रान्तस् ततोऽस्याभ्यागमत् पिता ॥ ४२॥

मेधातिथिर्महाप्राज्ञो गौतमस्तपसि स्थितः ।
सम्मृश्य तेन कालेन पत्न्यास्तस्या व्यतिक्रमम् ॥ ४३॥

सोऽब्रवीद्दुःखसन्तप्तो भृशमश्रूणि वर्तयन् ।
[3]धूतधैर्यप्रसादेन पश्चात्तापमुपागतः ॥ ४४॥

गौतमः—

आश्रमं मम सम्प्राप्तस् त्रिलोकेशः पुरन्दरः ।

---

1. क-घ—निर्वेशं ग—निर्वेशः
2. घ—अर्धेऽयं नास्ति
3. ख-ग—श्रुतधैर्यप्रसादेन

अतिथिव्रतमास्थाय ब्राह्मण्यं रूपमास्थितः ॥ ४५॥

स तदा सान्त्वितो वाग्भिस् स्वागतेनाभिपूजितः ।
अर्घ्यं पाद्यं च न्यायेन मया हि प्रतिपादितम् ॥ ४६॥

परवानस्मि चेत्युक्तः [1]अनुशिष्टोऽस्मि तेन च ।
अत्र चाकुशले जाते स्त्रिया नास्ति व्यतिक्रमः ॥ ४७॥

एवं न स्त्री न चैवाहं नाध्वगस्त्रिदशेश्वरः ।
अपराध्यति धर्मस्य प्रमादस्त्वपराध्यति ॥ ४८॥

[2]ईर्ष्याजं व्यसनं प्राहुस् तेन चैवोर्ध्वरेतसः ।
ईर्ष्यया त्वहमाक्षिप्तो मग्नो दुष्कृतसागरे । ४९॥

हत्वा साध्वीं च नारीं च व्यसनित्वाच्च शासितम् ।
हन्तव्यत्वेन भार्यां च को नु मां तारयिष्यति ॥ ५०॥

अन्तरेण मयाऽऽज्ञप्तिर् अकारीत्युदारधीः ।
यद्यद्य चिरकारी स्यात् स मां त्रायेत पापकात् ॥ ५१॥

चिरकारिक भद्रं ते भद्रं ते चिरकारिक ।
यद्यद्य चिरकारी त्वं ततोऽसि चिरकारिकः ॥ ५२॥

त्राहि मां मातरं चैव तपो यच्चार्जितं मया ।
आत्मानं पातकेभ्यश्च ततोऽद्य चिरकारिकः ॥ ५३॥

---

1. ग—प्रीणयिष्यति ; ख—प्रणयिष्यति ; ब—प्रणशिष्यति
2. ख—अर्धचतुष्टयं नास्ति

सहजं चिरकारित्वम् अतिप्रज्ञतया तव ।
[1]सफलं तत्तथाद्यास्तु भवाद्य चिरकारिकः ॥ ५४॥

[2]चिरमाशासितो मात्रा चिरं गर्भेण धारितः ।
सफलं चिरकारित्वं कुरु त्वं चिरकारिक ॥ ५५॥

चिरायते तु सत्यात्मा चिरं स्वपिति धारितः ।
आवयोश्चित्तसन्तापम् अवेक्ष्य चिरकारिक ॥ ५६॥
[3]सफलं तत् प्रदद्यास्तु भवाद्य चिरकारिकः ॥ ५७

भीष्मः—

एवं स दुःखितो राजन् महर्षिर्गौतमस्तदा ।
चिरकारिं ददर्शाथ स्थितं पुत्रमथान्तिके ॥ ५८

चिरकारी तु पितरं दृष्ट्वा परमदुःखितः ।
शस्त्रं त्यक्त्वा तदा मूर्ध्ना प्रसादायोपचक्रमे ॥ ५९

गौतमस्तु ततो दृष्ट्वा शिरसा पतितं भुवि ।
पत्नीं चैवानिराकारां परामभ्यगमन्मुदम् ॥ ६०

न हि सा तेन सम्भेदं पत्नी नीता महात्मना ।
विजने चाश्रमस्थाने पुत्रश्चापि समाहितः ॥ ६१
हन्यामिति न वा चेति शस्त्रपाणौ सुते स्थिते ।
विनीतप्रसवत्वाच्च निवासे चात्मकर्मसु ॥ ६२

---

1. घ—अर्धचतुष्टयं नास्ति 2. ख—अर्धचतुष्टयं नास्ति
3. अ-क-ख-ग—नास्तीदमर्धम्

बुद्धिश्चासीत् सुतं दृष्ट्वा पितुश्चरणयोर्नतम् ।
शस्त्रग्रहणचापल्यं संवृणोति भयादिति ॥ ६३

ततः पित्रा चिरं स्तुत्वा चिरं चाघ्राय मूर्धनि ।
चिरं दोर्भ्यां परिष्वज्य चिरं जीवेत्युदाहृतः ॥ ६४

एवं स गौतमः पुत्रं प्रीतिहर्षमुदा युतः ।
अभिनन्द्य महाप्रज्ञ इदं वचनमब्रवीत् ॥ ६५

गौतमः—

चिरकारिक भद्रं ते चिरकारी चिरं भव ।
चिराय यदि ते सौम्य चिरमस्मि [1]सुदुःखितः ॥ ६६

गाथाश्चात्राब्रवीद्विद्वान् गौतमो मुनिसत्तमः ।
चिरकारिषु धीरेषु गुणोद्देशसमाश्रयाः ॥ ६७

चिरेण मित्रं बध्नीयाच् चिरेण च कृतं त्यजेत् ।
चिरेण हि कृतं मित्रं चिरं धारणमर्हति ॥ ६८

रागे गर्वे च माने च द्रोहे पापे च कर्मणि ।
[2]अप्रिये चैव कर्तव्ये चिरकारी प्रशस्यते ॥ ६९

बन्धूनां सुहृदां चैव [3]भृत्यानां स्त्रीजनस्य च ।
अव्यक्तेष्वपराधेषु चिरकारी प्रशस्यते ॥ ७०

भीष्मः—

एवं स गौतमस्तस्य प्रीतः पुत्रस्य भारत ।

---

1. ख—परीप्सितः 2. घ—आश्रये 3. ग—मान्यानां

कर्मणा तेन कौन्तेय चिरकारितया तया ॥ ७१

एवं सर्वेषु कार्येषु विमृश्य पुरुषस्ततः ।
चिरेण निश्चयं कृत्वा चिरेण प्रतिपद्यते ॥ ७२

चिरं धारयतो रोषं चिरं कर्म नियच्छतः ।
पश्चात्तापकरं कर्म न किञ्चिदुपपद्यते ॥ ७३

[1]चिरं वृद्धानुपासीत चिरमन्यांश्च पूजयेत् ।
चिरं धर्मं निषेवेत कुर्याच्चान्वेषणं चिरम् ॥ ७४

चिरमन्वास्य विद्वांसं चिरं शिष्टान् निषेव्य च ।
चिरं विनीय चात्मानं चिरं यात्यनवद्यताम् ॥ ७५

ब्रुवतश्च परस्यापि वाक्यं धर्मोपसंहितम् ।
चिरं पृष्टो हि यो ब्रूयाच् चिरं न परिभूयते ॥ ७६

उपास्य बहुलास्तस्मिन्नाश्रमे स महातपाः ।
समास्स्वर्गं गतो विप्रः पुत्रेण सहितस्तदा ॥ ७७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥
[अस्मिन्नध्याये ७७ श्लोकाः]

---

1. ख—चिरं भद्रानुपासीत चिरमभ्वास्य
   ग—चिरं वृत्तानुपासीत चिरं मान्यां

## ॥ द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति प्रजापालनप्रकारप्रतिपादकद्युमत्सेनसत्यवत्संवादानुवादः ॥

युधिष्ठिरः—

कथं राजा प्रजा रक्षेन्न च किञ्चित् [1]प्रतापयेत् ।
पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
द्युमत्सेनस्य संवादं राज्ञा सत्यवता सह ॥ २

अव्याहृतं व्याजहार सत्यवानिति नश्श्रुतिः ।
[2]वधाय नीयमानस्य पितुरेवानुशासनात् ॥ ३

सत्यवान्—

अधर्मतां याति धर्मो यात्यधर्मश्च धर्मताम् ।
वधो नाम भवेद्धर्मो नैतद्भवितुमर्हति ॥ ४

1. ख—प्रघातयेत्
2. ग—सत्यवान्—

सत्यभेदेन यच्छास्त्रं तत्कार्यं नान्यथा वधः ।
असमीक्ष्यैव कर्माणि नीतिशास्त्रं यथाविधि ॥
दस्यून् हिनस्ति वै राजा भूयसो नाप्यनागसः ।
भार्या माता पिता पुत्रो हन्यते पुरुषे हते ॥

[ अधिकः पाठः ]

द्युमत्सेनः—

कथं च त्ववधो धर्मोऽधर्मः को जातुचिद्भवेत् ।
दस्यवश्चेन्न हन्येरन् सत्यवन् सङ्करो भवेत् ॥ ५

ममेदमिति [1]चाप्येतत् प्रवर्तति कलौ युगे ।
लोकयात्रा न चैव स्याद् अथ चेद्वेत्थ शंस नः ॥ ६

सत्यवान्—

सर्व एव त्रयो वर्णाः कार्या ब्राह्मणबन्धनाः ।
धर्मपाशनिबद्धानां [2]नाल्पो व्यतिचरिष्यति ॥ ७

यो यस्तेषामपचरेत् तमाचक्षीत वै द्विजः ।
अयं मे न शृणोतीति तस्मिन् राजा प्रधारयेत् ॥ ८

[3]सत्त्वभेदेन यच्छास्त्रं तत् कुर्यान्नान्यथा वधः ।
[4]असमीक्ष्यैव कर्माणि नीतिशास्त्रं यथाविधि ॥ ९

दस्यून् हिनस्ति वै राजा भूयसो वाऽप्यनागसः ॥ ९॥

भार्या माता पिता पुत्रो दह्यन्ते पुरुषे हते ।
परेणापकृतो राजा तस्मात् सम्यक् प्रधारयेत् ॥ १०॥

असाधुश्चैव पुरुषो [5]लभते शीलमेकदा ।

---

1. ख—नास्त्यैतत्
2. ख—किञ्चिन्नापचरिष्यति
3. ख—तत्त्वभेदेन ; ग—तत्त्वभावेन
4. ग—अर्धंत्रयमत्र नास्ति इतः पूर्वमेवास्ति
5. क—अयं पादोऽनन्तरश्च न स्तः

असाधोश्चैव साधुभ्यश् शोभना जायते प्रजा ॥ ११॥

न मूलघातः कर्तव्यो नैष धर्मस्सनातनः ।
अपि खल्ववधेनैव प्रायश्चित्तं विधीयते ॥ १२॥

उद्वेजनेन बन्धेन विरूपकरणेन च ।
वधदण्डेन ते क्लेश्या न पुरोहितसम्पदा ॥ १३॥

यदा पुरोहितं वा ते पर्येयुश्शरणैषिणः ।
करिष्यामः पुनर्ब्रह्मन् न पापमिति वादिनः ॥ १४॥

तदा विसर्जनार्हास्स्युर् इति दण्डानुशासनम् ।
बिभ्रद्दण्डाजिनं मुण्डी ब्राह्मणोऽर्हति शासनम् ॥ १५॥

गरीयांसो गरीयांसम् अपराद्धाः पुनः पुनः ।
तदा विसर्गमर्हन्ति न यथा प्रथमे तथा ॥ १६॥

द्युमत्सेनः—

यत्र यत्रैव शक्यन्ते संयन्तुं समये प्रजाः ।
स तावान् प्रोच्यते धर्मो यावन्न ह्यतिलङ्घ्यते ॥ १७॥

अहन्यमानेषु पुनस् सर्वमेव पराभवेत् ॥ १८

पूर्वे पूर्वतरे चैव सुशास्या अभवञ्जनाः ।
[1]जन्तवस्सत्यभूयिष्ठा अल्पद्रोहाल्पमन्यवः ॥ १९

पुरा धिग्दण्ड एवासीद् वाग्दण्डस्तदनन्तरम् ।

---

1. ख—मृदवः ; घ—ऋभवः

आसीदादानदण्डोऽपि वधदण्डोऽद्य वर्तते ॥　　२०

वधेनापि न शक्यन्ते नियन्तुमपरे जनाः ॥　　२०॥

पात्रं श्मशानादादत्ते पिशाचं चापि दैवतम् ।
तेषु यस्समयं कश्चित् कुर्वीत हतबुद्धिषु ॥　　२१॥

नैव दस्युर्मनुष्याणां न देवानामिति श्रुतिः ।
न गन्धर्वपितॄणां च कः कस्येह [1]कथञ्चन ॥　　२२॥

सत्यवान्—

[2]तात शक्नोषि चेत् साधु परित्रातुमहिंसया ।
कस्यचिद्भूतभव्यस्य [3]लाभेनाथ तथा कुरु ॥　　२३॥

राजानो लोकयात्रार्थे तप्यन्ते परमं तपः ।
अपत्रपन्ति तादृग्भ्यस् तथावृत्ता भवन्ति च ॥　　२४॥

चित्रायमाणास्सुकृतैर् न कामाद्घ्नन्ति दुष्कृतम् ।
सुकृतेनैव राजानो भूयिष्ठं शासति प्रजाः ॥　　२५॥

श्रेयस्सु श्रेयसो ह्येवं वृत्तिं लोकोऽनुवर्तते ।
सदैवेति गुरोर्वृत्तिम् अन्ववर्तन्त मानवाः ॥　　२६॥

द्युमत्सेनः—

[4]आत्मानमसमाधाय समाधित्सति यः परान् ।

---

1. ख—न कश्चन　　2. ग—ताम
3. ख—लाभेनान्तं ;　　ग—लोभेनान्तं ;　　घ—लोभेनाथ
4. घ—नास्तीदमधर्मम्

विषयेष्विन्द्रियवशं मानवाः प्रहरन्ति तम् ॥ २७॥
आत्मैवादौ नियन्तव्यो दुष्कृतं सन्नियच्छता ।
दण्डयेच्च तथा दण्डैर् अपि बन्धूननन्तरान् ॥ २८॥
यो राज्ञो दम्भमोहेन किञ्चित् कुर्यादसाम्प्रतम् ।
सर्वोपायैर्नियम्यस्स तथा पापान्निवर्तते ॥ २९॥
[1]यो राज्ञः पापकृत् क्लेशं न महद्दुःखमृच्छति ।
वर्धन्ते तत्र पापानि धर्मो ह्रसति वै ध्रुवम् ॥ ३०॥
इति कारुण्यशीलो वै यो विद्वान् ब्राह्मणानुगः ।
इति चैवानुशिष्टोऽस्मि पूर्वैस्तातपितामहैः ॥ ३१॥
[2]आश्वासयद्भिस्सुभृशम् अनुक्रोशात् तथैव च ।
एतत् प्रथमकल्पेन राजा कृतयुगे जयेत् ॥ ३२॥
पादोनेनापि धर्मेण गच्छेत् त्रेतायुगे तथा ।
द्वापरे तु द्विपादेन पादेन च परे युगे ॥ ३३॥
तथा कलियुगे प्राप्ते राज्ञां दुश्चरितेन च ।
भवेत् कालविशेषेण कला धर्मस्य षोडशी ॥ ३४॥
अथ प्रथमकल्पेन सत्यवन् सङ्करो भवेत् ।

---

1. च—यो राज्ञो दम्भमोहेन किञ्चित्कुर्यादसांप्रतम् ।
सर्वोपायैर्नियम्यस्स तथा पापान्निवर्तते ॥ [अधिकः पाठः]

2. च—द्युमत्सेनः—
आत्मानं च समाधाय समाधिं संयतः पुमान् । [अधिकः पाठः]

आयुश्शक्तिं च कालं च निर्दिश्य तप आविशेत् ॥ ३५॥

सत्याय न तथा तेन जह्याद्धर्मफलं महत् ।
भूतानामनुकम्पार्थं मनुस्स्वायम्भुवोऽब्रवीत् ॥ ३६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥
[ अस्मिन्नध्याये ३६॥ श्लोकाः ]

---

## ॥ त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति फलानिच्छया यज्ञादेः कर्तव्यताप्रतिपादक-स्यूमरश्मिनामकगोकपिलसंवादानुवादः ॥

---

युधिष्ठिरः—

अविरोधेन भूतानां त्यागषाड्गुण्यकारितः ।
यस्स्यादुभयभाग्धर्मस् तन्मे ब्रूहि पितामह ॥ १

[1]गार्हस्थ्यस्य च धर्मस्य त्यागधर्मस्य चोभयोः ।
सुदूरसम्प्रस्थितयोः किंस्विच्छ्रेयः पितामह ॥ २

भीष्मः—

उभौ धर्मौ महाभाग उभौ परमदुर्धरौ ।

---

1. ख—अर्धद्वयं नास्ति

उभौ महाफलौ तौ तु सद्भिराचरितावुभौ ॥ ३
पुत्र ते वर्तयिष्यामि माहात्म्यमुभयोस्तयोः ।
शृणुष्वैकमनाः पार्थ च्छिन्नधर्मार्थसंशयम् ॥ ४

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
कपिलस्य च संवादं गोश्चैव भरतर्षभ ॥ ५

आम्नायमनुपश्यन् हि पुराणं शाश्वतं ध्रुवम् ।
नहुषः पूर्वमालेभे यष्टुं गामिति नश्श्रुतम् ॥ ६

तां नियुक्तामदीनात्मा सत्त्वस्थस्संयमे रतः ।
ज्ञानवान् नियताहारो ददर्श कपिलस्तथा ॥ ७

स बुद्धिमुत्तमां प्राप्तो नैष्ठिकीमकुतोभयाम् ।
परामशिथिलां सत्यां वेदा इत्यब्रवीत् सकृत् ॥ ८

तां गामृषिस्स्यूमरश्मिः प्रविश्य यतिमब्रवीत् ।

स्यूमरश्मिः—

[1]डम्भो वेदायते धर्मो धर्माः के न परे मताः ॥ ९

तपस्विनो धृतिमतश् श्रुतविज्ञानचक्षुषः ।
सर्वमार्षं हि मन्यन्ते व्याहृतं विदितात्मनः ॥ १०

तस्यैवं गततृष्णस्य विज्वरस्य निराशिषः ।
का विवक्षाऽस्ति वेदेषु निरारम्भस्य [2]सर्वशः ॥ ११

1. ग—अहो वेदा यतिमता धर्माः के न परे मताः । [पाठान्तरम्]
2. ग—योगिनः

कपिलः—

नाहं वेदान् विनिन्दामि न विवक्षाऽस्ति कर्हिचित् ।
पृथगाश्रमिणां कर्माण्येकार्थानीति नश्श्रुतम् ॥ १२

गच्छत्येव परित्यागी वानप्रस्थश्च गच्छति ।
गृहस्थो ब्रह्मचारी च उभौ तावपि गच्छतः ॥ १३

देवयाना हि पन्थानश् चत्वारश्शाश्वता मताः ।
नैषां ज्यायःकनीयस्त्वं फलेषूक्तं बलाबलम् ॥ १४

एवं विदित्वा सर्वार्थान् आलभेतेति वैदिकम् ।
नालभेतेति चान्यत्र नैष्ठिकी श्रूयते श्रुतिः ॥ १५

अनालम्भे ह्यदोषस्स्याद् आलम्भे दोष उत्तमः ।
एवं स्थितस्य शास्त्रस्य दुर्विज्ञेयं बलाबलम् ॥ १६

यदत्र किञ्चित् प्रत्यक्षम् अहिंसायाः परं मतम् ।
ऋते त्वागमशास्त्रेभ्यो ब्रूहि तद्यदि पश्यसि ॥ १७

स्यूमरश्मिः—

स्वर्गकामो यजेतेति सततं श्रूयते श्रुतिः ।
[1]फलं प्रकल्प्य पूर्वं हि ततो यज्ञः प्रतायते ॥ १८

अजश्चाश्वश्च मेषश्च गौश्च पक्षिगणाश्च ये ।
ग्राम्यारण्याश्चौषधयः प्राणस्यान्नमिति श्रुतिः ॥ १९

---

1. ख—अर्धद्वयं नास्ति

तथैवान्नं ह्यहरहस् सायंप्रातर्निरूप्यते ।
पशवश्चाथ धान्यानि यज्ञस्याङ्गमिति श्रुतिः ॥ २०

एतानि सह यज्ञेन प्रजापतिरकल्पयत् ।
तेन प्रजापतिर्देवान् यज्ञेनायजत प्रभुः ॥ २१

तस्माद्यागपरास्सर्वे प्राणिनस्सप्त सप्त च ॥ २१॥

[1]गौरजो मनुजो मेष अश्वाश्वतरगर्दभाः ।
एते ग्राम्यास्समाख्याताः पशवस्सप्त साधुभिः ॥ २२॥

सिंहा व्याघ्रा वराहाश्च महिषा वारणास्तथा ।
महिषी वानराश्चैव सप्तारण्यास्तथा स्मृताः ॥ २३॥

यज्ञेषूपाकृतं विश्वं प्राहुरुत्तमसंज्ञितम् ॥ २४

एतच्चैवाभ्यनुज्ञातं पूर्वैः पूर्वतरैस्तथा ।
को जातु न विचिन्वीत विद्वान् स्वां शक्तिमात्मनः ॥ २५

पशवश्च मनुष्याश्च द्रुमाश्चौषधिभिस्सह ।
स्वर्गमेवाभिकाङ्क्षन्ते न च स्वर्गोऽस्त्यृते मखात् ॥ २६

ओषध्यः पशवो वृक्षा वीरुदाज्यं पयो दधि ।
[2]हविर्भूमिर्दिशश्श्रद्धा कालश्चैतानि द्वादश ॥ २७

ऋचो यजूंषि सामानि ऋत्विजश्चापि षोडश ।

---

1. ख-ग-घ—अर्धचतुष्टयं नास्ति
2. ख—बलि

[1]अग्निर्ज्ञेयो गृहपतिस् स सप्तदश उच्यते ॥ २८

अङ्गान्येतानि यज्ञस्य यज्ञो मूलमिति श्रुतिः ॥ २८॥

आज्येन पयसा दध्ना शकृताऽऽमिक्षया त्वचा ।
वालैश्शृङ्गैश्च पादेन सम्भवत्येव गौर्मुखम् ॥ २९॥

एवं प्रत्येकशस्सर्वं यद्यदस्य विधीयते ।
यज्ञं वहति सम्भूय सहर्त्विग्भिस्सदक्षिणैः ॥ ३०॥

संहृत्यैतानि सर्वाणि यज्ञं निर्वर्तयन्त्युत ॥ ३१

यज्ञार्थानीह सृष्टानि यथार्षि श्रूयते श्रुतिः ।
एवं पूर्वे पूर्वतराः प्रवृत्ताश्चापि मानवाः ॥ ३२

न हिनस्ति ह्यालभते नाभिद्रुह्यति किञ्चन ।
यज्ञैर्यष्टव्यमित्येव यो यजत्यफलेप्सया ॥ ३३

यज्ञाङ्गान्यपि चैतानि यथोक्तान्यपि सर्वशः ।
विधिना विधियुक्तानि तारयन्ति परस्परम् ॥ ३४

आम्नायमार्षं पश्यामि यस्मिन् वेदाः प्रतिष्ठिताः ।
तं विद्वांसो न मुह्यन्ति ब्राह्मणस्यानुदर्शनात् ॥ ३५

ब्राह्मणप्रभवो यज्ञो ब्राह्मणार्पण एव च ।
अनुयज्ञं जगत् सर्वं यज्ञश्चानु जगत् सदा ॥ ३६

ओमिति ब्रह्मणो योनिर् नमस्स्वाहा स्वधा वषट् ।

---

1. ख—अभिज्ञेयो

यस्यैतानि प्रयुज्यन्ते यथाशक्ति कृतान्यपि ॥ ३७

न तस्य त्रिषु लोकेषु परलोकभयं विदुः ॥ ३७॥

इति वेदा वदन्तीह वृद्धाश्च परमर्षयः ॥ ३८

ऋचो यजूंषि सामानि [1]स्तोमाश्च विधिचोदिताः ।

यस्मिन्नेतानि सर्वाणि बर्हिरेव स वै द्विजः ॥ ३९

अग्न्याधेये यद्भवति यच्च सोमे सुते द्विज ।

यच्चेतरैर्महायज्ञैर् वेदैतद्भगवांस्तथा ॥ ४०

तस्माद्ब्रह्मन् यजेतैव याजयेच्चाविचारयन् ।

यजतो यज्ञविधिना प्रेत्य स्वर्गफलं महत् ॥ ४१

नायं लोकोऽस्त्ययज्ञानां परश्चेति विनिश्चयः ।

[2]वेदा वेदविदश्चैव प्रमाणमुभयं तथा ॥ ४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५३ ॥ ॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

[अस्मिन्नध्याये ४२ श्लोकाः]

---

1. घ—यज्ञाश्च ; ख-ग—स्तोभाश्च

2. ख—वेदवादविदश्चैव प्रमाणमुभयं तथा ।

## ॥ चतुःपञ्चाशदधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति गोकपिलसंवादानुवादः ॥

कपिलः—

एतावदनुपश्यन्तो यतयो यान्ति मार्गगाः ।
नैषां सर्वेषु लोकेषु कश्चिदस्ति व्यतिक्रमः ॥ १

निर्द्वन्द्वा निर्नमस्कारा निराशीर्बन्धना बुधाः ।
विमुक्तास्सर्वपापेभ्यश् चरन्ति शुचयोऽमलाः ॥ २

अपवर्गेऽथ सन्त्यागे बुद्धौ च कृतनिश्चयाः ।
ब्रह्मिष्ठा ब्रह्मभूताश्च ब्रह्मण्येव कृतालयाः ॥ ३

विशोका नष्टरजसस् तेषां लोकास्सनातनाः ।
तेषां गतिं परां प्राप्य गार्हस्थ्ये किं प्रयोजनम् ॥ ४

स्यूमरश्मिः—

यद्येषां परमा निष्ठा यद्येषां परमा गतिः ।
गृहस्थाननुपाश्रित्य नाश्रमोऽन्यः प्रवर्तते ॥ ५

यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
एवं गार्हस्थ्यमाश्रित्य वर्तन्त इतराश्रमाः ॥ ६

गृहस्थ एव यजते गृहस्थस्तप्यते तपः ।
गार्हस्थ्यमस्य सर्वस्य मूलं यत् किञ्चिदेव हि ॥ ७

प्रजनाद्यभिनिर्वृत्तास् सर्वे प्राणभृतो मुने ।
प्रजनश्चान्यतोऽन्यत्र न कथञ्चन विद्यते ॥ ८

यथा स्युर्बहिरोषध्यो बहिरन्यस्तथा द्विज ।
ओषधिभ्यो बहिर्यस्मात् प्राणी कश्चिन्न विद्यते ॥ ९

कस्यैषा वाग्भवेत् सत्या मोक्षो नास्ति गृहादिति ।
अश्रद्दधानैरप्राज्ञैस् सूक्ष्मदर्शनवर्जितैः ॥ १०

[1]अलसैर्नीरसैरज्ञैस् तप्यमानैस्स्वकर्मभिः ।
श्रमस्योपरमो दृष्टः प्रव्रज्या नाम पण्डितैः ॥ ११

त्रैलोक्यस्यैव हेतुर्हि मर्यादा शाश्वती ध्रुवा ।
ब्राह्मणो नाम भगवाञ् जन्मप्रभृति पूज्यते ॥ १२

प्राग्गर्भाधानमन्त्रा हि प्रवर्तन्ते द्विजातिषु ।
[2]अविश्वस्तेषु वर्तन्ते विश्वस्तेष्वपि संश्रिताः ॥ १३

[3]दानं पुनस्सङ्ग्रहणं [4]संश्रितं पात्रभोजनम् ।
दानं गवां पशूनां हि पिण्डानां चाप्सु मज्जनम् ॥ १४

अर्चिष्मन्तो बर्हिषदः क्रव्यादाः पितरस्स्मृताः ।
मृतस्याप्यनुमन्यन्ते मन्त्रा मन्त्राश्च कारणम् ॥ १५

---

1. ख—निराशैरलसैः श्रान्तैः ; ग—अलसैर्निराशैरल्पज्ञैः
2. घ—अर्धसप्तकं नास्ति
3. ख—दाहः पुनस्सञ्चयनं
4. ख—संस्थिते पात्रभोजनम् ; ग—संश्रिताः पात्रभोजनाः

एवं क्रोशत्सु वेदेषु कुतो मोक्षोऽस्ति कस्यचित् ॥　　१५॥

ऋणवन्तो यदा मर्त्याः पितृदेवद्विजातिषु ।
[1]क्रियाविहीनैरलसैः पितरो ह्यपलापिताः ॥　　१६॥

वेदवादापरिज्ञानं सत्याभासमिवानृतम् ॥　　१७

न वै पापैर्हीयते गृह्यते वा
　　यो ब्राह्मणो यजते वेदशास्त्रैः ।
ऊर्ध्वं यजन् पशुभिस्सार्धमेति
　　ततः पुनस्तर्कयते न कामम् ॥　　१८

न वेदानां परिभवान्न शाठ्येन न मायया ।
महत् प्राप्नोति पुरुषो ब्रह्म ब्रह्मणि विन्दति * ॥　　१९

कपिलः—

दर्शश्च पूर्णमासश्च अग्निहोत्रं च धीमताम् ।
चातुर्मास्यानि चैवासंस् तेषु यज्ञस्सनातनः ॥　　२०

अनारम्भास्सुधृतयश् शुचयो ब्रह्मसंश्रिताः ।
ब्राह्मणा एव ते देवांस् तर्पयन्त्यमृतैरिव ॥　　२१

सर्वभूतात्मभूतस्य सर्वं ज्ञानेन पश्यतः ।
देवाऽपि मार्गे मुह्यन्ति ह्यपदस्य पदैषिणः ॥　　२२

---

1. ख—श्रिया+पण्डितैरपलापितम्
* ख-कोशेऽसैवाध्यायसमाप्तिर्दृश्यते

चतुर्द्वारं पुरुषं चतुर्मुखं
    चतुर्मुखो नैनमुपैति निन्दा ।
बाहुभ्यां चैवमुदरादुपस्थाद्
    वाचि द्वाराणि द्वारपालो बुभूषेत् ॥ २३

[1]नाक्षैर्दीव्येन्नाददीतान्यवित्तं
    नायोनिजस्येह ध्रुवं प्रगृह्णेत् ।
क्रुद्धो नैव प्रहरेत विद्वांस्
    तथाऽस्य तत् पाणिद्वारं सुगुप्तम् ॥ २४

नाक्रोशमृच्छेन्न मृषा वदेच्च
    न पैशुनं जनवादं च कुर्यात् ।
तस्य व्रतं मितभाष्यप्रमत्तस्
    तथाऽस्य वाग्द्वारमथो सुगुप्तम् ॥ २५

नानाशनस्स्यान्न महाशनस्स्या-
    न्न लोलुपस्साधुरनागसस्स्यात् ।
यात्रार्थमाहारमिहाददीत
    तथाऽस्य तज्जाठरद्वारगुप्तिः ॥ २६

---

1. घ—अर्धचतुष्टयं नास्ति
    किन्तु—नातुर्दिव्यैर्नादधीता प्रमत्ताः
        तथाऽस्य वा द्वारमथोनुगुप्तम् । [इति वर्तते]

न वीरपत्नीं विहरेत नारीं
　　न चैव भार्यामनृतावाह्वयेत ।
भार्याव्रतं ह्यात्मनि धारयेत
　　तथाऽस्योपस्थद्वारगुप्तिर्भवेत ॥　　२७

द्वाराणि यस्य सर्वाणि सुगुप्तानि मनीषिणः ।
उपस्थमुदरं पाणी वाक्चतुर्थी स वै द्विजः ॥　　२८

मोघान्यगुप्तद्वारस्य सर्वाण्येव भवन्त्युत ।
किं तस्य तपसा कार्यं किं यज्ञेन किमात्मना ॥　　२९

अनुत्तरीयवसनम् अनुपस्तीर्णशायिनम् ।
बाहूपशायिनं शान्तं तं देवा ब्राह्मणं विदुः ॥　　३०

द्वन्द्वारामेषु सर्वेषु य एको रमते मुनिः ।
परेषामननुध्यायंस् तं देवा ब्राह्मणं विदुः ॥　　३१

येन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ।
गतिज्ञस्सर्वभूतानां तं देवा ब्राह्मणं विदुः ॥　　३२

अभयं सर्वभूतेभ्यस् सर्वेषामभयं यतः ।
सर्वभूतात्मभूतो यस् तं देवा ब्राह्मणं विदुः ॥　　३३

नान्तरेणानुजानाति वेदानां यः क्रियाफलम् ।
अनुज्ञाय च तत् सर्वम् अन्यद्रोचयते फलम् ॥　　३४

[1]स्वकर्मभि[2]स्संश्रितानां तपो घोरत्वमागमत् ।
तं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवम् ॥ ३५

अशक्नुवद्भ्यश्चरितुं किञ्चिद् धर्मेण सूचितम् ।
निरापद्धर्म आचारो ह्यप्रमादोऽपराभवः ॥ ३६

फलवन्ति च कर्माणि व्युष्टिमन्ति ध्रुवाणि च ।
विगुणानि च पश्यन्ति तथा नैकानि केचन ॥ ३७

गुणाश्चात्र तु दुर्ज्ञेया [3]ज्ञाताश्चापि सुदुष्कराः ।
अनुष्ठिताश्चान्तवन्त इति त्वमनुपश्यसि ॥ ३८

स्यूमरश्मिः—

यथा च [4]वेदप्रामाण्यं त्यागश्च सफलो यथा ।
तौ पन्थानावुभौ व्यक्तौ भगवंस्तद्ब्रवीहि मे ॥ ३९

कपिलः—

प्रत्यक्षमिव पश्यन्तो भवन्तस्सत्पथे स्थिताः ।
प्रत्यक्षं तु किमत्रास्ति यद्भवन्त उपासते ॥ ४०

स्यूमरश्मिः—

स्यूमरश्मिरहं विद्वन् जिज्ञासार्थमिहागतः ।
श्रेयस्कामः प्रत्यवोचम् आर्जवान्न विवक्षया ॥ ४१

---

1. ख-घ—अर्धचतुष्टयं नास्ति
2. क-ग—स्संशितानां
3. ख—ज्ञातारश्च सुदुर्धराः
4. क-घ—देवब्राह्मण्यं

इमं च संशयं घोरं भगवान् प्रब्रवीतु मे ॥　४१॥

प्रत्यक्षमिव पश्यन्तो भवन्तस्सत्पथे स्थिताः ।
किमत्र प्रत्यक्षतमं भगवन्त उपासते ॥　४२॥

अन्यत्र [1]धर्मशास्त्रेभ्य आगमार्थं यथागमम् ।
आगमो वेदवादास्तु तर्कशास्त्राणि चागमः ॥　४३॥

यथागम[2]मुपासीत आगमस्तत्र सिध्यति ।
सिद्धिः प्रत्यक्षरूपा च दृश्यत्यागमनिश्चयात् ॥　४४॥

नौर्नावीव निबद्धा हि स्रोतसा सन्निबन्धना ।
ह्रियमाणा कथं विप्र कुबुद्धिं तारयिष्यति ॥　४५॥

[3]एवं ब्रवीतु भगवान् उपपन्नो ह्यधीहि भो ॥　४६

नैव त्यागी न सन्तुष्टो नाशोको न निरामयः ।
नानिर्विवित्सो नावृत्तो नापवृत्तोऽस्ति कश्चन ॥　४७

भवन्तोऽपि च हृष्यन्ति शोचन्ति च यथा वयम् ।
इन्द्रियार्थाश्च भवतां समानास्सर्वजन्तुषु ॥　४८

एवं चतुर्णां वर्णानाम् आश्रमाणां प्रवृत्तिषु ।
[4]एकमालम्बमानानां निर्णये किं निरामयम् ॥　४९

---

1. ख-ग—तर्कशा ;　घ—कर्म
2. ख—मुपासीनास्सिध्यन्ति ब्रह्मणि श्रिताः
3. अ-क-ग-घ—नास्तीदमर्धम्
4. अ—अर्धंद्वयं नास्ति

[1]एतद्ब्रवीतु भगवान् उपपन्नोऽस्म्यधीहि भो । ४९॥

कपिलः—

यद्यदाचरते शास्त्रम् अर्थ्यं सर्वप्रवृत्तिषु ।
यस्य यत्र ह्यनुष्ठानं तस्य तत्तु निरामयम् ॥ ५०॥

सर्वं प्रापयति ज्ञानं यो ज्ञानं ह्यनुवर्तते ।
ज्ञानादपेता या वृत्तिस् सा विनाशयति प्रजाः ॥ ५१॥

भवन्तो ज्ञानिनो नित्यं सर्वतश्च निरामयाः ।
ऐकात्म्यं नाम कश्चिद्धि कदाचिदभिपद्यते ॥ ५२॥

शास्त्राण्यबुद्ध्वा तत्त्वेन केचिद्वादबलाज्जनाः ।
कामद्वेषाभिभूतत्वाद् अहङ्कारवशं गताः ॥ ५३॥

याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ।
ब्रह्मस्तेना निरारम्भा अपक्वमतयोऽशिवाः ॥ ५४॥

नैर्गुण्यमेव पश्यन्ति न गुणाननुयुञ्जते ॥ ५५
तेषां तमश्शरीराणां तम एव परायणम् ॥ ५५॥

[2]यो यथाप्रकृतिर्जन्तुः प्रकृतेस्स्याद्वशानुगः ।
तस्य क्रोधश्च कामश्च द्वेषो दम्भोऽनृतं मदः ॥ ५६॥

नित्यमेवानुवर्तन्ते गुणाः प्रकृतिसम्भवाः ॥ ५७
एतद्बुद्ध्वाऽनुपश्यन्तस् सन्त्यजेयुश्शुभाशुभम् ।

---

1. ख—नास्तीदमर्धम  2. ख—नास्तीदमर्धम्

परां गतिमभीप्सन्तो यतयस्संयमे रताः ॥　　५८

स्यूमरश्मिः—

सर्वमेतत् त्वया ब्रह्मञ् शाश्वतः परिकीर्तितम् ।
न ह्यविज्ञाय शास्त्रार्थं प्रवर्तन्ते प्रवृत्तयः ॥　　५९

यः कश्चिच्छ्याव्य आचारः स वै शास्त्रमिति श्रुतिः ।
[1]यदन्याय्यमशास्त्रं तद् इत्येषा श्रूयते श्रुतिः ॥　　६०

न प्रवृत्तिर्ऋते शास्त्रात् काचिदस्तीति निश्चयः ।
यदन्यद्वेदवादेभ्यस् तदुच्छास्त्रमिति श्रुतिः ॥　　६१

कपिलः—

शास्त्रादपेता भ्रश्यन्ति बह्वोऽत्यर्थमानिनः ।
[2]शास्त्रे दोषान्न पश्यन्ति इह चामुत्र चापरे ॥　　६२

अविज्ञानहतप्रज्ञा हीनप्रज्ञास्तमोवृताः ॥　　६२॥

शक्यं त्वेकेन मुक्तेन कृतकृत्येन सर्वशः ।
पिण्डमात्रमपाश्रित्य चरितुं सर्वतो दिशम् ॥　　६३॥

नात्यन्तं वन्दमानेन सक्तेन विदितात्मना ।
वेदवादं समाश्रित्य मोक्षोऽस्तीति प्रभाषितुम् ॥　　६४॥

इदं तु दुष्करं कर्म कुटुम्बमभिसंश्रितम् ।
दानमध्ययनं यज्ञः प्रजासन्तानमार्जवम् ॥　　६५॥

---

1. ख—अर्धद्वयं नास्ति　　2. ग—अर्धसप्तकं नास्ति

स्यूमरश्मिः—

यद्येतदेवं कृत्वाऽपि न विमोक्षोऽस्ति कस्यचित् ।
धिक्कर्तारं च कार्यं च श्रमश्चात्र निरर्थकः ॥ ६६॥

नास्तिक्यमन्यथा च स्याद् वेदानां पृष्ठतः क्रिया ।
एतस्यानन्त्यमिच्छामि भगवञ् श्रोतुमञ्जसा ॥ ६७॥

तथ्यं वदस्व मे ब्रह्मन्नुपसन्नोऽस्म्यधीहि भोः ।
यथा ते विदितो मोक्षस् तथेच्छाम्युपशिक्षितुम् ॥ ६८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि चतुःपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५४ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥
[अस्मिन्नध्याये ६८॥ श्लोकाः]

---

## ॥ पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति गोकपिलसंवादानुवादः ॥



कपिलः—

वेदाः प्रमाणं लोकानां न वेदाः पृष्ठतः कृताः ।
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ॥ १

शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।

शरीर[1]मेतत् कुरुते यद्वैतत् कुरुते तनुम् ॥　　२

कृतशुद्धशरीरो हि पात्रं भवति ब्राह्मणः ।
आनन्त्यमनुचिन्त्यैवं कर्मणस्तद्ब्रवीमि ते ॥　　३

निरागममनैतिह्यं प्रत्यक्षं लोकसाक्षिकम् ।
धर्म इत्येव ये यज्ञं वितन्वन्ति निराशिषः ॥　　४

उत्पन्नत्यागिनोऽलुब्धाः [2]कोपासूयाविवर्जिताः ।
[3]धनिनामेष वै पन्थास् तीर्थेषु प्रतिपादनम् ॥　　५

अनाश्रिताः पापकृत्यं कदाचि[4]द्ब्रह्मयोनितः ।
मनस्सङ्कल्पसंसिद्धा विशुद्धाज्ञाननिश्चयाः ॥　　६

अक्रुध्यन्तोऽनसूयन्तो निरहङ्कारमत्सराः ।
[5]ज्ञाननिष्ठास्त्रिशुक्लाश्च सर्वभूतहिते रताः ॥　　७

आसन् गृहस्था भूयिष्ठं ह्यपक्रान्तास्स्वकर्मसु ।
राजानश्च तथा युक्ता ब्राह्मणाश्च यथाविधि ॥　　८

समा ह्यार्जवसम्पन्नास् सन्तुष्टा ज्ञाननिश्चयाः ।
प्रत्यक्षधर्माश्शुचयश् श्रद्दधानास्तपोधनाः ॥　　९

---

1. ख—मेकीकुरुते यद्वेदे कुरुते मतिम्
2. ख-ग—क्रियासूया ;　　अ-क—कृपा
3. ख—दानानामेष वै पार्थ ;　　ग—धन्यानामेष ;　　घ—धनानामेष
4. ख-ग—त्कर्मयोनितः
5. घ—नासीदमर्षम्

पुरस्ताद्भावितात्मानो यथावच्चरितव्रताः ।
चरन्ति धर्मं कृच्छ्रेऽपि [1]कृच्छ्रे चापि सुसंहिताः ॥ १०

संहत्य धर्मं चरतां पुराऽऽसीत् सुखमेव तत् ।
तेषां नासीद्विधातव्यं प्रायश्चित्तं कदाचन ॥ ११

[2]सत्यं हि धर्ममास्थाय दुराधर्षतमा मताः ।
न मात्रामनुरुध्यन्ते न धर्मच्छलमन्ततः ॥ १२

य एव प्रथमः कल्पस् तमेवात्र चरन् महान् ॥ १२॥

अस्यां स्थितौ स्थितानां हि प्रायश्चित्तं न विद्यते ।
[3]यदा तु दुर्बलात्मानः प्रायश्चित्तं तदा भवेत् ॥ १३॥

एत एवंविधाः प्राहुः ब्राह्मणा यज्ञवाहनाः ।
त्रैविद्यवृद्धाश्शुचयो वृत्तवन्तो यशस्विनः ॥ १४॥

यजन्तेऽहरहर्यज्ञैर् निराशीर्बन्धना बुधाः ।
तेषां यज्ञाश्च वेदाश्च कर्माणि च यथागमम् ॥ १५॥

आगमश्च यथाकामं सङ्कल्पश्च यथाव्रतम् ॥ १६

अपेतकामक्रोधानां प्रकृत्या संशितात्मनाम् ।
[4]ऋजूनां शमनित्यानां स्वेषु कर्मसु वर्तताम् ॥ १७

---

1. ख-ग—दुर्गे वापि सु
2. ख—दुर्बलानामनुत्पन्नं प्रायश्चित्तमिति श्रुतिः । [ अधिकः पाठः ]
3. ख—नार्थदमधर्म्
4. घ—साधूनां

सर्वमानन्त्यमेवासीद् इति नश्शाश्वती श्रुतिः ॥ १७॥

तेषामदीनसत्त्वानां दुश्चराचारकर्मणाम् ।
स्वकर्मभिस्संशितानां तपो घोरत्वमागतम् ॥ १८॥

तं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवम् ।
अशक्नुवद्भिश्चरितुं किञ्चिद्धर्मेषु सूचितम् ॥ १९॥

निरापद्धर्म आचारो ह्यप्रमादोऽपराभवः ।
सर्ववर्णेषु यत्तेषु नासीत् कश्चिद्व्यतिक्रमः ॥ २०॥

धर्ममेकं चतुष्पादम् आश्रिता ये नरा विभो ।
तं सन्तो विधिवत् प्राप्य गच्छन्ति परमां गतिम् ॥ २१॥

गृहेभ्य एव निष्क्रम्य वनमन्ये समाश्रिताः ।
गृहमेवाभिसंश्रित्य ततोऽन्ये ब्रह्मचारिणः ॥ २२॥

[1]व्यस्तमेकं चतुर्धा तु ह्याश्रमं ब्राह्मणा विदुः ॥ २३

[2]सर्वे सर्वत्र तिष्ठन्तो गच्छन्ति परमां गतिम् ।
एत एवं विधाः प्राहुः पुराणा ब्रह्मचारिणः ॥ २४

त एते दिवि दृश्यन्ते ज्योतिर्भूता द्विजातयः ।
नक्षत्राणीव धिष्ण्येषु बहवस्तारकागणाः ॥ २५

आनन्त्यमुपसम्प्राप्ता वसन्तो दिवि देववत् ॥ २५॥

---

1. ख—धर्ममेकं चतुष्पादमाश्रमं ब्राह्मणा विदुः । [पाठान्तरम्]
2. ख—आनन्त्यं ब्रह्मणस्थानं ब्राह्मणो नाम निश्चयः । [पाठान्तरम्]

यद्वा गच्छन्ति संसारं पुनर्योनिषु तादृशाः ।
न लिप्यन्ते पापकृद्भिः कदाचित् कर्मयोनितः ॥ २६॥

एवं युक्तो ब्राह्मणस्स्याद् अन्यो [1]ब्राह्मणको भवेत् ॥ २७

कर्मैव पुरुषस्याहुश् शुभं वा यदि वाऽशुभम् ।
एवं पक्वकषायाणाम् आनन्त्येन श्रुतेन च ॥ २८

सर्वमानन्त्यमेवासीद् इति नश्शाश्वती श्रुतिः ॥ २८॥

तेषामपेततृष्णानां निर्णिक्तानां शुभात्मनाम् ।
चतुर्थ औपनिषदो धर्मस्साधारणस्स्मृतः ॥ २९॥

स सिद्धैस्सेव्यते नित्यं ब्राह्मणैर्नियतात्मभिः ।
सन्तोषमूलस्त्यागात्मा ज्ञानाधिष्ठान उच्यते ॥ ३०॥

अपवर्गमतो नित्यो यतिधर्मस्सनातनः ॥
साधारणः केवलो वा यथाबलमुपास्यते ॥ ३१॥

गच्छन्तो बलिनः क्षेमं दुर्बलोऽत्रावसीदति ।
ब्रह्मणः पदमन्विच्छन् संसारान्मुच्यते शुचिः ॥ ३२॥

स्यूमरश्मिः—

ये भुञ्जते ये ददते यजन्तेऽधीयते च ये ।
मात्राभिर्धर्मलब्धाभिर् ये वा त्यागं समाश्रिताः ॥ ३३॥

एतेषां प्रेत्यभावे तु कतमे स्वर्गजित्तमाः ।

---

1. क—न ब्राह्मणो

एतदाचक्ष्व मे ब्रह्मन् याथातथ्येन पृच्छतः ॥ ३४॥

कपिलः—

परिग्रहाश्शुभास्सर्वे गुणतोऽभ्युदयाश्च ते ।
न तु त्यागसुखं प्राप्ता एवं त्वमपि पश्यसि ॥ ३५॥

स्यूमरश्मिः—

भवन्तो ज्ञाननिष्ठा वै गृहस्था [1]ज्ञाननिश्चयाः ।
आश्रमाणां च सर्वेषां निष्ठायामैक्यमुच्यते ॥ ३६॥

एकत्वे च पृथक्त्वे च विशेषो नान्य उच्यते ।
तद्यथावद्यथान्यायं भगवान् प्रब्रवीतु मे ॥ ३७॥

कपिलः—

कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।
पक्के कषाये विज्ञानं यथा ज्ञानेन तिष्ठति ॥ ३८॥

आनृशंस्यं क्षमा शान्तिर् अहिंसा सत्यमार्जवम् ।
अद्रोहो नातिमानश्च ह्रीस्तितिक्षा शमस्तथा ॥ ३९॥
पन्थानो ब्रह्मणस्त्वेत एतैः प्राप्नोति यत् परम् ॥ ४०

तद्विद्वाननुबुध्येत मनसा कर्मनिश्चयम् ॥ ४०॥

यां विप्रास्सर्वतश्शान्ता विशुद्धज्ञाननिश्चयाः ।
गतिं गच्छन्ति सन्तुष्टास् तामाहुः परमां गतिम् ॥ ४१॥

वेदांश्च वेदितव्यं च विदित्वा च यथास्थितिम् ।

---

1. ख—धर्म ;  ग-घ—कर्म

[1]एवं वेदर्षिदित्याहुर् अतोऽन्ये वेदवादकाः ॥ ४२॥
सर्वं विदुर्वेदविदो वेदे सर्वं प्रतिष्ठितम् ।
वेदे हि निष्ठा सर्वस्य यद्यदस्ति न चास्ति च ॥ ४३॥
एतदन्तं च मध्यं च सच्चासच्च विजानतः ॥ ४४
समाप्तं त्याग इत्येव शम इत्येव निश्चितम् ।
सन्तोष इत्यन्तगतम् अपवर्गे प्रतिष्ठितम् ॥ ४५

ऋतं सत्यं विदितं वेदितव्यं
सर्वस्यात्मा स्थावरं जङ्गमं च ।
सर्वं सुखं यच्छिवं चोत्तरं च
ब्रह्माऽव्यक्तं प्रभवश्चाव्ययश्च ॥ ४६

तेजः क्षमा शान्तिरनामयश्च
तथाविधं व्योम सनातनं ध्रुवम् ।
एतैश्शब्दैर्गम्यते बुद्धिनेत्रैस्
तस्मै नमो ब्रह्मणे ब्राह्मणाय ॥ ४७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥
[ अस्मिन्नध्याये ४७ श्लोकाः ]

---

1. घ—नास्तीदमर्थम्

## ॥ षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति धर्मार्थकामेषु धर्मस्यैव ज्यायस्त्वप्रतिपादक-कुण्डधारचरित्रप्रतिपादनम् ॥

युधिष्ठिरः—

धर्ममर्थं च कामं च वेदाश्शंसन्ति भारत ।
कस्य लाभो विशिष्टोऽत्र तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
कुण्डधारेण यत् प्रीत्या भक्तायोपकृतं पुरा ॥ २

अधनो ब्राह्मणः कश्चित् कामाद्धनमवैक्षत ।
[1]स यज्ञार्थमतोऽर्थी तु तपोऽतप्यत दारुणम् ॥ ३

स निश्चयमथो कृत्वा पूजयामास देवताः ।
भक्त्या न चैवाध्यगच्छद् धनं सम्पूज्य देवताः ॥ ४

ततश्चिन्तां पुनः प्राप्तः कतमद्दैवतं तु तत् ।
यन्मे द्रुतं प्रसीदेत मानुषैरजडीकृतम् ॥ ५

अथ सौम्येन वपुषा देवानुचरमन्तिके ।
प्रत्यपश्यज्जलधरं कुण्डधारमवस्थितम् ॥ ६

दृष्ट्वैव तं महात्मानं तस्य बुद्धिरजायत ।

1. ग—नयज्ञार्थमतोऽर्थी स त ; ख—यज्ञार्थं सततोऽर्थार्थी

अयं मे दास्यति श्रेयो वपुरेतद्धि तादृशम् ॥ ७

सन्निकृष्टश्च देवानां न चान्यैर्मानुषैर्वृतः ।
एष मे दास्यति धनं प्रभूतं शीघ्रमेव च ॥ ८

ततो धूपैश्च गन्धैश्च माल्यैरुच्चावचैरपि ।
बलिभिर्विविधैश्चापि पूजयामास तं द्विजः ॥ ९

ततस्स्वल्पेन कालेन तुष्टो जलधरस्तदा ।
तस्योपकारे नियताम् इमां वाचमुवाच ह ॥ १०

कुण्डधारः—

ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ ११

आशायास्तनयोऽधर्मः क्रोधोऽसूयासुतस्स्मृतः ।
पुत्रो लोभो निकृत्यास्तु कृतघ्नो नार्हति प्रजाम् ॥ १२

भीष्मः—

ततस्स ब्राह्मणस्स्वप्ने कुण्डधारस्य तेजसा ।
अपश्यत् सर्वभूतानि कुशेषु शयितस्तदा ॥ १३

शमेन तपसा चैव भक्त्या [1]च निरुपस्कृतः ।
शुद्धात्मा ब्राह्मणो रात्रौ निदर्शनमपश्यत ॥ १४

मणिभद्रं स तत्रस्थं देवतानां महाद्युतिम् ।
अपश्यत महात्मानं व्यादिशन्तं युधिष्ठिर ॥ १५

---

1. घ—चाद परिष्कृतः

तत्र देवाः प्रयच्छन्ति राज्यानि च धनानि च ।
शुभैः कर्मभिराराद्धाः प्रच्छिन्दन्त्यशुभेषु च ॥ १६

पश्यतामथ यक्षाणां कुण्डधारो महाद्युतिः ।
निष्पत्य पतितो भूमौ देवानां भरतर्षभ ॥ १७

ततस्तु देववचनान्मणिभद्रो महायशाः ।
उवाच पतितं भूमौ कुण्डधार किमिच्छसि ॥ १८

कुण्डधारः—

यदि प्रसन्ना देवा मे भक्तोऽयं ब्राह्मणो मम ।
अस्यानुग्रहमिच्छामि कृतं किञ्चित् सुखोदयम् ॥ १९

भीष्मः—

ततस्तं मणिभद्रस्तु पुनर्वचनमब्रवीत् ।
[1]देवानामेव वचनात् कुण्डधारं महाद्युतिम् ॥ २०

मणिभद्रः—

उत्तिष्ठोत्तिष्ठ भद्रं ते कृतकृत्यस्सुखी भव ।
[2]धनार्थी यदि विप्रोऽयं धनमस्मै प्रदीयताम् ॥ २१

यावद्धनं प्रार्थयते ब्राह्मणोऽयं सखा तव ।
देवानां शासनात् तस्माद् असङ्ख्येयं ददाम्यहम् ॥ २२

भीष्मः—

[3]विचार्य कुण्डधारस्तु मानुष्यफलमध्रुवम् ।

---

1. अ-क—अर्धचतुष्टयं नास्ति
2. ग-घ—नास्तीदमर्धम्  3. घ—अर्धद्वयं नास्ति

तपसे मतिमाधत्त ब्राह्मणस्य यशस्विनः ॥ २३

कुण्डधारः—

[1]नाहं धनानि याचामि ब्राह्मणाय धनप्रद ।
अन्यमेवाहमिच्छामि भक्तायानुग्रहं कृतम् ॥ २४

पृथिवीं रत्नपूर्णां वा महद्वा रत्नसञ्चयम् ।
भक्ताय नाहमिच्छामि भवेदेष तु धार्मिकः ॥ २५

धर्मेऽस्य रमतां बुद्धिर् धर्मं चैवोपजीवतु ।
धर्मप्रधानो भवतु ममैषोऽनुग्रहो मतः ॥ २६

मणिभद्रः—

तथा धर्मफलं राज्यं सुखानि विविधानि च ।
फलान्येवायमश्नातु कायक्लेशविवर्जितः ॥ २७

भीष्मः—

ततस्तमेव बहुशः कुण्डधारो महायशाः ।
अभ्यासमकरोद्धर्मे ततस्तुष्टास्तु देवताः ॥ २८

मणिभद्रः—

प्रीतास्ते देवतास्सर्वा द्विजस्यास्य तथैव च ।
भविष्यते च धर्मात्मा धर्मे चास्य तथा मतिः ॥ २९

भीष्मः—

ततः प्रीतो जलधरः कृतकार्यो युधिष्ठिर ।

---

1. अ-क—अर्धचतुष्टयं नास्ति

ईप्सितं मनसा लब्ध्वा वरमन्यैस्सुदुर्लभम् ॥ ३०

ततोऽपश्यत चीराणि सूक्ष्माणि द्विजसत्तमः ।
[1]न्यस्तानि पार्श्वतो दृष्ट्वा [2]तत्रेमां मतिमागतः ॥ ३१

ब्राह्मणः—

[3]अयं नास्मत्कृतं वेत्ति कोन्वद्यावेत्स्यते कृतम् ।
गच्छामि वनमेवाहं [4]परं धर्मेण जीवितुम् ॥ ३२

भीष्मः—

निर्वेदाद्देवतानां च प्रसादात् स द्विजोत्तमः ।
वनं प्रविश्य सुमहत् तप आरब्धवांस्तदा ॥ ३३

देवतातिथिशेषेण फलमूलाशनो द्विजः ।
धर्मे चापि महाराज रतिरस्योपजायत ॥ ३४

त्यक्त्वा मूलफलं सर्वं पर्णाहारो द्विजोत्तमः ।
पर्णं त्यक्त्वा जलाहारस् तदाऽऽसीत् स द्विजोत्तमः ॥ ३५

वायुभक्षस्तु तत्पश्चाद् अभूद्वर्षगणान् बहून् ।
न चास्य क्षीयते प्राणस् तदद्भुतमिवाभवत् ॥ ३६

श्रद्दधानस्य धर्मे च तपस्युग्रे च वर्ततः ।
कालेन महता तस्य दिव्या दृष्टिरजायत ॥ ३७

---

1. ख—पार्श्वतोऽभ्याशतो न्यस्तान्यथानिर्वेदमागतः । [पाठान्तरम्]
2. ग—ततो निर्वेदमागतः
3. ख—अयं न सुकृतं वेत्ति को न्वग्रे; ग—अयं नस्सुकृतं वेत्ति को न्वन्यो
4. ग—वरं धर्मेण जीवितम्

तस्य बुद्धिः प्रादुरभूद् यदि दद्यामहं धनम् ।
तुष्टः कस्मैचिदेवाहं न मिथ्या तद् भवेन्मम ॥ ३८

[1]ततः प्रहृष्टवदनो भूयश्चारब्धवांस्तपः ।
भूयश्चाचिन्तयत् सिद्धो यत्परं सोऽभिपद्यते ॥ ३९

यदि दद्यामहं राजंस् तुष्टो वै यस्य कस्यचित् ।
स भवेदचिराद्राजा न मिथ्या वाग्भवेन्मम ॥ ४०

तस्य साक्षात् कुण्डधारो दर्शयामास भारत ।
ब्राह्मणस्य तपोयोगात् सौहृदेनापि चोदितः ॥ ४१

समागम्य स तेनाथ पूजां चक्रे यथाविधि ।
ब्राह्मणः कुण्डधारस्य विस्मितश्चाभवन्नृप ॥ ४२

ततोऽब्रवीत् कुण्डधारो दिव्यं ते चक्षुरुत्तमम् ।
पश्य राज्ञां गतिं विप्र लोकांश्चावेक्ष चक्षुषा ॥ ४३

ततो राज्ञां सहस्राणि मग्नानि निरये तदा ।
आरादपश्यद्विप्रस्स दिव्ययुक्तेन चक्षुषा ॥ ४४

कुण्डधारः—

मां पूजयित्वा भावेन यदि त्वं दुःखमाप्नुयाः ।
कृतं मया भवेत् किं ते कश्च तेऽनुग्रहो भवेत् ॥ ४५

पश्य पश्य च भूयस्त्वं कामान्नेच्छेः कथञ्चन ।

---

1. अ-क—अर्धचतुष्टयं नास्ति

स्वर्गद्वारं हि संरुद्धं मनुष्याणां विशेषतः ॥　४६

भीष्मः—

ततोऽपश्यत् स कामं च क्रोधं लोभं भयं मदम् ।
निद्रां तन्द्रीं तथाऽऽलस्यम् आवृत्य पुरुषान् स्थितान् ॥　४७

कुण्डधारः—

एतैर्लोकास्तु संरुद्धा देवानां मानुषाद्भयम् ।
तथैव देववचनाद् विघ्नं कुर्वन्ति सर्वशः ॥　४८

न देवैरननुज्ञातः कश्चिद्भवति धार्मिकः ।
एष शक्नोति तपसा राज्यं दातुं धनानि च ॥　४९

भीष्मः—

[1]ततः पपात शिरसा ब्राह्मणस्तोयधारिणे ।
उवाच चैनं धर्मात्मा महान् मेऽनुग्रहः कृतः ॥　५०

कामभोगानुबन्धेन पुरा ते यदसूयितम् ।
[2]मया स्नेहमविज्ञाय तत्र मे क्षन्तुमर्हसि ॥　५१

क्षान्तमेव मयेत्युक्त्वा कुण्डधारो द्विजर्षभम् ।
परिष्वज्य च बाहुभ्यां तत्रैवान्तरधीयत ॥　५२

ततस्सर्वानिमाँल्लोकान् ब्राह्मणोऽनुचचार ह ।
कुण्डधारप्रसादेन तपसा योजितः पुरा ॥　५३

---

1. अ-क—नास्तीदमर्धम्
2. अ-क—तव

विहायसा च गमनं तथा सङ्कल्पितार्थता ।
धर्माच्छक्यस्तथा योगो योगाच्चैव परा गतिः ॥ ५४

देवता ब्राह्मणास्सन्तो यक्षा मानुषचारणाः ।
धर्मिष्ठं पूजयन्तीह न धनाढ्यं न कामिनम् ॥ ५५

सुप्रसन्ना हि ते देवा यत्ते धर्मे रता मतिः ।
धने सुखकला काऽपि धर्मे तु परमं सुखम् ॥ ५६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५६ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥
॥ अस्मिन्नध्याये ५६ श्लोकाः ॥

---

## ॥ सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति हिंसाहेतुतया यज्ञस्याप्यप्राशस्त्यप्रतिपादकनारदवचनानुवादरूपेण उञ्छवृत्ति ऋषिवृत्तान्तकथनम् ॥

---

युधिष्ठिरः—

बहूनां यज्ञतपसाम् एकार्थानां पितामह ।
[1]धर्मार्थं न सुखार्थार्थं कथं यज्ञस्समाहितः ॥ १

---

1. ख—धर्मार्थानां सुखार्थानां

भीष्मः—

अत्र ते वर्तयिष्यामि नारदेनानुकीर्तितम् ।
उञ्छवृत्तेः पुरावृत्तं यज्ञार्थे ब्राह्मणस्य हि ॥　२

नारदः—

राष्ट्रे धर्मोत्तरे श्रेष्ठे विदर्भेष्वभवद्द्विजः ।
उञ्छवृत्तिर्ऋषिः कश्चिद् स च यज्ञं समादधे ॥　३

श्यामाकमशनं तत्र [1]सूर्यपर्णी सुवर्चला ।
तिक्तं च विरसं शाकं तपसा स्वादुतां गतम् ॥　४

उपगम्य वने पृथ्वीं सर्वभूताविहिंसया ।
अपि मूलफलैरिज्या यज्ञस्स्वर्गपरो मतः ॥　५

तस्य भार्या व्रतकृशा शुचिः पुष्करमालिनी ।
[2]यज्ञपत्नीत्वमानीता सत्यान्नानुविधीयते ॥　६

सा तु शापपरित्रस्ता न स्वभावानुवर्तिनी ।
मायूरजीर्णपर्णानां वस्त्रं तस्याश्च वर्णितम् ॥　७

अकामायाः कृतस्तत्र यज्ञो होत्रनुमार्गतः ।
[3]शुक्रस्य पुनराजातिर् अवध्यानादधर्मवत् ॥　८

तस्मिन् वने समीपस्थो मृगोऽभूत् सहचारिकः ।

---

1. ख-ग—सूतपत्नी ;　घ—सूर्यपत्नी
2. ख—अर्धचतुष्टयं नास्ति
3. ख—शुकस्य ;　ग—शक्रस्य ;　घ—सत्यस्य पुनराजाति

वचोभिरब्रवीत् सत्यं त्वया दुष्कृतकं कृतम् ॥ ९

यदि मन्त्राङ्गहीनोऽयं यज्ञो भवति [1]वैकृतः ।
मा भोः प्रक्षिप होत्रे त्वं गच्छ स्वर्ग[2]मयन्त्रितः ॥ १०

ततस्तु यज्ञे सावित्री साक्षात्तं च न्यमन्त्रयत् ।
निमन्त्रयन्ती प्रत्युक्ता न हन्यां सहवासिनम् ॥ ११

एवमुक्ता निवृत्ता प्राक् प्रवृत्ता यज्ञपावकात् ।
किञ्च दुश्चरितं यज्ञे दिदृक्षुस्सा रसातलम् ॥ १२

स तु बद्धाञ्जलिस्सत्यम् अयाचद्धरिणः पुनः ।
सत्येन सम्परिष्वज्य सन्तुष्टोऽथोच्यतामिति ॥ १३

ततस्स हरिणो गत्वा पदान्यष्टौ न्यवर्तत ।
साधु हिंसय मां सत्य हतो यास्यामि सद्गतिम् ॥ १४

पश्येमा अप्सरसो दिव्या मया दत्तेन चक्षुषा ।
विमानानि विचित्राणि गन्धर्वाणां महात्मनाम् ॥ १५

ततस्स सुचिरं दृष्ट्वा स्पृहालग्नेन चक्षुषा ।
मृगमालोक्य हिंसायां स्वर्गवासं समर्थयत् ॥ १६

स तु धर्मो मृगो भूत्वा बहुवर्षोषितो वने ।
तस्य निष्कृतिमाधत्त न त्वसौ यज्ञसंविधिः ॥ १७

---

1. ख—वैदिकः
2. ख-ग—मतन्त्रितः

तस्य तेन तु भावेन मृगहिंसात्मनस्तदा ।
तपो महत् समुच्छिन्नं तस्माद्धिंसा न याज्ञिया ॥ १८

ततस्तु भगवान् धर्मो यज्ञं याजयत स्वयम् ।
समाधानं च भार्याया लेभे स तपसां वरम् ॥ १९

अहिंसा परमो धर्मो हिंसा यज्ञे समाहिता ।
सत्यं तेऽहं प्रवक्ष्यामि यो धर्मस्सत्यवादिनाम् ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥
[अस्मिन्नध्याये २० श्लोकाः]

## ॥ अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति धर्माचरणस्य श्रेयस्साधनत्वप्रतिपादनम् ॥

युधिष्ठिरः—

कथं भवति पापात्मा कथं धर्मं करोति वा ।
केन निर्वेदमादत्ते मोक्षं वा केन गच्छति ॥ १

भीष्मः—

विदितास्सर्वधर्मास्ते स्थित्यर्थमनुपृच्छसि ।
शृणु मोक्षं सनिर्वेदं पापं धर्मं च मूलतः ॥ २

विज्ञानार्थं हि पञ्चानाम् इच्छा पूर्वं प्रवर्तते ।
प्राप्य तां वर्तते कामो द्वेषो वा भरतर्षभ ॥ ३

ततस्तदर्थं यतते कर्म चारभते पुनः ।
इष्टानां रूपगन्धानाम् अभ्यासं च चिकीर्षति ॥ ४

ततो लोभः प्रभवति [1]द्वेषश्च तदनन्तरम् ।
[2]ततो रागः प्रभवति मोहश्च तदनन्तरम् ॥ ५

लोभमोहाभिभूतस्य रागद्वेषान्वितस्य च ।
न धर्मे जायते बुद्धिर् व्याजाद्धर्मं करोति च ॥ ६
[3]व्याजेन चरतो धर्मम् अर्थव्याजोऽपि रोचते ॥ ६॥

व्याजेन सिद्ध्यमानेषु धर्मेषु कुरुनन्दन ।
[4]तत्रैव कुरुते बुद्धिं ततः पापं चिकीर्षति ॥ ७॥

सुहृद्भिर्वार्यमाणोऽपि पण्डितैश्चापि भारत ।
उत्तरं न्यायसम्बद्धं प्रब्रवीति प्रचोदितः ॥ ८॥

अधर्मस्त्रिविधस्तस्य वर्धते रागमोहजः ॥ ९

पापं चिन्तयते कर्म प्रब्रवीति करोति च ।
तस्याधर्मप्रवृत्तस्य दोषान् पश्यन्ति साधवः ॥ १०

---

1. ख—दोषाश्च ; घ—मोहश्च
2. ख-ग—नास्तीदमर्धम्
3. ख—नास्तीदमर्धम्
4. घ—नास्तीदमर्धम्

एकशीलाश्च मित्रत्वं भजन्ते पापकर्मिणः ।
स नेह सुखमाप्नोति कुत एव परत्र वै ॥                ११

एवं भवति पापात्मा धर्मात्मानं तु मे शृणु ॥                ११॥

[1]यथा कुशलधर्मा सन् कुशलं प्रतिपद्यते ।
य एतान् प्रज्ञया दोषान् पूर्वमेवानुपश्यति ॥                १२॥

कुशलस्सुखदुःखेषु साधूंश्चाप्युपसेवते ।
तस्य साधु समाचाराद् अभ्यासाच्चैव वर्धते ॥                १३॥

प्रज्ञा धर्मे च रमते धर्मं समुपजीवति ।
सोऽथ धर्मादवाप्तेषु धनेषु कुरुनन्दन ॥                १४॥

तस्यैवासिञ्चते मूलं गुणान् पश्यति यत्र च ।
धर्मात्मा भवति ह्येवं मित्रं च लभते शुभम् ॥                १५॥

स मित्रधनलाभात्तु प्रेत्य चेह च नन्दति ।
[2]शब्दे स्पर्शे तथा गन्धे रसे रूपे च भारत ॥                १६॥

प्रभुत्वं लभते जन्तुर् धर्मस्यैतत्फलं विदुः ।
स तु धर्मफलं लब्ध्वा न तृप्यति युधिष्ठिर ॥                १७॥

धर्मे स्थितानां कौन्तेय सर्वभोगक्रियासु च ।
अतृप्यमाणो निर्वेदम् आदत्ते ज्ञानचक्षुषा ॥                १८॥

---

1. अ-क—अर्धचतुष्टयं नास्ति
2. ब—अर्धदशकं नास्ति

प्रज्ञाचक्षुर्यदा कामे दोषमेवानुपश्यति ॥ १९

[1]शब्दे स्पर्शे तथा रूपे रसे गन्धे च भारत ।
विरज्यते तदाऽकामो न च धर्मं विमुञ्चति ॥ २०

सर्वत्यागे च यतते दृष्ट्वा लोकं क्षयात्मकम् ।
ततो मोक्षे च यतते नानुपायादुपायतः ॥ २१

शनैर्निर्वेदमादत्ते पापं कर्म जहाति च ।
धर्मात्मा चैव भवति मोक्षं च लभते परम् ॥ २२

एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि ।
पापं धर्मं तथा मोक्षं निर्वेदं चैव भारत ॥ २३

तस्माद्धर्मे प्रवर्तेथास् सर्वावस्थो युधिष्ठिर ।
धर्मे स्थितानां कौन्तेय सिद्धिर्भवति शाश्वती ॥ २४

**इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥ ॥ ८८ ॥ मोक्षधर्मपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥**

**[अस्मिन्नध्याये २४ श्लोकाः]**

---

1. ख—नास्तीदमर्धम्

## ॥ एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति मोक्षोपायप्रतिपादनम् ॥

युधिष्ठिरः—

मोक्षः पितामहेनोक्त उपायान्नानुपायतः ।
तमुपायं यथान्यायं श्रोतुमिच्छामि भारत ॥ १

भीष्मः—

त्वय्येवैतन्महाप्राज्ञ युक्तं निपुणदर्शनम् ।
यदुपायेन सर्वार्थान् नित्यं मृगयसेऽनघ ॥ २

[1]घटस्य करणे या बुद्धिर् घटोत्पत्त्यां न साऽनघ ।
एवं धर्माभ्युपायेषु नान्यद्धर्माद्धि कारणम् ॥ ३

पूर्वे समुद्रे यः पन्थास् स न गच्छति पश्चिमम् ।
एकः पन्था हि मोक्षस्य तं मे विस्तरतश्शृणु ॥ ४

क्षमया क्रोधमुच्छिन्द्यात् कामं सङ्कल्पवर्जनात् ।
सत्त्वसंसेवनाद्धीरो निद्रामुच्छेत्तुमर्हति ॥ ५

अप्रमादाद्भयं रक्षेच् छ्वासं क्षेत्रज्ञशीलनात् ।
इच्छां द्वेषं च कामं च धैर्येण विनिवर्तयेत् ॥ ६

---

1. ग—करणे घटस्य या बुद्धिर्घटोत्पत्त्यां न सा घटे ।
घ—क्षीणो घटस्य वा बुद्धिः घटोत्पत्त्यां तु तामसाः ।

[1]सर्वं प्रमोहमावर्तम् अभ्यासाद्विनिवर्तयेत् ।
निद्रां चाप्रतिभां चैव ज्ञानाभ्यासेन तत्त्ववित् ॥ ७

उपद्रवांस्तथा रोगान् हितजीर्णमिताशनात् ।
लोभं मोहं च सन्तोषाद् विषयांस्तत्त्वदर्शनात् ॥ ८

अनुक्रोशादधर्मं च जयेद्धर्ममुपेक्षया ।
आयत्या च जयेदाशाम् अर्थं सङ्गविवर्जनात् ॥ ९

अनित्यत्वेन च स्नेहं क्षुधं योगेन पण्डितः ।
कारुण्येनात्मनो मानं तृष्णां च परितोषतः ॥ १०

उत्थानेन जयेत्तन्द्रीं [2]विवक्षां मूलतो जयेत् ।
मौनेन बहुभाषां च शौर्येण च भयं त्यजेत् ॥ ११

यच्छेद्वाङ्मनसी बुद्ध्या तां यच्छेज्ज्ञानचक्षुषा ।
ज्ञानमात्मा महान् यच्छेत् [3]तं यच्छेज्ज्ञानमात्मनः ॥ १२

तदेवमुपशान्तेन बोद्धव्यं शुचिकर्मणा ।
योगदोषान् समुच्छिन्द्यात् पञ्च यान् कवयो विदुः ॥ १३

कामं क्रोधं च [4]मोहं च भयं स्वप्नं च पञ्चमम् ।
परित्यज्य निषेवेत तथेमान् योगसाधनान् ॥ १४

---

1. ख—भ्रमं ; ग—श्रमं ; घ—नास्तीदमर्धम्
2. ख-ग—वितर्कान्निश्चयाज्जयेत्
3. ख—च्छान्ति ; ग—यच्छेच्छान्त्या तमात्मनः
4. ख-ग-घ—लोभं

[1]ध्यानमध्ययनं दानं सत्यं ह्रीरार्जवं क्षमा ।
शौचमाहारसंशुद्धिर् इन्द्रियाणां च संयमः ॥　　१५

एतैर्विवर्धते तेजः पाप्मानमपहन्ति च ।
सिध्यन्ति चास्य सङ्कल्पा विज्ञानं च प्रवर्तते ॥　　१६

धूतपापस्स तेजस्वी लघ्वाहारो जितेन्द्रियः ।
कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदम् ॥　　१७

अमूढत्वमसङ्गित्वं कामक्रोधविवर्जनम् ।
अदैन्यमनुदीर्णत्वम् अनुद्वेगो व्यवस्थितिः ॥　　१८

एष मार्गो हि मोक्षस्य प्रसन्नो विमलश्शुचिः ।
तथा [2]विधेयो मनसा नियमः कापथोऽन्यथा ॥　　१९

**इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥ २५९ ॥**
**॥ ८८ ॥ मोक्षधर्मपर्वणि एकादशाधिकशततमोऽध्यायः ॥ १११ ॥**
**[ अस्मिन्नध्याये १९ श्लोकाः ]**

---

1. अ-क—दम
2. ख-ग—वाक्कायमनसा

## ॥ षष्ठ्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति भूतोत्पत्तिविनाशादिप्रतिपादकदेवलनारद-संवादानुवादः ॥

भीष्मः—

अत्रैवोदाहरन्तीमम् इतिहासं पुरातनम् ।
नारदस्य च संवादं देवलस्यासितस्य च ॥ १

असितं देवलं वृद्धं बुद्ध्वा बुद्धिमतां वरम् ।
नारदः परिपप्रच्छ भूतानां प्रभवाप्ययौ ॥ २

नारदः—

कुतस्सृष्टमिदं विश्वं जगत् स्थावरजङ्गमम् ।
प्रलये च किमप्येति भगवान् प्रब्रवीतु मे ॥ ३

देवलः—

येभ्यस्सृजति भूतानि कालोऽह्नायप्रचोदितः ।
महाभूतानि पञ्चेति तान्याहुर्भूतचिन्तकाः ॥ ४

एभ्यस्सृजति भूतानि काल आत्मप्रचोदितः ।
एतेभ्यो [1]यत् परं ब्रूयाद् असद्ब्रूयादसंशयम् ॥ ५

विद्धि नारद पञ्चैताञ् शाश्वतानचलान् ध्रुवान् ।

1. ख-ग—यः

महतस्तेजसो रश्मीन् कालषष्ठान् स्वभावतः ॥ ६

आपश्चैवान्तरिक्षं च पृथिवी पावकानिलौ ।
[1]असद्धि परमेतेभ्यो भूतेभ्यो मुक्तसंशयम् ॥ ७

सोपपत्त्या तु युक्त्यासन् ब्रूयादसदसंशयम् ॥ ७॥

वेत्थ तानभिनिर्वृत्तान् षडेते तस्य रश्मयः ।
पञ्च चैतानि कालश्च भावाभावौ च केवलौ ॥ ८॥

अष्टौ भूतानि भूतानां शाश्वतानि भवाप्ययौ ॥ ९

अभावभावितेष्वेषु तेभ्यश्च प्रभवन्त्यपि ।
विनष्टोऽपि च तान्येव जन्तुर्भवति पञ्चधा ॥ १०

तस्य भूमिमयो देहश् श्रोत्रमाकाशसम्भवम् ।
सूर्याच्चक्षुरसुर्वायोर् अद्भ्यस्तु खलु शोणितम् ॥ ११

चक्षुषी नासिका कर्णौ त्वग् जिह्वेति च पञ्चमी ।
इन्द्रियाणीन्द्रियार्थानां ज्ञानानि कवयो विदुः ॥ १२

---

1. अ-क—अर्धचतुष्टयं नास्ति

ख—असिद्धिः परमेतेभ्यो मुक्त एव न संशयः ।
वेत्थ तानभिनिर्वृत्तान् षडेते तस्य रश्मयः ॥
पञ्चैव तानि भूतश्च भावाभावौ च केवलौ ।  [पाठान्तरम्]

घ—आसीद्धि परमेतेभ्यो भूतेभ्यो मुक्तिसंशयम् ।
सोपपत्त्या न युक्त्यासन् ब्रूयात्सददसंशयन् ॥
वेदानामपि निर्वृत्तान् षडेते तस्य रश्मयः ।
पञ्चभूतानि कालं च भावाभावौ च केवलौ ॥  [पाठान्तरम्]

दर्शनं श्रवणं घ्राणं स्पर्शनं रसनं तथा ।
उपपत्त्या गुणान् विद्धि पञ्च पञ्चसु पञ्चधा ॥ १३

रूपं गन्धो रसस्स्पर्शश् शब्दश्चैवाथ तद्गुणाः ।
इन्द्रियैरुपलभ्यन्ते पञ्चधा पञ्च पञ्चभिः ॥ १४

[1]रूपगन्धरसस्पर्शशब्दांश्चैतांश्च तद्गुणान् ।
इन्द्रियाणि न बुध्यन्ते क्षेत्रज्ञस्तैस्तु बुध्यते ॥ १५

चित्तमिन्द्रियसङ्घातात् परं तस्मान्मनः परम् ।
मनसस्तु परा बुद्धिः क्षेत्रज्ञो बुद्धितः परः ॥ १६

पूर्वं चेतयते जन्तुर् इन्द्रियैर्विषयान् पृथक् ।
विचार्य मनसा पश्चाद् अथ बुद्ध्या व्यवस्यति ॥ १७

इन्द्रियैरुपलभ्यार्थान् मत्वाऽयं त्वध्यवस्यति ॥ १७॥

चित्तमिन्द्रियसङ्घातं मनो बुद्धिं तथाऽष्टमीम् ।
अष्टौ ज्ञानेन्द्रियाण्याहुर् एतान्यध्यात्मचिन्तकाः ॥ १८॥

पाणिं पादं च पायुं च मेहनं पञ्चमं मुखम् ।
इति संशब्द्यमानानि पञ्च कर्मेन्द्रियाण्यपि ॥ १९॥

जल्पनाभ्यवहारार्थं मुखमिन्द्रियमुच्यते ।
गमनेन्द्रियं तथा पादौ कर्मणां करणे करौ ॥ २०॥

---

1. ख-ग—रूपं गन्धं रसं स्पर्शं शब्दं चैतांस्तु तद्गुणान् । [पाठान्तरम्]

पायूपस्थौ विसर्गार्थम् इन्द्रिये तुल्यकर्मणी ।
विसर्गे च पुरीषस्य विसर्गे चापि कामिके ॥ २१॥

मनःषष्ठान्यथैतानि वाचा सम्यग्यथागमम् ।
ज्ञानचेष्टेन्द्रियगुणास् सर्वेषां शब्दिता मया ॥ २२॥

इन्द्रियाणां स्वकर्मभ्यश् श्रमादुपरमो यदा ।
भवतीन्द्रियसंन्यासाद् अथ स्वपिति वै नरः ॥ २३॥

इन्द्रियाणामुपरमे मनोऽनुपरतं यदि ।
सेवते विषयानेव तद्विद्यात् स्वप्नदर्शनम् ॥ २४॥

सात्त्विकाश्चैव ये भावास् तथा राजसतामसाः ।
कर्मयुक्तान् प्रशंसन्ति सात्त्विकान्नेतरांस्तथा ॥ २५॥

आनन्दः कर्मणां सिद्धिः प्रतिपत्तिः परा गतिः ।
सात्त्विकस्य निमित्तानि भावान् संश्रयते स्मृतिः ॥ २६॥

जन्तुष्वेकतमेष्वेवं भावं यो हि समाश्रितः ।
भावयोरीप्सितं नित्यं प्रत्यक्षं गमनं द्वयोः ॥ २७॥

इन्द्रियाणि च भावाश्च गुणास्सप्तदश स्मृताः ।
तेषामष्टादशो देही यश्शरीरे स शाश्वतः ॥ २८॥

अथ वा सशरीरास्ते गुणास्सर्वे शरीरिणाम् ।
संश्रितास्तद्वियोगे हि सशरीरा न सन्ति ते ॥ २९॥

[1]अथवा संविभागेन शरीरं पाञ्चभौतिकम् ।
[2]एकश्च दश चाष्टौ च गुणास्सह शरीरिणः ॥ ३०॥

ऊष्मणा सह विंशेन सङ्घातः पाञ्चभौतिकम् ।
महान् सन्धारयत्येतच्छरीरं वायुना सह ॥ ३१॥

तस्यास्य भावयुक्तस्य निमित्तं देहभेदने ॥ ३२

यथैवोत्पद्यते किञ्चित् पञ्चत्वं गच्छते तथा ।
पुण्यपापविनाशान्ते पुण्यपापसमन्वितः ॥ ३३
देहं विशति कालेन ततोऽयं कर्मसम्भवम् ॥ ३३॥

हित्वा हित्वा ह्ययं प्रैति देहाद्देहं कृताश्रयः ।
कालसञ्चोदितः क्षेत्री विशीर्णाद्वा गृहाद्गृहम् ॥ ३४॥

तं तु नैवानुतप्यन्ते प्राज्ञा निश्चितनिश्चयाः ।
कृपणास्त्वनुतप्यन्ते जनास्सम्बन्धिमानिनः ॥ ३५॥

न ह्ययं कस्यचित् कश्चिन्नास्य कश्चन विद्यते ।
भवत्येको ह्ययं नित्यं शरीरे सुखदुःखभाक् ॥ ३६॥

नैव सञ्जायते जन्तुर् न च जातु विपद्यते ।
याति देहमयं हित्वा कदाचित् परमां गतिम् ॥ ३७॥

पुण्यपापमयं देहं क्षपयेत् कर्मसंश्रयात् ।

---

1. ग—अर्धपञ्चकं नास्ति
2. घ—महान्तं धारयत्येव शरीरं पञ्चभौतिकम् । [अधिकः पाठः]

क्षीणदेहः पुनर्देही ब्रह्मत्वमुपगच्छति ॥ ३८॥

पुण्यपापक्षयार्थं च साङ्ख्यं ज्ञानं विधीयते ।
तत्क्षये हृदि पश्यन्ति ब्रह्मभावे परां गतिम् ॥ ३९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥
[अस्मिन्नध्याये ३९॥ श्लोकाः]
[शान्तिपर्वणि द्वितीयसम्पुटं समाप्तम्]

---

अस्मिन् सम्पुटे श्लोकाः ५७५९॥ वाक्यानि ५०

---

अतः परं शान्तिपर्वणि तृतीयसम्पुटं भविष्यति तस्यायमाद्यः श्लोकः—

भ्रातरः पितरः पौत्रा ज्ञातयस्सुहृदस्तथा ।
अर्थहेतोर्हताः क्रूरैर् अस्माभिः पापबुद्धिभिः ॥

इति

---

Printed by
V. Venkateswara Sastrulu of V. Ramaswamy Sastrulu &.Sons
at the Vavilla Press, Madras.—1936.

॥ श्रीः ॥

# महाभारतशान्तिपर्वद्वितीयसम्पुटस्थानामशुद्धानां शोधनम् ॥

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ६७६ | १७ | कुशलस् | कुशलास् |
| ६९० | १८ | दिवाकीर्ति | दिवाभीति |
| ६९६ | १८ | कस्यश्चिन्ना | कस्यचिन्ना |
| ७२२ | १८ | प्रश्यति | पश्यति |
| ७३६ | १४ | बुद्ध्व | बुद्ध्वा |
| ८११ | १४ | ऽहिंसता | ऽहिंसया |
| ८२७ | ७ | धरांचैव | धरांश्चैव |
| ८३९ | ३ | ब्रह्मणामिव | ब्रह्माणमिव |
| ,, | १२ | निर्हृते | निर्वृत्ते |
| ८४० | १ | यो | यो यो |
| ,, | १४ | कृतः | कुतः |
| ८४४ | २ | ससिद्धः | स सिद्धः |
| ८४७ | १३ | संस्मरति | न संस्मरति |
| ८६१ | १४ | ह्यमावास्यां | ह्यमावास्याम् |
| ८६८ | १३ | प्रीतितः | प्रीणितः |
| ९०७ | ११ | गाथा | गाथाश् |
| १०२१ | १० | वाच्छति | वाञ्छति |
| ९७९ | १९ | वाक्यानि १६ | वाक्यानि १७ |
| ९८४ | १८ | २८ श्लोकाः | २६ श्लोकाः ५ वाक्यानि |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| १०५९ | ७ | भगवाँल्लोक | भगवांल्लोक |
| १०८० | २ | चूरं | दूरं |
| ११०५ | ८ | चर्तुभिर् | चतुर्भिर् |
| ,, | ९ | पिताम्बरेण | पीताम्बरेण |
| ११२१ | १ | विश्रुद्धं | विशुद्धं |
| ११३५ | १० | निराश्श्रयः | निराश्रयः |
| ११६६ | ६ | येनैदं | येनेदं |
| ११९१ | १० | विक्ष्य | वीक्ष्य |
| १२१८ | १८ | स्वलु | खलु |
| १३०७ | १२ | ब्रह्मचर्यानुसूयकः | ब्रह्मचर्यानसूयकः |
| १३६५ | १४ | पितृनपि | पितॄनपि |
| १३६९ | १० | तस्मात् तत्वं | तस्मात्त्वं |
| १३७३ | १२ | ऽपहरंस्तेनः | ऽपहरन्स्तेनः |